# श्रीरामानन्दाचार्यजी के मतानुसार पदार्थ-विभाग




जगद्गुरुश्रीरामानन्दाचार्यपीठों के आराध्य देव

वेदप्रतिपाद्य उभयविभूतिनायक

## सर्वेश्वरश्रीसीतारामजी



**जगद्गुरुश्रीरामानन्दाचार्यपीठ**


विश्रामद्वारका
श्रीशेषमठ-शींगडा
पोरबन्दर-सौराष्ट्र फोन-२२७९५५८

श्रीकोसलेन्द्रमठ
पो. पालडी सरखेज रोड
अहमदाबाद-७ फोन-२६६०१००१

मनोकामनासिद्धश्रीहनुमानजी




## जगद्गुरुश्रीरामानन्दाचार्यपीठ

विश्रामद्वारका
श्रीशेषमठ-शींगडा
पोरबन्दर-सौराष्ट्र फोन-२२७९५५८



श्रीकोसलेन्द्रमठ
पो. पालडी सरखेज रोड
अहमदाबाद-७ फोन-२६६०१००१

**यह दिव्यश्रीविग्रह श्रीनरेन्द्रभाई पण्ड्याजी परिवार के सौजन्य से छपा है**



प्रस्थानत्रयानन्दभाष्यकार जगद्गुरुश्रीरामानन्दाचार्यजी



माघकृष्णसप्तमी १३५६-१५३२ चैत्रशुक्लनवमी

## जगद्गुरुश्रीरामानन्दाचार्यपीठ

विश्रामद्वारका
श्रीशेषमठ-शींगडा
पोरबन्दर-सौराष्ट्र फोन-२२७९५५८



श्रीकोसलेन्द्रमठ
पो. पालडी सरखेज रोड
अहमदाबाद-७ फोन-२६६०१००१

**यह आचार्यश्री का श्रीविग्रह शीयरकेमीकल इन्डस्ट्रीज अहमदाबाद के सौजन्य से छपा है**



आनन्दभाष्यसिंहासनासीन

जगद्गुरुश्रीरामानन्दाचार्यश्रीरामेश्वरानन्दाचार्यजी



जगद्गुरुश्रीरामानन्दाचार्यपीठ

विश्रामद्वारका
श्रीशेषमठ–शींगडा
पोरबन्दर–सौराष्ट्र फोन–२२७९५५८

श्रीकोसलेन्द्रमठ
पो. पालडी सरखेज रोड
अहमदाबाद–७ फोन–२६६०१००१

यह आचार्यश्री का श्रीविग्रह शीयरकोम्युनीकेशन के सौजन्य से छपा है



सर्वेश्वर श्रीसीतारामाभ्यां नमः

श्रीहनुमते नमः

आनन्दभाष्यकार जगद्गुरुश्रीरामानन्दाचार्यप्रणीतः

# श्रीवैष्णवमताब्जभास्करः

श्रीमहन्तं श्रुतिवेद्यमद्भुतगुणग्रामाग्ग्ररत्नाकरं
प्रेयः स्वेक्षणसंसुलज्जितमहीजाताक्षिकोणेक्षितम् ।
भक्ताशेषमनोभिवाञ्छितचतुर्वर्गप्रदं स्वर्द्रुमं
रामं स्मेरमुखांबुजं शुचिमहानीलाश्मकान्तिं भजे ॥१॥

आनन्दभाष्यसिंहासनासीन

जगद्गुरुश्रीरामानन्दाचार्यश्रीरामेश्वरानन्दाचार्यकृता

प्रभा

प्रस्थानत्रयानन्दभाष्यकाराय नमोनमः

सीतारामसमारम्भां रामानन्दार्यमध्यमाम् ।
रामप्रपन्नगुर्वन्तां वन्दे गुरुपरम्पराम् ॥

अथ समस्तहेयरहितानन्तकल्याणगुणमहोदधिर्दयालुः सर्वशरीरी सर्वान्तरात्मा सर्वेश्वरो भगवान् श्रीसीतानाथः परमेश्वरप्रसारितवेदमार्ग विमुखानतएवाधर्मोन्मुखान् दुःखिनो जीवानवलोक्य तदुद्धारकामनया भुवि श्रीरामानन्दाचार्यरूपेणावततार । 'रामानन्दः स्वयं रामः प्रादुर्भूतो महीतले' इति स्मृतेः । स च श्रीरामानन्दाचार्यो बाल्यादेव तीक्ष्णबुद्धिर्वाराणसीस्थश्रीमठाध्यक्षजगद्गुरुश्रीराघवानन्दाचार्यगुरुचरणमध्यास्य तत्र लब्धसाङ्गवेदवेदान्तविद्यो दुःखिनो जीवनिवहस्योद्धाराय विशिष्टबुधजनैकगम्य प्रसादगुणगुम्फितं प्रस्थानत्रयानन्दभाष्यं निर्माय स्वशिष्यान्यतमजगद्गुरुश्रीसुरसुरानन्दाचार्यं निमित्तीकृत्य सर्वसाधारणजनोपकृतये अचिच्चिदीश्वरात्मकतत्त्वत्रयादिनिरूपणपरकं 'श्रीवैष्णवमताब्जभास्कर' नामकं ग्रन्थमचीकरोत् । तस्य ग्रन्थरत्नस्य निर्विघ्नपूर्वकं परिसमाप्तये शिष्टाचारपरम्पराप्राप्तस्वेष्टदेवतानमस्काररूपमङ्गलमारचय्य

शिष्यशिक्षायै ग्रन्थरूपेण निबध्नाति 'श्रीमन्तम्' इत्यादि । ननु यथा दण्डकपाला दिसमवधाने तदव्यवहितोत्तरं घटादिकार्यस्य भवति समुत्पत्तिस्तदभावेऽर्थात् दण्डादिकारणाभावे घटादिकार्यस्योत्पत्तिर्न भवतीत्यन्वयव्यतिरेकाभ्यां घटादि कार्यंप्रति दण्डादेः कारणतानिर्णिता भवति । तद्वदेव प्रकृते यदि मङ्गलसद्भावे विघ्नध्वंसो ग्रन्थसमाप्तिर्वा भवेत्तदामङ्गलस्य समाप्तिं प्रति कारणता सिद्ध्येत् ? परन्तु प्रकृते दार्ष्टान्तिके कादंबर्यादिग्रन्थे मङ्गलस्य सत्वेऽपि समाप्तिरूपकार्यस्या भावात्, तथा मङ्गलविरहे बौद्धीयकिरणावल्यादौ कार्यसमाप्तिदर्शनेनान्वयव्यति रेकव्यभिचारान्मङ्गलस्य ग्रन्थसमाप्तिकारणत्वे विघ्नध्वंसत्वे वा न सफलत्वं तद भावे च तदाचरणं न कर्तव्यं जलताडनादिवदिति चेत्तत्रोच्यते-भावानवबोधात् प्रात्यक्षिकस्थलेऽन्वयव्यतिरेकव्यभिचारनिश्चयस्य प्रतिबन्धकत्वं भवति । अनु मितौ तु संशयपक्षतासम्पादकविधया कारणत्वेन तदङ्गत्वमिति न तस्य प्रतिबन्ध कत्वमपितु कारणत्वमेव । तथा चानुमानादेव समाप्तिसाधनं सफलत्वसाधनद्वा रेण भवति । तथाहि 'मङ्गलं सफलम् अविगीतशिष्टाचारत्वात् दर्शादिवत् । यथा दर्शादौ अनिन्दितशिष्टाचारविषयत्वमिति तत्र हेतुव्यापकसाध्यसद्भावोऽपि प्रसि द्ध्यति, यथा वा धूमसद्भावाद् धूमध्वजस्य पर्वतादौसद्भावः प्रसिद्ध्यति, तथैव प्रकृतेमङ्गलेविगीतशिष्टाचारहेतु सद्भावात्सफलत्वमपि प्रसिद्ध्यति पर्वतो वह्नि मान् इति संशयत्वे तद्बलात्पर्वते वह्निसिद्धिस्तादृशपक्षतारूपत्वात् तद्वत्प्रकृतेऽपि व्यभिचारदर्शने तस्य शंसयरूपत्वेन ततः सफलत्वरूपसाध्यस्य मङ्गलपक्षे सिद्धिर्भवत्येवेति ।

ततश्च प्रदर्शितानुमानेन मङ्गलस्य सफलत्वे सिद्धे-किं तस्य फलमिति जि ज्ञासायाम्-यत्र फलं न श्रूयते तत्र विश्वजिन्न्यायात् स्वर्गः फलं कल्पितं भवतीति मङ्गलफलं स्वर्गादिकमिति न वक्तव्यम् दृष्टफलस्य सम्भवत्वे स्वर्गादिकालान्तर भाविनः फलस्याकल्पनात् । दृष्टफलेऽपि न पुत्रपश्वादिरूपस्य सिद्धिः किन्तू पस्थितत्वात् प्रबन्धसमाप्तिरेव फलं मङ्गलस्येति । एवञ्च यत्र मङ्गलं न दृश्यते तत्र जन्मान्तरीयमङ्गलस्यानुमानं भवति । यत्र सत्यपि मङ्गले न समाप्तिस्तत्रविघ्नबा हुल्यमेव कल्पनीयम् ।

मङ्गलस्य साक्षात्फलं ग्रन्थसमाप्तिर्विघ्नध्वंसस्तु तज्जन्यत्वे सति तज्जन्य



जनकत्वात्मकव्यापाररूपमेव । अर्थात् गौणं फलं विघ्नविनाशो मुख्यञ्च ग्रन्थ समाप्तिः । यथा दण्डव्यापारस्य गौणं फलं चक्रचालनं मुख्यञ्च घटोत्पादस्तद्वत् प्रकृते मङ्गलस्य गौणफलं विघ्नविनाशनं तद् द्वारा मुख्यं फलं समाप्तिरेवेति प्रा चीनमतम् । उपाध्यायगंगेशप्रभृतिकनवीनास्तु मङ्गलस्य मुख्यं फलं विघ्नविनाश एव न तु समाप्तिः । न च तर्हिसमाप्तेरकारणकत्वमाकस्मिकत्वं वा स्यादिति वाच्यम् बुद्धिप्रतिभादिकारणसामग्र्यैव तन्निष्पत्तेः ।

अर्थात् मङ्गलं मङ्गलकर्तारं विघ्नरहितं करोति ततः स बुद्ध्यादिकारण समुदायेन समाप्तिरूपं कार्यं सम्पादयति । अन्यथा अल्पाधीतोपि द्वित्रान् मङ्गल श्लोकान् निर्माय तद्बलेन बहुभोग्यतासाध्यं ग्रन्थं समापयेत् । नत्वेवं क्वचित्सम्भ वति । मङ्गलं विघ्नध्वंसमात्रं करोति समाप्तिस्तु तदितरतत्तत्कारणसाध्येति । न चैवं यस्य पुण्यशालिनो जनस्य पापलक्षणविघ्नो नास्ति स्वभावत एव तादृश पुरुषेण सम्पादितमङ्गलस्य नैरर्थक्यमापद्येत । यतस्तत्र मङ्गलनाश्य विघ्नस्य स्व भावविशेषादेवाभावादितिवाच्यम्-तादृशस्थलविशेषे मङ्गलनैरर्थक्यस्येष्टत्वात् । न च तथा सति 'विघ्नध्वंसकामो मङ्गलमाचरेत्' इति शिष्टानुमितमङ्गलकर्तव्य तावोधकवेदस्यानर्थक्यं स्यादिति वाच्यम् सति विघ्नेतन्नाशस्यैव वेदबोधि- तत्वात् । अर्थात् यदि विघ्नः स्यात् तदामङ्गलकरणेन तन्नाशः स्यात् । अत एव पापभ्रमात् कृतस्य तादृशपापविनाशकप्रायाश्चित्तानुष्ठानस्य साफल्यं तद्बोधकवे दस्य प्रामाण्यञ्च । यदि वस्तुतः पापं नास्ति तदा कृतं प्रायश्चित्तं न फलाय न च तावता प्रायश्चित्तबोधकवेदस्याप्रामाण्यम् । यदर्थं प्रापश्चित्तानुष्ठानं तन्निमित्त भूतस्य तस्य पापस्यैवाभावात् । अयं भावः-प्रतियोगिता सम्बन्धेन नाशं प्रति तादात्म्य सम्बन्धेन प्रतियोगिनः कारणत्वमिति नियमः । यथा यत्र घटध्वंसो भवति, स ध्वंसः प्रतियोगिता सम्बन्धेन घटे उत्पद्यते तत्र घटे तादात्म्य सम्ब न्धेन घटस्य विनाशप्रतियोगिनो घटस्य विद्यमानत्वात् । तत्र विनाशग्रस्यो घट एव भवन् विपद्यते नान्यो घटः पटादिर्वा विनश्यति । कुतः ? घटान्तरस्य पटा देव तादृशध्वंसाप्रतियोगित्वात् । अतो ध्वंसप्रकृतसमये प्रतियोगिनः सत्वमवश्य मेव भाव्यम् अन्यथा कस्य विनाशः स्यात् । एवञ्च यदि यत्र विघ्नो भवेत्तदैव तत्रत्यविघ्नविनाशः नान्यथा । न वा पापभ्रमजनितकृतप्रायश्चित्तस्थलीयवेदवत्

प्रकृते वेदस्याप्रामाण्यमिति । तस्मात् विघ्नविरहस्थले नावश्यकता मङ्गलस्य न वा तद्बोधकवेदाप्रामाण्यशङ्केति ।

एवञ्च विघ्नविनाशपूर्वकारब्धग्रंथस्य समाप्तिकामनया शिष्टाचारपरिप्राप्तं मङ्गलमकरोदाचार्यः । तत्र यथा-मङ्गलं विघ्नविनाशकं तथा श्रीहनुमत् स्तवादि नापि तादृशविघ्नादिविनाशो भवति । क्वचित्तु प्रायश्चित्तेन क्वचिच्च प्रयागादौ सुवर्णदानादिनापि विघ्नविनाशो भवत्येव । क्विचित्तु विघ्नात्यंताभाव एव समाप्तिसाधनं, यतः प्रतिबन्धकसंसर्गाभावस्य कार्यजनकत्वात् । अयमाशयः-यत् कार्यं प्रति यः प्रतिबन्धकः कार्योत्पातविरोधी तस्य विरोधिनः संसर्गाभावः कारणं भवतीति नियमः । यथा सत्यपि वह्नीन्धनादिसंवलेन चन्द्रकान्तमणेः समवधाने सति दाहरूपं कार्यं न भवति, परन्तु यदि तत्र चन्द्रकान्तमणेरभावो यदा भवति तदा तेनैव वह्नीन्धनादिना दाहो जायते इति लोकसिद्धम् । तत्र यदि वह्नीन्धनादिसम्बलनस्थले चन्द्रकान्तमणेः प्रागभावो भवति । अर्थात् कालान्तरे आगमिष्यति मणिस्तदापि दाहकार्यं भवति । यदि वा मणेर्विनाशो जातस्तदापि संसर्गाभावान्तर्गतविनाशसत्वेन दाहो भवन् दृष्टः । अथवा यत्र चन्द्रकान्तमणेरत्यन्तभावो भवति तदापि दाहो भवत्येवेति प्रतिबन्धकप्रागभावध्वंसात्यन्ताभावानां समानरूपेण कारणत्वदर्शनात् । तद्वत् प्रकृते प्रतिबन्धकविघ्नस्य प्रागभावप्रध्वंसात्यन्ताभावेष्वन्यतमस्यापि सद्भावस्तदा समाप्तिर्भवत्येवेति । यत्र मङ्गलसत्वेपि समाप्तेरभावस्तत्र विघ्नप्राचुर्यं बोध्यम् । यत्र तु मङ्गलाभावेपि समाप्तिर्दृश्यते तत्र जन्मान्तरीयमङ्गलसद्भावोऽनुमातव्यः, नास्तिकात्मा जन्मान्तरीयमङ्गलवान् ग्रन्थसमाप्तिदर्शनात् । अथवा स्वतः सिद्धविघ्नाभावो वा तत्रानुमातव्यः, नास्तिकात्मा स्वतः सिद्धविघ्नविरहवान् ग्रन्थसमाप्तिदर्शनात् । अधिकमन्यत्रानुसन्धेयमितिसंक्षेपः ।

ननु प्रकृते आचार्येण सर्वेश्वरश्रीरामनमस्कारात्मकं मङ्गलं कृतम्, परन्तु तन्नयुक्तम्, नमस्कार्यपरमेश्वरसद्भावे प्रमाणाभावात् । प्रमाणाधीना खलु प्रमेयावगतिः । अत्रेश्वरात्मकप्रमेयसाधनाय प्रमाणाभावात् । जीवातिरिक्तसर्वेश्वरस्य केनाऽपि प्रमाणेनानुपलम्भात् । चार्वाकमते प्रत्यक्षमात्रं प्रमाणं तेन विलक्षण पृथिव्यादिभूतसङ्घातलक्षणस्यैव सिद्धिदर्शनेन देहलक्षणजीवातिरिक्तचेतनान्तर



स्यासत्वात् । अन्य मते चत्वारि प्रमाणानि प्रत्यक्षानुमानोपमानशब्दाः । एषु अन्यतमेनापि परमेश्वरो न सिद्ध्यति । तथा हि इन्द्रियार्थ सन्निकर्षजनितं तत्प्रत्यक्षं तत्करणं चक्षुरादिकम्, तत् द्विविधं बाह्यमान्तरञ्च । तत्र न प्रथमप्रत्यक्षेण परमेश्वरो ग्राह्योऽरूपिद्रव्यत्वेन तदयोग्यत्वात् । रूपरूपत्वरूपाभावरूपिद्रव्यग्राहकत्वमेव प्रत्यक्षस्य । तथा 'न सदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्' इत्यादि श्रुत्या परमेश्वरस्य बाह्यप्रत्यक्षाग्राह्यत्वकथनात् । जीवसुखादिव्यतिरिक्ततया आभ्यन्तरप्रत्यक्षेणापि सर्वेश्वरग्रहणासंभवात् । 'अहं सुखी अहं जानामीत्यादि जीवसुखादि आभ्यन्तरवस्तुविशेषाणामेव मनसा ग्राह्यत्वनियमात् । नाप्यनुमानं प्रमाणम्-अव्यभिचरितलिङ्गाभावात् । प्रत्यक्षयोर्महानसे वह्निधूमयोः सहचारदर्शनेन तयोः सामानाधिकरण्यरूपाव्याप्तेर्निर्णयस्ततश्च कदाचिदव्यभिचरितधूमदर्शने धूमध्वजोऽनुमितो भवति । परन्तु प्रकृते साध्यस्य परमेश्वरस्याप्रत्यक्षतया तेन सह हेतोः सामानाधिकरण्यरूपव्याप्तिग्राहकाधिकरणाप्रसिद्ध्या परमेश्वरानुमानासंभवात् ।

न च यथा क्षित्यंकुरादौ कार्यत्वहेतुना परमेश्वरकर्तृकत्वमिव तदनुमाने परमेश्वरसिद्धिः कुतो नेति वाच्यम् व्यभिचारात् । कार्यत्वहेतोर्मेघमालायां वल्मीकादौ च सत्वेन तत्र कर्तृपुरुषस्य कस्यचिदपि दर्शनाभावात् । तस्मान्नानुमाने नेश्वरः सिद्ध्यतीति ।

नाप्युपमानप्रमाणेनेश्वरसिद्धिः । तत्सदृशकश्चित् पदार्थाभावात् । यथा मुखसदृशचन्द्रसत्वे तत्सादृश्यमादाय मुखं चन्द्रवदिति प्रयोगो भवति । प्रकृते 'न तत्समश्चाभ्यधिकश्च दृश्यते' इत्यादिश्रुत्या परमेश्वरसदृशपदार्थान्तराभावान्न सादृश्यमूलकोपमानप्रसरः अतएव 'गगनं गगनाकारं सागरः सागरोपमः । रामरावणयोर्युद्धं रामरावणयोरिव' इत्यत्र तत्तत्सदृशपदार्थान्तरस्याभावेन नोपमालङ्कारोऽपित्वनन्वयालङ्कार एव स्वीकृतः । तस्मान्नोपमानेनेश्वरसिद्धिः । नापि शब्दप्रमाणम् । अन्योन्याश्रयात् । वेदप्रामाण्यसिद्धावीश्वरसिद्धिरीश्वरसिद्ध्या च वेदस्य सिद्धिरित्यन्योन्याश्रयान्न तस्य तत्र प्रामाण्यमिति संक्षिप्तः पूर्वपक्षः । तदत्र यद्यपि परमेश्वरसाधने सर्वसाधारणस्य प्रत्यक्षादिप्रमाणावसरो न भवति, तथापि नित्यापौरुषेयवेदादेव परमेश्वरसिद्धिर्भवति । तथाहि 'सत्यं ज्ञानमानन्दं ब्रह्म'

यतो वा इमानि भूतानि जायन्ते' न तस्य कार्यं करणञ्च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते परास्यशक्तिर्विविधैवश्रूयते स्वाभाविकी ज्ञानबलक्रिया च' जगत्सर्वं शरीरं ते स्थैर्यं ते वसुधातलम्' अहं सर्वस्य जगतः प्रभवः प्रलयस्तथा' अनाख्यमनभिव्यक्तं सत्किञ्चिदवशिष्यते' इत्यादि श्रुतिस्मृत्यादिभिरेवपरमेश्वरसिद्धिर्भवति। तदत्र जगद्गुरवः श्रीबोधायनमतादर्शकाराः श्रीपूर्णानन्दाचार्याः 'ब्रह्मसत्त्वे प्रमाणञ्च शास्त्रमेव सुनिश्चितम्। 'तन्त्वौपनिषद'ञ्चैतच्छ्रुतिवाक्यप्रमाणतः' श्रीबोधायनमतादर्शे १३१ इत्याहुः।

वेदस्यापौरुषेयत्वादिकमुपरिष्टादुपपादयिष्यते। तदेवं सामान्यतः सिद्धपरमेश्वरस्य स्वाभिलषितसर्वजगत्सर्जकस्य श्रीसीतानाथस्य नमस्कारात्मकं मङ्गलं कृतमाचार्यचरणैः-'श्रीमन्तं श्रुतिवेद्य' मित्यादि। अहं ग्रन्थकारो जगद्गुरु श्रीरामानन्दाचार्यः रामम् रमन्ते योगिनो यस्मिन् स राम इति रामपदव्युत्पत्तेः। स च 'यतो वा इमानि भूतानि' सत्यं ज्ञानमानन्दं ब्रह्म' इत्यादिश्रुत्या जडचेतनसाधारणसकलप्रपञ्चस्याभिन्नं निमित्तोपादानरूपः सकलजगत् शरीरः सर्वस्यान्तरात्मा सर्वशेषी हेयप्रत्यनीकसकलकल्याणगुणालयोदयासागरस्तादृशं रामम्। अथवा 'जातो दशरथे कुले' इति वचनेन दशरथापत्यपुंस्त्वविशिष्टः, एतावता परशुरामबलरामयोर्व्यवच्छेदः। त्रयो हि रामपदबोध्या भवन्ति। तत्र तयोर्द्वयोर्व्यवच्छेदाय दशरथापत्यस्यैवात्र ग्रहणम्। एतादृशं सर्वस्यात्मत्वेन तदन्तर्यामितया व्यवस्थितं भगवन्तं रामं श्रीसीतानाथं भजे, सर्वभावेन तस्य शरणं गच्छामि प्रपत्तेर्मोक्षकारणताया अग्रे वक्ष्यमाणत्वात् 'सकृदेव प्रपन्नाय तवास्मीति च याचते। अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम' इति श्रीसीतानाथवचनात्। कीदृशं पुनः रामं तत्राह-'श्रीमन्त' मिति श्रीर्लक्ष्मीः श्रीसीतारूपा विद्यते यस्य स श्रीमान् तम्। अत्र श्रीपदोत्तरजायमानो मतुप् प्रत्ययो 'गोमान्' धनवान्' इत्यादिवत् न स्वस्वामिभावसम्बन्धे, आधाराधेये वा, किन्तु नित्ययोगेऽर्थे 'अनन्याराघवेणाहं भास्करेण यथा प्रभेति' श्रीमद्रामायणीयमहर्षिवचनात्। यथा प्रभासूर्ययोः सार्वदिको विच्छेदरहितश्च सम्बन्धस्तथैव श्रीसीतारामयोः सर्वदा विच्छेदरहित एव सम्बन्धः। न च रावणापहारे पृथिवीप्रवेशे वा सम्बन्धविच्छेदो दृष्ट इति वाच्यम् तत्र भगवतो श्रीरामस्य मर्यादापुरुषत्वेन तथा करणात्। लीलोप



करणरूपायाः विच्छेदप्रतिभासेपि विभूत्युपकरणरूपायाः सदैवानपायात्। अन्यथा 'अनन्या च मया सीता भास्करेण यथा प्रभा' इति श्रीमद्रामायणीयमहर्षिवचनविरोधात्।

तदत्रानुसन्धेयं सर्वेश्वरश्रीसीतारामाभेदविषयकश्रीवशिष्ठसंहितास्थं प्रकरणम्-

यथा रामस्तथाऽहं च भेदः कश्चिन्न चावयोः॥
शीतता हि यथा नीरे तथाऽहं राघवे स्थिता।
गन्धवत्त्वं यथा भूम्यां स्थितो रामस्तथा मयि॥
इच्छाम्यहं न किञ्चिद्धि कर्त्तुं रामेच्छया विना।
मां विना न च रामोऽपि किञ्चित् कर्त्तुं समीहते॥
सर्वेश्वरी यथा चाहं रामः सर्वेश्वरस्तथा।
षड्गुणो भगवान् रामः षड्गुणाऽहं स्वभावतः॥
सर्वस्याधारभूतौ च त्वावामेव हि मारुते।
स्वे महिम्नि स्थितावावामान्याधारो न चावयोः॥
सच्चिदानन्दरूपश्च मादृशो राघवोऽपि हि।
मादृशो राघवश्चापि सर्वत्याराध्यतां गतः॥
सर्वफलप्रदौ चावां नित्यौ च सर्वशेषिणौ।
नित्यलीलाविभूत्योस्तच्चावां नाथौ श्रुतौ श्रुतौ॥
दिव्यदेहगुणो रामो दिव्यदेहगुणा ह्यहम्।
भक्त्या मुक्तिप्रदो रामो तथा चाहं मता बुधैः॥
पूज्यौ स्तुत्यौ तथाऽमोघौ कीर्त्तनीयौ समावथ।
चिन्तनीयौ प्रणामार्हावावां दृश्यावभीष्टदौ॥
आवां तौ हि यतः कश्चिन्नाधिको न च यत्समः।
सर्वात्मानौ मतौ चावां सर्वेषां प्रेरकौ तथा॥
सूक्ष्माचिच्चिद्द्वयेनावां विशिष्टौ प्रलये किल।
सृष्टावावां विशिष्टौ तु स्थूलाचिच्चिद्द्वयेन हि॥
सत्यकामौ तथा चावां सत्यसंकल्पतां गतौ।

शरण्यौ वेदनीयौ च भजनीयौ हि मुक्तये ॥
वेदवेद्यो जगद्योनिर्मन्निभो राघवो मतः ।
जगत्सृष्ट्यादयो लीला ममेव राघवस्य च ॥
मम लीलां विना रामलीला पूर्णा कदापि न ।
पूर्णा ममापि नो लीला श्रीरामलीलया विना ॥
सर्वेषामवताराणामावामेवावतारिणौ ।
भासकभास्करादीनामावामेव विभासकौ ॥
त्रातुं धर्मं च भक्तांश्चावतरावो युगे युगे ।
आवयोर्नित्यसम्बन्धः शक्तिशक्तिमतोरिव ॥
मया विना वदन् रामं रामं विना वदंश्च माम् ।
वदत्यावां यतश्चावामभिन्नावेव सम्मतौ ॥
कुरुते नावतिप्रीती तथाप्युभौ वदन्नरः ।
द्विगुणं कीर्त्तनं यस्माज्जायते च तथाऽऽवयोः ॥
सर्वशक्तिस्वरूपाऽहं सर्वशक्तिर्हि राघवः ।
वर्णिता शास्त्रतत्त्वज्ञैरावयोः सर्वरूपता ॥
जगद्देहश्च सर्वज्ञो विभू रामः सदैव हि ।
जगद्देहा तथैवाहं सर्वज्ञा विभुतां गता ॥
ऐश्वर्येण सदा रामो मादृशश्चास्ति मारुते ।
माधुर्येऽपि सदा रामो मत्सादृश्यं जहाति न ॥
कोटिजन्मार्जितं पुण्यं ध्रुवं नश्यति तस्य हि ।
अज्ञत्वेनावयोर्निन्दां यः करोति नराधमः ॥
कुरुते त्वधमो मूढो भेदबुद्धिं य आवयोः ।
यावच्चन्द्ररवी तस्य तावद्धि निरये स्थितिः ॥

विस्तरस्त्वन्यत्र वेदरहस्यादिग्रन्थे द्रष्टव्यः, अथवा श्रीलक्ष्मीस्तया युक्तम् 'कलत्रवन्तमात्मानमवरोधे महत्यपि, तया मन्ये मनस्विन्या लक्ष्म्या च वसुधाधिप' इतिकालिदासोक्तेः । अथवा श्रीः शोभा तया युक्तम् । लीलोपकरणवस्तुभिः स्वजनितैः सर्वदैव शोभायमानम् । इत्थं भूतं श्रीरामं भजे सेवे इत्यर्थः ।



पुनश्च कीदृशं रामं-तत्राह-'श्रुतिवेद्य' मिति श्रुतिभिः 'सत्यं ज्ञानमानन्दं ब्रह्म 'इत्यादिभिः वेद्यं ज्ञातुं योग्यं वेदप्रतिपाद्यम्, श्रुतिजनितशाब्दबोधविषयीभूतम् । विदधातोर्ज्ञानरूपार्थेस्मरणात् 'वेदवेद्ये परेपुंसि जाते दशरथात्मजे । वेदः प्राचेतसादासीत्साक्षात् रामायणात्मने' त्यागमोक्तेः । वेदशब्देनात्रोपासनात्मकं साक्षात्कारिज्ञानवदतिविशदं ध्यानमेव कथ्यते, तेन तादृशोपासनया सर्वदैवोपास्यम् । तादृशानुध्यानस्यैव मोक्षजनकतया तादृशभगवतो रामस्यभक्तप्राप्यत्वं मोक्षप्रदत्वञ्चाभिव्यक्तं भवति । तदाहुः श्रीआनन्दभाष्यकाराः स्वभाष्ये 'तथा हि-सकृत्प्रत्ययं कुर्याच्छब्दार्थस्य कृतत्वात् प्रयाजादिवत्' (बो.वृ.) इत्यादिना पूर्वपक्षमुपन्यस्य समाहितम् 'सिद्धन्तूपासनशब्दात्' (बो.वृ.) इति वेदनमेवोपासनमित्यप्युक्तं 'वेदनमुपासनं स्यात्तद्विषये श्रवणात्' (बो.वृ.) इति । उपासनन्तु ध्रुवानुस्मृतिरूपमित्यभिहितम् । 'उपासनं स्याद् ध्रुवानुस्मृतिर्दर्शनान्निर्वचनाच्च' (बो.वृ.) इति सा च ध्रुवानुस्मृतिसाधनसप्तकादेवेत्युदीरितम् 'तल्लब्धिर्विवेकविमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्षेभ्यः सम्भवान्निर्वचनाच्च' (बो.वृ.) इति । (आनन्दभाष्यम् १।१।१)

पुनः कीदृशं श्रीरामं तत्राह-अद्भुतगुणग्रामाग्र्यरत्नाकरम् इति । अद्भुता अतिविलक्षणाः अतएवाश्चर्यजनकाः ये गुणाः सत्यकामसत्यसङ्कल्पत्वसर्वान्तर्यामित्वसर्वशेषित्वसर्वान्तरात्मत्वशौर्यवात्सल्यादिकाः स्वेतरसविलक्षणा अप्राकृतिकाः एतादृशोपर्युक्तगुणानां यो ग्रामः समुदायः, ग्रामशब्दस्यात्र समुदायबोधकत्वात् । न तु अधिकरणविशेषो ग्रामः, ते गुणसमुदाया एव, अग्ररत्नानि विलक्षणरत्नविशेषरूपाणि, यथा बहुमूल्यरत्नादिकं भाग्यवतामेव प्राप्तं भवति, तथैव भवपरम्परयोपार्जितसुपुण्यशालिनां महापुरुषाणामेवोपर्युक्तगुणविशिष्टभगवद्दर्शनं भवति नान्येषां मादृशानामितिभावः । एतेषां गुणानामाकरम् स्थानमधिकरणं श्रीरामम् सेवे इति क्रियान्वयः । यथा प्राकृतं क्षीरोदसमुद्रोऽनेकप्रकाररत्नसमुदायस्याधिष्ठानं तथैव भगवान् श्रीरामो हेयप्रत्यनीकासंख्येयकल्याणगुणानामाधार इति । तथा 'प्रेयः स्वेक्षणसंसुलज्जितमहीजाताक्षिकोणेक्षितम्' इति । जगज्जनन्याः प्रेयोऽतीवप्रियो रामः, तेन कृतं यदीक्षणं श्रीसीताया मुखन्निरीक्षणं तेन प्रियदर्शनेन सुलज्जिता इषल्लज्जावती या मही सुता पृथिव्याः पुत्रीः

(यागप्रसङ्गे हलप्रवहणं कुर्वतो जनकस्य महीमध्यादाविर्भूता श्रीसीता, तेनेयं महीपुत्रीति कथ्यते) तस्याः श्रीसीताया अक्षिकोणेन नेत्रप्रान्तेन कटाक्षेणेति यावत्। ईक्षितम्, श्रीसीताकर्तृकदर्शनकर्मभूतम् श्रीरामम्। एतावतातदुभययो र्विलक्षणस्नेहप्रकर्षः सूचितो भवति, स्नेहादेर्द्विष्ठत्वात्। 'क्षणे क्षणे यन्नवतामुपैति तदेवरूपं रमणीयतायाः' इति वचनेन एकदा दर्शनेनौत्सुक्यनिवृत्तेः पुनः पुनर्दर्शनं रमणीयतामभिव्यञ्जयति। यथा श्रीसीतामुखदर्शनं श्रीरामस्यकृते मनोज्ञं मनोहारि तथैव श्रीराममुखदर्शनं तस्या अपि तथैवेति, तदुभययोः पुनर्दर्शनमिति। 'भक्ताशेषमनोभिवाञ्छितचतुर्वर्गप्रदं स्वर्द्रुमम्' अनन्यभक्त्या भगवन्तं भजमाना ये चतुर्विधाश्चतुः प्रकारका भक्ताः प्रपन्नाश्च 'चतुर्विधाभजन्ते मां' इति गीतोक्तेः। तेषां समस्तमनोवाञ्छितधर्मार्थकाममोक्षाख्यं फलं प्रददातीति, भक्ताशेषमनोभिवाञ्छितचतुर्वर्गप्रदः तम्, अतएव 'स्वर्द्रुमम्' कल्पवृक्षतुल्यम्, यथा देववृक्षः कल्पवृक्षः स्वच्छायाश्रितं पुरुषं स्वमनोवाञ्छितधनकलत्रादिरूपफलं सद्यः प्रयच्छति। यथा वा चिन्तामणिर्मणिः स्वाश्रिताय सर्वफलं सद्यः प्रददाति, तथा सर्वशेषी भगवान् श्रीरामः सर्वभक्तेभ्यस्तत्तत्फलमनुस्मरणमात्रेणददादीति भगवति कल्पवृक्षवदिति सादृश्यकथनम् इषुरिव सविताधावतीति वद् द्रष्टव्यम्। यतः 'न तत्समश्चाभ्यधिकश्चदृश्यते' इत्यादिश्रुतेस्तत्सदृशतदधिकस्यनिषेधात्सामान्यनिदर्शनमिति ध्येयम्। तथा 'स्मेरमुखाम्बुजम्' इति, स्मेरम्-ईषत् हास्यविशिष्टं मुखाम्बुजम् विकसितकमलवत् मुखं यस्य स स्मेरमुखाम्बुजः तादृशं श्रीरामम्। सूर्यप्रभया किञ्चिद् विकसितसहस्रदलसरोजवन्मुखवान्। अर्थात् यथा कमलमीषत् विकसितमतीवशोभायमानं भवति, तादृशकमलवत् किञ्चिद् हासविशिष्टमतीवशोभायुक्तं मुखं तद्वदेव मुखकान्तिः सर्वेश्वरस्येति। ईषद् हास्येनैव स्वाश्रितानां सर्वस्वं ददामीति संसूचनपरकमिदम्। 'शुचिमहानीलाश्मकान्तिम्' इति। नीलोनीलवर्णः श्याम इति यावत्। नीलश्चासौ अश्मा प्रस्तरश्चेति नीलाश्मा। अत्र 'नीलोघटः' इत्यत्र यथा नीलघटयोरभेदान्वयः अर्थात् अभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताशालिबोधे स्वतन्त्रनीलपदसमभिव्याहृतस्वतन्त्रघटत्वावच्छिन्नविशेष्यकोपस्थितेः कारणतया तादृशाभेदविषयकः शाब्दबोधो भवति। तथैव प्रकृते अभेदसम्बन्धेन



नीलप्रकारक अश्मात्वावच्छिन्नविशेष्यक एव बोधो भवति। अर्थान्नीलाश्मनोरभेदान्वयः, तेनाभेदसम्बन्धेन नीलस्यप्रकारता अश्मा च विशेष्यरूप इति। नीलाश्मा नीलमणिरित्यर्थः। महांश्चासौनीलाश्माचेतिमहानीलाश्मा। शुचिर्निर्मलः सूर्यदोषरहितः, तादृशशुचिमहानीलाश्मनः कान्तिः' कान्तिरिव-कान्तिर्विद्यते यस्य अर्थात् तद्वत् शरीरस्यरमणीयता आह्लादकता विद्यते यस्य स तथा, एतादृशगुणविशिष्टं सर्वेश्वरश्रीरामं भजे।

सदा शोभायुक्तं श्रुतिप्रतिपाद्यं विलक्षणगुणसमुदायस्य महासमुद्रभावाविष्टजनकजया प्रेक्षितं कल्पवृक्षवत् भक्तानामनेकप्रकारकफलप्रदं कमलवन्मुखं नीलमणिसदृशश्यामलाङ्गं श्रीसीतापतिमहं प्रपद्ये इति सारार्थः। 'आशीर्नमस्क्रियावस्तुनिर्देशोवाऽपि तन्मुखम्' इतिवचनात् मङ्गलं त्रिविधं भवति, प्रकृते च नमस्कारात्मकं मङ्गलं कृतमितिज्ञेयम्। विशेषविवरणन्तु-अन्यत्रानुसन्धातव्यमिति संक्षेपः ॥१॥

卐 श्रीश्रियः श्रीयै नमः 卐

आनन्दभाष्यसिंहासनासीन

## जगद्गुरुश्रीरामानन्दाचार्यश्रीरामेश्वरानन्दाचार्यजी

प्रणीत ॐ किरण

संसार मगोदधि में निमज्जित होनेवाले वेद से बहिर्मुख तथा अनर्थ का कारण काम क्रोधादिक में आग्रहशील दुःखी जन्तुओं को देखकर इन जीवों को संसार सागर से उद्धार करने की इच्छा से सर्वेश्वर श्रीरामजी जोकि सकल हेय प्रत्यनीक अनन्त कल्याण गुणों से शोभित हैं। वे स्वयं सर्वावतारी श्रीराम श्रीरामानन्दाचार्यजी रूप से इस लीलाभूमि में माघकृष्ण सप्तमी विक्रमसम्वत १३५६ को अवतरित हुए। इसके बाद श्रीरामानन्दाचार्य जगद्गुरु श्रीराघ वानन्दाचार्यजी जो श्रीमठ पञ्चगङ्गाघाट के आचार्यत्व के रूप में समस्त जगत् का धार्मिक नेतृत्व कर रहे थे से शिक्षा दीक्षा को प्राप्त करके लोक कल्याण के लिये वेद स्मृति, इतिहास पुराणादि रूप शास्त्र सागर के अर्थ को निकाल करके प्रस्थानत्रयानन्दभाष्यादि ग्रन्थों में प्रकाशित किए। तदनन्तर अल्पमति के साधारण व्यक्ति को भी शास्त्र के अर्थों का यथावत् बोध हो तथान्य अल्पमतिक पण्डितों से दूषित श्रीसम्प्रदाय का कण्टकोद्धार करने

के लिये आचार्यजी ने श्रुति स्मृत्यादिकों के अर्थों का संकलन करके संक्षिप्त रूपसे स्वशिष्य जगद्गुरु श्रीसुरसुरानन्दाचार्यजी को निमित्त बनाकर '**श्रीवैष्णवमताब्ज भास्कर**' नामक ग्रन्थ का निर्माण किया। प्रारीप्सित ग्रन्थ की निर्विघ्नपूर्वक समाप्ति हो इसलिये ग्रन्थ के आदि में मङ्गल करते हैं। मङ्गल तीन प्रकार का होता है एक तो आशीर्वादात्मक, द्वितीय-नमस्कारात्मक, तृतीय मङ्गल होता है-वस्तु निर्देशात्मक अर्थात् जिस मङ्गल में ग्रन्थ प्रतिपाद्य वस्तु का ही निर्देश किया जाय वह ऐसा प्राचीनों का कथन है-'आशीर्नमस्क्रिया वस्तु निर्देशो वापि तन्मुखम्' इति।

प्रकृत प्रकरण के आरम्भ में आचार्यश्री ने जगदुत्पत्ति स्थिति और प्रलय का नियामक दया सागर सर्वदोष रहित अनन्तकल्याण गुणों का सागर तथा सम्पूर्ण चराचर स्थूल सूक्ष्म साधारण जिनका शरीर है, इन सब का अन्तर्यामी सर्वशेषी भगवान् परमेश्वर श्रीसीतानाथजी हैं-उनका नमस्काररूप मङ्गलाचरण किया है, निर्विघ्नपूर्वक ग्रन्थसमाप्ति हो इसके लिये, अत: यह नमस्कारात्मक मङ्गलाचरण किया गया है।

**प्रश्न**-सामान्यत: कारणता का नियामक अन्वयव्यतिरेक होता है-**तत्सत्वे तत्सता तत् व्यतिरेके तदभाव:**। यहाँ अन्वय घटक प्रथम तत् शब्द से कारणत्वेन अभिमत वस्तु का ग्रहण होता है, तथा द्वितीय तत् शब्द से कार्य का ग्रहण होता है। इसी तरह व्यतिरेक में भी प्रथम तत् कारण का बोधक होता है। द्वितीय तत् शब्द कार्य का बोधक होता है।

**उदाहरण**-जिस तरह दण्ड के अव्यवहित पूर्व में सद्भाव रहने से घटरूप कार्य की उत्पत्ति होती है और दण्ड के अव्यवहित पूर्व में नहीं रहने से घट की उत्पत्ति नहीं होती है तो इसप्रकार अन्वय व्यतिरेक रहने से दण्डादिक कारण में कारणता का निश्चय होता है और रासभ आदि पदार्थों में अन्वयव्यतिरेक के नहीं रहने से रासभादिक में घटादि कार्य के प्रति कारणत्व नहीं होता है। इसीप्रकार प्रकृत में यदि मङ्गल रहने पर ग्रन्थ की समाप्ति हो तथा मङ्गल के नहीं रहने से ग्रन्थ की समाप्ति नहीं हो, तब विघ्नध्वंस अथवा समाप्ति के प्रति मङ्गल को कारणत्व हो सकता है! परन्तु ऐसा तो नहीं होता है क्योंकि कादम्बरी प्रभृति ग्रन्थों में मङ्गल तो है, परन्तु समाप्ति नहीं हुई तो अन्वयव्यभिचार है तथा बौद्ध की किरणावली में



मङ्गल नहीं है तथापि ग्रन्थ की समाप्ति देखने में आती है तो व्यतिरेक व्यभिचार है? तब मङ्गल में किस तरह कारणता निश्चय करते हैं अर्थात् कारणता का निश्चय नहीं होता है, तब आप किस तरह कहते हैं कि निर्विघ्नपूर्वक ग्रन्थ समाप्ति होने के लिये ग्रन्थ के आदि में मङ्गल किया गया है।

अब इस प्रश्न का उत्तर देते हैं कि प्रत्यक्ष ज्ञान में अन्वयव्यतिरेक व्यभिचार संशय प्रतिबन्धक होता है, परन्तु अनुमिति द्वारा वस्तु साधन करने में व्यभिचार संशय संशयरूप पक्षताविधया सहायक होता है तो अन्वयव्यतिरेक व्यभिचार रहने से भले ही प्रत्यक्ष मङ्गल में समाप्ति कारणता का निश्चय न हो परन्तु अनुमान द्वारा तो मङ्गल में यथोक्त कारणता का निश्चय हो सकता है तथाहि-'**मङ्गलं सफलं अविगीत शिष्टाचार विषयत्वात् दर्शादिवत्**' (मङ्गल सफल है क्योंकि अविगीत अनिन्दित शिष्टाचार का विषय होने से-जिसमें यह हेतु है उसमें यथोक्त साध्य भी है जिस तरह दर्श वगैरह याग में अर्थात् दर्शयाग में अविगीत शिष्टाचार विषयता है तो सपलत्व साध्य भी है। अर्थात् दर्शयाग सफल है, यहाँ स्वर्गादिक फल है तादृश स्वर्गफल से दर्शयाग फलवान् कहलाता है।) इस अनुमान से मङ्गल में सफलत्व सिद्ध होता है। अब यहाँ जिज्ञासा होती है कि मङ्गल का क्या फल है क्योंकि यहाँ फल तो कोई श्रुत नहीं है, तो विश्वजित याग की तरह स्वर्गफल की ही कल्पना करेंगे, अर्थात् मङ्गल करने से स्वर्गफल मिलेगा ऐसा नहीं कहना क्योंकि एक नियम है कि अगर दृष्ट फल की सम्भावना रहे तबतक अदृष्ट फल की कल्पना उचित नहीं है प्रकृत में जब ग्रन्थ समाप्तिरूप फल उपस्थित है तब अदृष्ट स्वर्गादिफल अथवा पुत्रकलत्रादिफल कल्पना उचित नहीं है अर्थात् मङ्गल का फल समाप्ति है। जब इसप्रकार मङ्गल सफल हुआ तब सफल मङ्गल का आचरण आवश्यक है इस बात को समझ करके मङ्गलाचरण किया है।

इस जगह में अब दूसरा भी प्रश्न होता है कि जिस ईश्वर को नमस्कार किया गया है उस ईश्वर के सद्भाव में क्या प्रणाम है? इसमें प्रत्यक्ष प्रणाम तो कह नहीं सकते हैं क्योंकि प्रत्यक्ष बाह्य आभ्यन्तर भेद से दो प्रकार का है तो बाह्य जो प्रत्यक्ष है वह रूपी द्रव्य का ही ग्रहण करता है उससे ईश्वर का प्रत्यक्ष हो नहीं सकता, क्योंकि-'**स पर्यगात् शुक्रमकायमव्रणम्' न तस्य कार्यं करणञ्च विद्यते**' इत्यादि

श्रुतियों के प्रमाण से ईश्वर के शरीरादिक नहीं होने से बाह्य प्रत्यक्ष का विषय नहीं हो सकते हैं। और जीव सुखादिभिन्न होने से मानस प्रत्यक्ष का भी विषय नहीं है। और ईश्वरानुमापक अव्यभिचरित लिङ्ग नहीं होने से अनुमान प्रमाण से ग्राह्य नहीं है। ईश्वर के सदृश अन्य कोई नहीं है इसलिये उपमान प्रमाण गम्य भी ईश्वर नहीं है। एवं शब्द प्रमाण से ईश्वर सिद्धि करने में अन्योन्याश्रयदोष होता है। ईश्वराधीन वेद में प्रामाणिकत्व है, तथा वेदाधीन ईश्वर सिद्धि होगी ? यह हुआ पूर्वपक्ष।

इसके उत्तर में कहते हैं कि-'यों सर्वसाधारण जन प्रत्यक्षादि से ईश्वर को निश्चय नहीं कर पाते तो भी **'जगत्सर्वं शरीरं ते स्थैर्यं ते वसुधातलम्'** **'सत्यं ज्ञान मानन्दं ब्रह्म'** **'यतो वा इमानि भूतानि जायन्ते, न तस्य कार्यं करणञ्च विद्यते'** इत्यादि श्रुतिसमुदाय से ईश्वर है यह निश्चित होता है **'ब्रह्म सत्वे प्रमाणञ्च शास्त्रमेव सुनिश्चितम्। तत्त्वौपनिषदश्चैतच्छ्रुतिवाक्यप्रमाणतः'** इस श्रीबोधायनमतादर्श श्लोक के सामञ्जस्य में ब्रह्म-सर्वेश्वर श्रीरामजी की साधना में श्रुति-वेदवाक्य प्रथम प्रमाण है अनन्तर प्रत्यक्ष एवं अनुमान प्रमाण हैं अथवा निम्नप्रकार के अनुमान के द्वारा भी ईश्वरसिद्धि होती है **'क्षित्यङ्कुरादिकं सकर्तृकं कार्यत्वात् घटादिवत्'** जो पदार्थ जन्य होता है वह अवश्य कर्ता से उत्पन्न होता है जैसे जन्य घटादिक कुलालादिजन्य है, इसीप्रकार प्रकृत पक्ष क्षित्यादिक में कार्यत्व है तो इनमें सकर्तृकत्व भी है, तो इन पृथिवी आदि का कर्ता असर्वज्ञ अस्मदादिक तो हो नहीं सकते हैं, इसलिये भगवान् श्रीसीतानाथ सर्वज्ञत्वादिगुण विशिष्ट सर्वशरीरी ही कर्ता सिद्ध होते हैं। इसमें-**'द्यावाभूमीजनयन् देव एकः'** इत्यादि आगम भी ईश्वर सिद्धि में प्रमाण होते हैं। इसप्रकार नमस्कार्य परमेश्वर के सद्भाव सिद्ध होने पर भगवान् श्रीरामानन्दाचार्यजी ने ईश्वर को नमस्कारात्मक मङ्गल किया-**'श्रीमन्तं श्रुतिवेद्यम्'** इत्यादि।

मैं श्रीरामानन्दाचार्य भगवान् श्रीरामचन्द्रजी को स्मरण करता हूँ अर्थात् प्रणाम करता हूँ, सर्वेश्वर श्रीरामजी किस प्रकार के हैं ? जो सकल वेदों से वेद्य-जानने के योग्य हैं, अर्थात् सकल वेद से प्रतिपाद्य हैं तथा सौशील्य वात्सल्यादि अनन्त कल्याण गुणों के समुद्र हैं सकल दोष रहित हैं। प्रियतम के प्रेमदृष्टि से देखने पर लज्जित श्रीसीताजी से देखे गये। और उपासक पुरुषों का जो धर्मार्थकाम और मोक्षरूप सकलमनोभिलषित पदार्थ उसकी पूर्ति करने में कल्पवृक्ष के सदृश अर्थात्



जिस तरह कल्पवृक्ष स्वाश्रित व्यक्ति के मनोभिलषित सकल पदार्थ को पूर्ण करता है, उसी तरह प्रकृत में भी भक्त के सकल मनोरथ पूरक भगवान् हैं। **'न तत्समश्चाभ्यधिकश्च दृश्यते'** इस श्रुति प्रमाण से भगवान् के सदृश कोई न होने पर भी लोक प्रसिद्धि के कारण कल्पवृक्षोपमा दी गई है।

अत्युत्तम नीलमणि की तरह अति निर्मल कान्ति प्रभा से युक्त-**'तमेव भान्तमनुभांति सर्वं तस्यभासासर्वमिदं विभाति'** इत्यादि श्रुतियों से सिद्ध होता है कि भगवान् का श्रीविग्रह अत्यन्त कान्तियुक्त है, यथा-'नीलतोयदमध्यस्था विद्युल्लेखेव भासुरा' इत्यादि। तथा ईषत् हास्य युक्त मुख कमल है जिनका एतादृश भगवान् श्रीरामचन्द्रजी का आश्रय लेता हूँ॥१॥

**ऐश्वर्यं यदपाङ्गसंश्रयमिदं भोग्यं दिगीशैर्जगत्**
**चित्रं चाखिलमद्भुतं शुभगुणावात्सल्यसीमा च या।**
**विद्युत्पुञ्जसमानकान्तिरमितक्षान्तिः सुपद्मेक्षणा**
**दत्तान्नोलिखसंपदो जनकजारामप्रियासानिशम्॥२॥**

प्रथमश्लोकेन परात्परं पुरिशयं सर्वशरीरिणं हेयप्रत्यनीकानन्तकल्याण गुणसागरम् **श्रीसीतानाथं प्रणम्य तदभिन्नशक्तिस्वरूपां विदेहजां द्वितीयश्लोकेन** नमस्कर्तुं तदाशिषञ्च निर्विघ्नग्रन्थसमाप्तये लब्धुं सकललोकजननीं प्रकृति शक्त्यादिपदवाच्यां तदाहुर्जगद्गुरुश्रीरामभद्राचार्याः:-

'प्रकृतिरिति सरस्वतीति लक्ष्मीरिति गिरिजेति जगन्मयीति वा याम्
गदति मुनिगणः कवित्वसिद्ध्यै कथमपि तां कलये विदेहकन्याम्॥'

प्रणमति-'ऐश्वर्यं यदपाङ्गसंश्रय' मित्यादि।

सा जगति प्रसिद्धा जनकजा जनकस्य विदेहाधिपतेर्मिथिलानायकस्येत्यर्थः। **सेत्यत्र तच्छब्दप्रसिद्धार्थको नतु प्रक्रान्ताद्यर्थकः। प्रसिद्धार्थकोऽपि तत् शब्दोदृश्यते** यथा-'**द्वयं गतं सम्प्रति शोचनीयतां समागमप्रार्थनयाकपालिनः। कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी।**' तपः कुर्वन्तीं **विवाहो भवतु शिवेन सहेतीच्छया पर्वतराजपुत्रीं प्रति तपः परीक्षितुं शिवस्योक्तिरियम्। हे पार्वति ? कपालिनो महादेवस्य समागमप्रार्थनया**

मभिमानो जातो यदहमेवं विधो यत् भगवन्तं पृष्ठे आरोप्य वहामि, यदहं न स्यां तदा भगवत एवं विधं कार्यं न कोप्यन्यः कर्तुं प्रभुः स्यादिति । तस्य तादृशं विचारं ज्ञात्वा कदाचिदुड्डयनसमये स्वकनिष्ठिकया तमताडयत्, ततः स विगत बलोरसातलमुखोऽभवत् ततः भगवतः प्रभावान्ममैतादृशीदशा सञ्जातेति विचार्य भगवतः स्तुतिं कृत्वा तं प्रसादयामास । ततः तुष्टो भगवान् तस्मै पुनःस्वबलं ददाविति ततः प्रभृतिगरुडो विमानोऽभवदिति पौराणिकी वार्ता । एकदा द्वारकायां श्रीकृष्णेन श्रीहनुमता तन्मानभङ्गमकारीत्यपि वार्ता प्र-सिद्धा । भगवच्छ्रीरामास्त्रसङ्घो न गरुडादिवदभिमानयुक्तः अपितु भगवति विगतमान एव सदा भवतिस्मेत्याकूतम् । अथवा विगतो विनाशितो रावणा दीनां रक्षसां मानोऽभिमानो येन सः । अथवा विपदं पक्षिवोधकम् । ततश्च वेः पक्षिणो गरुडस्येव मानं वेगप्रमाणं यस्य, अर्थात् स्वयं विनीतः रावणादीनाम भिमानविनाशकश्चास्त्रसंघो भगवतो रामस्येत्यर्थः सामान्यलौकिकदृष्ट्येयं व्युत्पत्तिः ।

'रक्षो दैत्यादिनाशी' तत्र शास्त्रप्रतिषिद्धदुराचारव्यभिचारपेयापेयकर्मकर्ता राक्षसः दितेरपत्यं दैत्यः, तान् राक्षसान् दैत्यादींश्च विनाशयति समूलघातमुपहन्ति अर्थात् एतेषामुपहननशीलः पुरा किलोत्पथगामिनं हिरण्याक्षहिरण्यकशिपुरूपं दैत्यं जघान श्रीसीतानाथो बराहनृसिंहरूपं शरीरमधिष्ठाय तत्र कर्ता भगवान् स्वयमेव करणञ्च तदीयास्त्रमिति करणे शस्त्रसङ्घेऽपि विनाशकत्वोपचारः । रामेणबाणेन हतोवालीतिवत् । तथा श्रीरामवतारे खरदूषणकबन्धादिराक्षसान् वालिप्रभृत्यनाचारकर्तारञ्च जघानेति पौराणिकी वार्ताऽनुसंघेया इतिभावः ।

'क्षुभितजलनिधि' रिति तत्र क्षुभितो व्याकुलतां नीतो जडोऽपि जल निधिर्जलराशिर्येन सःक्षुभितजलनिधिः । यद्यपि क्षोभादिकं कार्यं चेतनधर्मः, चेतनो देवदत्तः क्षोभमाप्नोति क्रुध्यति हृष्यति वेति प्रयोगदर्शनात् । ननु शुष्कः काष्ठः क्षुभितो भवति । प्रकृते च समुद्रस्य जडतया कथं क्षोभादयस्तदीयधर्माः स्युः ? ततश्च 'क्षुभितजलनिधिरिति विशेषणमनुचितमिवाभातीति, तथापि आ सन्नपतनतां कुलस्यालक्ष्य नदी कूलं पिपतिषति इति अचेतनेऽपि कूले पति तुमिच्छतीति चेतनवदेवौपचारिकः प्रयोगस्तथैव जलराशिरूपस्य जडस्य



जलाधेरपि श्रीरामबाणेनाकूलव्याकुलतामालक्ष्य क्षुभितजलनिधिरिति प्रयोगः । अथवा जलनिधिरिति पदं जलाभिमानिचेतनजलाधिष्ठातृदेवस्य बोधकम् । अर्थात् चेतनो जलाधिपतिर्जलशोषणादिकरणेन क्षुभितः । अत एव जलधि कन्यका चेतनालक्ष्मीरिति गीयते पुराणादौ । जलनिधेर्जडत्वे तेन जाता लक्ष्मीः कथमिव स्यात् । ततश्चेतन एव जलनिधिस्तेन क्षुभितजलनिधिरिति विशेषणं न कामपि क्षतिमावहतीति विशेषोऽन्यत्रानुसंधातव्य इति दिक्, 'लोकजि' दिति । लोकान् जयतीति लोकजित् अत्र लोकपदं सुमार्गं परित्यज्यामागेर्ण गच्छतो लोकस्य बोधकम् । ततश्च लोकान् दुर्जनान् पथभ्रष्टान् जयतीति लोकजित् । यथा स लोकानानन्दयन्नपि भगवान् जनार्दन इतिकथ्यते दुष्टान् निग्रहन् तथैव प्रकृतेऽपीति ।

लोकामान्य इति । लोकानां मान्यो लोकैः संपूजनीयः तत्र लोकानां त्रिभुव नोदरविवरवर्तिजीवसमुदायानां मान्यः तादृशलोकसमूहैः वन्दनीयः । यथा हि भ गवान् श्रीरामः सर्ववन्द्यस्तद्वत्तदस्त्रसंघोऽपि नमस्करणीयः, तद्भयभीतत्वात् 'भी षास्माद्वातः पवते भीषोदेति सूर्यः । भयादिन्द्रश्चवायुश्चमृत्युर्धावति पञ्चमः' इत्यादि श्रुत्या सर्वभयहेतुत्वश्रवणादिति । 'धन्यः' इति विजयाद्यैश्वर्यसपन्नः । अयं हि श्रीरामीयशस्त्रसमुदायो दुर्जनान् विजित्य धनं लभतेऽन्येभ्यो ददातीति च ततो धन्य इति । उपर्युक्तगुणविशिष्टः श्रीरामशस्त्रास्त्रसंघो विघ्ननिकरं विनाशयन् अस्माकं ग्रन्थकर्तुरध्येतुश्च मङ्गलौघं करोतु इतिभावः ॥३॥

जगत् का अभिन्ननिमित्तोपादन कारण तथा पदार्थ मात्र का अन्तरात्मा सर्वशेषी भगवान् श्रीरामचन्द्रजी को नमस्कार कर के, तदनन्तर श्रीसम्प्रदाय की प्रवर्तिका भ गवती श्रीसीताजी को नमस्कार किया । तदनन्तर भगवान् श्रीरामजी के अतिप्रिय तथा स्मरण करने मात्र से सर्वदा कैंकर्य में संलग्न जो भगवान् का शस्त्र तथा अस्त्रों का समुदाय है उनका आचार्यश्री नमस्कार करते हुए कहते हैं-'प्रत्यूहव्यूहभङ्गम्' इत्यादि । भगवान् श्रीरामजी का जो शस्त्र तथा अस्त्रों का समुदाय है इसमें मन्त्र के बिना जो चलाया जाय उसको शस्त्र कहते हैं-यथा बाण खङ्गादिक, एवं मन्त्र पूर्वक जिसका प्रयोग किया जाय उसको कहते हैं अस्त्र, यथा आग्नेयास्त्र, ब्रह्मास्त्र इत्यादि । यथा-सदर्भसंस्तराद्गृह्य ब्राह्मेणास्त्रेणयोजयत् । सतं प्रदिशं चिक्षेप दर्भं तं वायसं प्रति ।

स दीप्त इव कालाग्निर्जज्वालाभिमुखः खगम् । इत्यादि स्थल में अस्त्र प्रयोग का वर्णन किया है एतादृश भगवान् का शस्त्रास्त्र है वह हमलोगों के मङ्गल को शीघ्रता पूर्वक संपादन करे, क्या करता हुआ श्रीरामजी का शस्त्रास्त्र मङ्गल करे, इस जिज्ञासा के उत्तर में कहते हैं-**प्रत्यूहव्यूहभङ्गम्** प्रव्यूह का अर्थ होता है-विघ्न तो विघ्न का जो समूदाय है, उनको विनाश करता हुआ । वह श्रीराम शस्त्रास्त्र सङ्घ कैसा है ? इस जिज्ञासाके उत्तर में **'ऊरुबलः'** इत्यादि विशेषण कहते हैं जिस शस्त्रास्त्र सङ्घ का बल महान् बहुत बडा है बल शब्द का अर्थ है वेग अर्थात् वह शस्त्रास्त्रसंघ अत्यन्त वेगशील है । तथा शक्तिमान् है अर्थात् अत्यधिक विलक्षण शक्ति है जिसका, एतादृश शक्तिमान् वह शस्त्रास्त्र संङ्घ है । एतादृश विलक्षण शक्ति से इन्द्रसुत जयन्त निगृहीत होकर के तीनों लोकों में पर्यटन किया । तथा रक्षक को नहीं प्राप्त करके भगवान् श्रीरामकी शरण में ही पुनः आया, तब करुणा निधान श्रीरामजी ने बध योग्य था तो भी, अपराध को क्षमा करके एक आँख को फोड कर छोड दिया । उस दिनसे काकको एक ही आँख होती है । यह सब प्रभाव उस अस्त्र संघका है ।

पुनः श्रीरामजीका वह शस्त्र कैसा है ? इस जिज्ञासाके उत्तर में कहते है-**'सर्वकारी'** सर्वकार्य को करनेवाले हैं शस्त्र समुदाय । अस्मदादि पुरुषों को मन से भी आलोचन करने के अयोग्य तर्क विषय को सात ताल वृक्षोका छेदन पहाड को तोड देना रसातल का शोषण भेदनादिक आदि असाध्य कार्य करनेवाले है श्रीरामजी का शस्त्रसङ्घ ।

**'भूरिःश्रेयः प्रतापी'** अति श्रेष्ठप्रतापशाली **'मुनिवरनिकरै स्तूयमानः'** मनन शील जो ऋषिलोग हैं उनके समुदाय से सर्वदास्तूयमान हैं । **'विमानः'** अनेक दुष्कर कार्य का संपादन करने पर भी स्वयं सर्वथा अभिमानरहित हैं अर्थात् रावण प्रभृति महाबली व्यक्तियों का विनाश करनेवाले अथवा विमान पद घटक 'वि' का अर्थ होता है, गरुड पक्षिराज उस गरुड का जो मान अर्थात् वेग तादृश वेग को भी तिरस्कृत करनेवाला है वेग जिसका, एतादृश श्रीरामजी का शस्त्र समूदाय है । **'रक्षो दैत्यादिनाशी'** राक्षस खरकबन्धादिक दैत्य हिरण्याक्ष हिरण्यकश्यपप्रभृति तथा आदि पदग्राह्य वाली प्रभृति उन्मार्ग गामी अनेक दुर्जन व्यक्तियों का विनाश करने का स्वभाव है तथा **क्षुभितजलनिधिः** अगाध जलराशिरूप समुद्र भी जिससे अर्थात् जिस श्रीरामजी के शस्त्र ने आकुलव्याकुल कर दिया, जड जलराशि अगाध समुद्र को भी क्षुब्ध करनेवाले भगवान् का शस्त्रास्त्र सङ्घ है । **'लोकजित्'** लोक अर्थात् दुष्ट लोक में विप्लव कारी व्यक्तियों को परास्त करनेवाला अर्थात् जीतनेवाला और भगवान् का जो शास्त्रास्त्र सङ्घ है वह लोक मान्य अर्थात् त्रिभुवन बिबर में रहनेवाले जो लोग हैं उनके द्वारा यह शस्त्र सङ्घ संमान्य है । जब रावणादिक विप्लवकारी व्यक्तियों से त्रिभुवन में अशांति दुराचारादिक चरम सीमा को प्राप्त कर जाता है तब जगत् का पालक सर्वान्तर्यामी लोगों के दुःख को विनाश करने के लिये स्वकीय बाण द्वारा इन राक्षसों का विनाश कर देते हैं, अतः प्रत्येक इन बाणों का संमान करते हैं । एतादृश श्रीरामजी का शस्त्रास्त्र समूह शीघ्र मेरे विघ्न राशि को विनाश करता हुआ समस्त मङ्गल को प्रदान करे ॥३॥



**तत्वं किं किञ्च जाप्यं परमिहविवुधैर्वैष्णवैर्ध्यानमिष्टम् ?**
**मुक्तेः किं साधनं सत्सुमतिमतिमतो धर्म एकोऽस्ति कश्च ।**
**धर्माणां वैष्णवास्ते गुरुवर ? कतिधा लक्षणं किञ्च तेषाम् ?**
**कालक्षेपःकिमाप्यं कथमुरुशुभदं कुत्रकार्यो निवासः ॥४॥**

जगद्गुरुश्रीरामानन्दाचार्यस्य द्वादशशिष्येष्वन्यतमोऽतिविशालमतिः श्रीसुरसुरानन्दाचार्यः संसारमहोदधिनिमग्नाज्ञनान् दृष्ट्वा तदुद्धर्तुकामनया स्वयं सर्वशास्त्रनिष्णातोऽपि अल्पप्रज्ञं तत्त्वबोधरहितमिव तत्त्वबोधनाय स्वयं जिज्ञासुर्भूत्वा स्वाचार्यं श्रीमन्तं श्रीरामानन्दाचार्यं तत्त्वादिकं पृच्छन् श्रीसुरसुरानन्दाचार्य उवाच-

श्रीगुरुं सम्बोध्य श्रीसुरसुरानन्दाचार्यो वक्ति हे गुरुवर ! तत्र गुरुरित्यत्र 'गु' शब्दार्थोऽज्ञानालक्षणो अन्धकारः, 'रु' शब्दश्च अज्ञानलक्षणान्धकारविनाशकः, तथा च शिष्यहृदयगताज्ञानान्धकारनिवर्तने दक्षो, ज्ञानात्मकोद्योतकारको गुरुः । तत्रापि वरः श्रेष्ठो गुरुवरः तत्संबोधने हे गुरुवर ? हे जगद्गुरो श्रीरामानन्दाचार्यवर्य ! इह' अस्मिन् चराचरात्मके जगति तत्त्वं वेदादिद्वारा ज्ञातुं योग्यम् किमस्ति तत्त्वविषयकः प्रथमः प्रश्नः सर्वत्र किं शब्दः प्रश्नार्थकः । तथा 'विवुधैः' पण्डितैः श्रीवैष्णवैः तत्र विष्णोर्भगवतो जगदुत्पत्तिस्थितिलयकारणीभूतस्य श्रीसीताधिपतेरयोध्यानायकस्य इमे भक्ताः समुपासकाः श्रीवैष्णवास्तैर्विवु

धैर्ज्ञातृभिः परमत्युत्कृष्टं जाप्यं जप्तुं योग्यम् किमस्ति इति द्वितीयः प्रश्नः । तथेष्टं ध्यानं च किमस्ति, शास्त्रप्रतिपादितं मनोऽनुकूलं च ध्यानं किमस्तीति तृतीयः प्रश्नः ।

तथा मुक्तेर्मोक्षस्य संसारनिवृत्तिपूर्वकनिरतिशयानन्दप्राप्तिरूपस्य साकेतप्राप्तिरूपमोक्षस्य साधनम् उपायः कोऽस्ति, अर्थात्, मोक्षस्य कारणं ज्ञानं कर्म वा भक्तिर्वा कारणमथवा ज्ञानकर्मसहितभक्तिर्वा मोक्षसाधनमिति विविच्य कथयेति । तथा सत्सुमतिमतिमतः समुत्कृष्टबुद्धिशालिभिः सर्वदासमाराधनीयः पालनीयश्च धर्माणां शाक्तशैववैष्णवानां मध्ये एकः सर्वेषु अतिशयेन श्रेष्ठो मुख्यो धर्मः कोस्तीति । ते वैष्णवा विष्णोर्भक्ता कतिधा कतिप्रकारका भवन्ति ? यदि भेदो भवति तदा के के ते इति । तथा तेषां वैष्णवानां श्रीरामभक्तानां लक्षणं चिह्नं किमिति प्रश्नः, लक्षणप्रमाणाभ्यां प्रमेयस्य सिद्धिर्भवतीति कृत्वा श्रीवैष्णवलक्षणमावश्यकमिति लक्षणविषयकः प्रश्नः । तथा तैर्विष्णुभक्तैः कुत्र-कस्मिन् देशविशेषे ब्रह्मावर्तार्यावर्तादिषु निवासो वसतिः कर्तव्य इत्यपि कथयेति । श्रीरामचन्द्रप्रपन्नैः कालक्षेपः कथं कार्यः ? तथा एतेषां भगवद्भक्तानामुरुशुभदमत्युत्कृष्टमोक्षदम् नित्यनिरतिशयपरमपदप्रापकमाप्यं प्राप्तव्यं किं भविष्यति तदपिकथयेति चरमो दशमः प्रश्नः ॥४॥

भगवान् भाष्यकार श्रीरामानन्दाचार्यजी के मुख्य बारहशिष्य रत्न थे उनमें से श्रीसुरसुरानन्दाचार्यजी ने दुःख महोदधि में निमज्जमान जीवराशि को देखकर के उन दुःखी जीवों के उद्धार करने की इच्छा से स्वकीय गुरु महाराज श्रीरामानन्दा चार्यजी से दश प्रश्न पूछे हैं-हे पूजनीय गुरुवर ? इस असार मरुमरीचिका की तरह प्रतिभासमान दुःखनिधान संसार में तत्त्व (१) क्या है ? तथा विद्वान् वैष्णवों का सर्वजपों में श्रेष्ठ जाप्य (२) क्या है, अर्थात् कौन ऐसा जप है कि जो सर्वश्रेष्ठ हो, ध्यानों में सर्वोत्तम ध्यान (३) क्या है ? तथा सर्वोत्तम मोक्ष का साधन कारण (४) क्या है अर्थात् किस साधन के द्वारा साधक मोक्ष रूपपरमपद को प्राप्त करते हैं । धर्म अनेक प्रकार के हैं, उन धर्मों में सर्व श्रेष्ठ एक मुख्य धर्म (५) कौन है ?

वैष्णव कितने प्रकार (६) के होते हैं ? और उन वैष्णवों का लक्षण (७) क्या है ? अर्थात् किस चिह्न विशेष से जाना जासकता है कि ये वैष्णव हैं और



उन वैष्णवों को आर्यावर्त ब्रह्मावर्तादिक किस देश में निवास (८) करना चाहिये, एवं उन वैष्णवों को किस प्रकार से अहोरात्रादिकाल का यापन (९) करना चाहिये। तथा उपर्युक्त साधनों से युक्त जो हैं, उन वैष्णवों को मोक्षरूपफल विशेष को देने वा प्राप्त होने के योग्य पदार्थ क्या है ? अर्थात् इन सब साधनों के द्वारा प्राप्य (१०) वस्तु क्या है ॥४॥

आनन्दभाष्यकार जगद्गुरुश्रीरामानन्दाचार्य उवाच

**इत्थं पृष्टस्त्वया यः सकलहितकारः प्रश्नराशिर्गरिष्ठो,**
**वेद्यः सर्वश्रुतीनां जगति सुरसुरानन्द ? सद्योमया सः ।**
**प्राचीनाचार्यवर्यान् यतिपतिसहितान् सादरंसंप्रणम्य**
**सम्यक् शास्त्रानुसारं गुरुनिरत समाधीयते श्रूयतां तत् ॥५॥**

तत्त्व जिज्ञासया श्रीसुरसुरानन्दाचार्येण पृष्टः श्रीरामानन्दाचार्यो लोकोपकाराय प्रविवक्षुः प्राह-'इत्थं पृष्टस्त्वया यः' इत्यादि । हे सुरसुरानन्द ? इत्थं पूर्वोक्तप्रकारेण त्वया सुरसुरानन्देन यो विलक्षणोऽन्येनाकलयितुमशक्यः सकललोकानां हितकारकः कल्याणकारकः सर्वश्रुतीनां वेद्यः सकलश्रुतिभिरेव प्रतिपादयितुं योग्यो नतु प्रमाणान्तरेण त्वत्पृष्टप्रश्नस्य श्रुतिमात्रेण समाधान संभवः । गरिष्ठः अतिशयेन गहनो कठिनो वा जगति यः प्रश्नराशिः कृतो नतु एको द्वौवा सः प्रश्नराशिः, मया सद्यः समाधीयते, प्रश्नानन्तरमेव यथाशास्त्रं, तस्योत्तरं ददामि हे गुरुसेवानिरतसुरसुरानन्द ? सावधानेन श्रूयाताम् । किं कृत्वा यतिपतिसहितान् महर्षि श्रीबोधायनपुरुषोत्तमाचार्यादिसहितान् प्राचीनाचार्यवर्यान् श्रीराघवानन्दाचार्यवर्यान् स्वगुरुश्च सम्यक् प्रणम्य सम्यक् शङ्कानिवृत्तिर्यथास्यात्तथा शास्त्रानुसारं यथाशास्त्रं समाधीयते कथयामि तत् समाहितमनसा शृणु तस्य श्रवणं कुरु तदनुमननीयो लोके प्रकाशनीयश्चेत्यर्थः । यथा परमपुरुषश्रीरामस्य नमस्कारो ग्रन्थादौ आवश्यकस्तथैव गुरुनमस्कारोप्यावश्यक एव तदुक्तम् 'यस्य देवे पराभक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिताह्यर्थाः प्रकाशन्तेः महात्मनः' इति । गुरुश्च शिष्यगताज्ञानान्धकारनिवर्तको वेदाद्यध्ययनशीलः परब्रह्मनिष्ठश्च । 'परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो

निर्वेदमायात् नास्त्य कृतः कृतेन स तद्विज्ञानार्थं गुरुमेवाभिगच्छेत्समित् पाणिः श्रोतियं ब्रह्मनिष्ठम्' आचार्यवान् पुरुषो वेद' इत्यादिना गुरुसमीपगमनमावश्य कमेव । अन्यत्रापि गुरुस्वरूपं प्रदर्शितम् तस्माद् ब्रह्मैवाचार्यरूपेणावतिष्ठते भागवतैकादशस्कन्धेऽपि 'आचार्यं मां विजानीयान्नावमन्येत कर्हिचित् । न मर्त्य बुद्ध्या सूयेत सर्वदेवमयो गुरुः । परित्राणाय साधूनां विनाशाय च दुष्कृताम् । धर्मसंस्थापनार्थाय संभवामि युगे युगे, इति गीता । अन्यत्रापि-शिवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन । तस्मात्सर्वप्रयत्नेन गुरुमेव प्रसादयेत् । गुरुः कारुणिको देवि ? सुहृद्वै सर्वदेहिनाम् । वदान्यः सानुरागो हि ब्राह्मणश्च सदी क्षितः । मद्गतं हि मनो यस्य शान्तो दान्तस्ततैव च । निरहङ्कारः क्षमाशक्तो गुरुर्भागवतस्तथा । मद्वेत्ता मत्कथासक्तः श्रृणोति कथयत्यपि । नित्योत्सवप्रमु दितो जन्मकर्मादिभिस्तथा ।। इति। तथा भागवते एकादशस्कन्धे कथितम् 'मद भिज्ञं गुरुं शान्तमुपासीत मदात्मकम् । अमान्यमत्सरो दक्षो निर्ममो दृढसौहृदः ।। नृदेहमाद्यं सुलभं सुदुर्लभं प्लवं सुकल्पं गुरुकर्णधारम् । मयानुकूलेन नभस्वतेरितं पुमान् भवाब्धिं न तरेत् स आत्महा, इति । अन्यत्रापि 'प्राकृतैः संस्कृतैश्चैव गद्यपद्याक्षरैस्तथा । देशकालादिभिः शिष्यं बोधयेत् स गुरुस्मृतः । वामनकल्पादावपि-यो मन्त्रः स गुरुः साक्षाद्यो गुरुः स हरिस्मृतः । गुरुर्यस्य भवेत्तुष्टस्तस्य तुष्टेहरिः स्वयम् । इत्यादिगुरुलक्षणं विशेषतो यथाशास्त्र-मवगन्तव्यम् ।

यतेन्द्रियः शुचिः शुद्धवेशधृक् सुकुलोद्भवः ।
सदाचारपरोनम्रः शास्त्रज्ञोदेशनापटुः ॥
विरक्तधर्मनिरतो ध्यानाभ्यासी सुबुद्धिमान् ।
निग्रहेऽनुग्रहे चैव समर्थो देशिकोमतः ॥

एतादृशं गुरुलक्षणोपपन्नं जगद्गुरुश्रीरामानन्दाचार्यं शिष्यः श्रीसुरसुरानन्दाचार्यो यथावत् प्रश्नदशकं पप्रच्छ । शिष्यलक्षणमपि श्रुतिस्मृत्यादिग्रन्थे प्रतिपादितम् । तथा च श्रुतिः-परीक्ष्यलोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात् नास्त्यकृतः कृतेन तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्वतो ब्रह्मविद्याम्' इत्यादि । अत्रार्थे स्मृतिरपि भवति-'प्रशान्तचित्ताय चितेन्द्रिदाय प्रहीणदोषाय ययोक्तकारिणे । गुणान्विताया नुगताय सर्वदा प्रदेयमेतत्सततं मुमुक्षवे । यस्यव्यक्तिविशेषस्यान्तःकरणं मनः स्वाधीनम्, इन्द्रिये बाह्ये जयो भवेत् सर्वदोषरहितः स यथाशास्त्रं कर्मकरोति तदन्यत् त्यजति गुणयुक्तस्तथा गुरुसेवासु सदोद्यतः एतादृशगुणयुक्ताय मोक्षा भिलाषिणे एतत् शास्त्रप्रतिपाद्यं तत्त्वत्रयमुपदेष्टव्यम् । गुरुसेवापरायणस्यैव विद्या प्राप्ता भवति । यथोक्तं मनुस्मृतौ-यथा खनन् खनित्रेण नरो वार्यधि गच्छिति । तथा गुरुगतां विद्यां शुश्रुषुरधिगच्छति । ततश्चैतादृशलक्षणविशिष्टं श्रीसुरसुरानन्दाचार्यशिष्यमाचार्येण यथोपदिष्टं तदग्रेप्रतिपाद्यते ॥५॥



पूर्वोक्तरिति से श्रीसुरसुरानन्दाचार्यजी का दशों प्रश्नों को सुन करके भगवान् श्रीरामानन्दाचार्यजी कहते हैं-'इत्थं पृष्टस्त्वयायः' इत्यादि । हे सुरसुरानन्द ? तुमने पूर्वोक्त प्रकार से सकल लोगों के हितकारक सर्वश्रुति द्वारा प्रतिपादित अतिगूढ प्रश्न समुदाय को पूछा है । उनका उत्तर-श्रीपुरुषोत्तमाचार्यजी बोधायनं प्रभृति पूर्वाचार्य सहित प्राचीनाचार्यों एवं स्वाचार्य श्रीराघवानन्दाचार्यजी को नमस्कार करके शास्त्र के अनुकूल अथवा सर्वशास्त्र प्रति पाद्य उन सब प्रश्नों का यथावत् में उत्तर देता हूँ-सावधान होकर के उसको सुनो ? और उनका समीचीन रूपसे मनन करके लोक में प्रचार करो । जिससे अज्ञानान्ध संसारकूप पतित पुरुषों का उद्धार हो ॥५॥

(अथ प्रकृतिजीवेश्वरतत्त्वनिरूपणे प्रकृतिनिरूपणम्)

**पृष्टानामेकमाद्यं त्रिकमपिश्रृणुतद्भेदतो नामभेदै**
**र्नित्याज्ञाचेतना सा प्रकृतिरविकृतिर्विश्वयोनिः शुभैका ।**
**नाना वर्णात्मिकाऽजा त्रिगुणसुनिलयाऽव्यक्तशब्दाभिधेया**
**निर्व्यापारापरार्था महदहमितिसूरुच्यते तत्त्वविद्भिः ॥६॥**

पृष्टानामेकमित्यादि तत्त्वविद्भिः श्रीव्यासबोधायनादिभिः, पृष्टानां प्रश्ना नाम् मध्ये' आद्यं सर्वप्रथमप्रश्नम्' तत्त्वं किमित्याकारकम्' स्वरूपत एकमपि चिदचिदात्मकविशेषणेन विशिष्टतया केवलान्वयिसंख्यां प्राप्तमपि तद्भेदत स्तयोश्चिदचितोः परमेश्वरस्य च परस्परं भेदतो नामभेदैश्चित्परमेश्वरबोधकतत्त

महादेवशिवेन सह मम नित्यसम्बन्धो जायतामितीच्छया एतत् द्वयं सम्प्रति एतत्काले शोचनीयतां लोके निन्दापात्रमभवत् । 'कला च सा कान्तिमती कलावतः' कलावतश्चन्द्रस्य जगति प्रसिद्धप्रकाशात्मिका कला तथा अस्य समस्तस्य लोकस्य संसारस्य नेत्रकौमुदी नयनानन्दकारिणी त्वं पार्वती चेत्यर्थः । अत्र श्लोके कुमारसंभवीये सा कान्तिमती चन्द्रस्य कला इत्यत्र तत्पदेन चन्द्र कलाया जगतिप्रसिद्धिं द्योतयति । तथैव प्रकृतमङ्गलश्लोके-'रामप्रिया सा' इत्यत्रोपात्तस्तच्छब्दः प्रसिद्धरूपमर्थमेव बोधयति । को नु खलु न जानातिजन कजायाः स्वरूपस्थितिगुणादिकञ्चेति । एतादृशीलोकप्रसिद्धाशक्तिरूपापि सर्व शक्तिमती वात्सल्यादिगुणविशिष्टा नोऽस्मभ्यं ग्रन्थसम्पादनकर्त्रेऽध्येतृभ्यश्च 'अ खिलसम्पदः' सर्वाः सम्पत्तीः लीलाविभूत्यन्तर्गतसर्वप्रकारकैश्वर्याणि नान्यश रणलभ्यसायुज्याख्यस्वधामप्रापकमुक्तिञ्च 'अनिशम्' अहर्निशं सर्वकाल-मित्यर्थः । दत्तात् ददातु प्रापयत्वित्यर्थः । सेयं जनकजा नमस्कर्तृभ्योऽभिलषितं पुरुषार्थं सततं वितरतु, इतितात्पर्यः ।

पुनः सा श्रीजानकी कीदृशी तत्राह-दिगीशैरित्यादि, दिशां प्राच्यादिदि शामीशोऽधिपाल इन्द्रादिर्नायको लोकपाल इत्यर्थः । एतादृशानेकदिगीशैर्लो कपालादिभिर्भोग्यं भोक्तुं योग्यपदैश्वर्यमथवा विविधवनिताधनधान्यादिपरि पूरितं स्वर्गराज्यादिकम् । यत्रोक्तं-'यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं च तत्सुखं स्वः पदास्पद' मिति । एतादृशविलक्षणसुखात्म कत्वस्य यत् राज्यम्, यच्च वाजपेयादियागाद्यनुष्ठातृभिरेवलभ्यते तदन्यस्य स्वर्गमात्रप्राप्तिरितिशास्त्रोक्तेः । एतादृशं दिगीशैर्भोग्यं यद्राज्यसुखम् तत्, 'यदपाङ्गसंश्रयम्' यस्या जनकजाया श्रीरामपत्न्या, अपाङ्गनेत्रयुगलयोरवलो-कनमेवाश्रयः सम्यगवलोकनमेवकारणम्, यस्यतादृशम् तदैश्वर्यम् अर्थात् इन्द्रादिदिक्पालानां यन्महद्वैभवम् तद्भगवत्या जनकजाया एव कृपाधीनं तदीय कृपयैवेन्द्रादीनां विलक्षणैश्वर्यप्राप्तिर्जातेतिभावः । अपि चेदमद्भुतं जगत् आश्चर्य जनकमनेकप्रकारकम् चेतनाचेतनसंयुक्तं तदपि यदपाङ्गसंश्रयम्, अर्थात्-यदिदं विचित्रप्रकारकम् जगत्तदपि जनकजाकृपाधीनमेव । जगतोविवरणं करोति-'चित्रं चाखिलमद्भूत' मिति । अखिलं स्थावरजङ्गमात्मकम् चित्रमनेकप्रकारतया



मनुष्यदेवनारकतिर्यक् कीटपतङ्गादिभेदादतीव दुर्बोधमिव भासमानं जगत् यत्कृपाधीनं यस्याः कटाक्षमात्रेण करामलकवत्सुज्ञेयम् ।

शुभगुणेति-या जनकजा शुभगुणवती शुभानि मङ्गलानि अर्थात् मङ्गल प्रदानि गुणाः पातिव्रत्यशरणागतरक्षणप्रभृतिका ये गुणास्ते सन्ति यस्या सा शुभगुणा जनकजा, तदपाङ्गाश्रयमिदं जगदिति । तथा-'या वात्सल्यसीमा च' या च जनकजा वात्सल्यस्य दयादेः सीमेव सीमा, अर्थात् दयादीनामवधिभूता । दयाधीना सा कृतोपद्रवमपिखररावणादिकं प्रति दयैवाविष्कृता, तदुक्तमादि कविना श्रीमद्रामायणे 'तेन मैत्री भवतु ते यदि जीवितुमिच्छसि' इति नतु तदुपरिक्रोधमकरोदिति । अर्थात् रावणादिनोपद्रुतापि सर्वशरीरकस्यायोध्याधि पतेरेवायं शरीररूपो न तु तदन्य इति, अयं दयनीय इति मत्वा तदुपर्यपि दयैवदर्शिता-'तेन मैत्री भवतु ते' इत्यादिना । अतो ज्ञायते यदियं दयामूर्तिरिति मत्वा प्राहुराचार्याः-'वात्सल्य सीमे'ति । तदाहुर्जगद्गुरवः श्रीरामभद्राचार्याः-

'मधुरभणितये पतिव्रतानां मुकुटमणिं कलये मही कुमारीम् ।
पतिकृतरिपुपातनप्रतिज्ञादलनभयादहिते प्यदत्तशापाम् ॥

'विद्युत्पुञ्जसमानकान्तिः' विद्युत् तडित् तस्याः पुञ्जः समुदायः तेन समाना सदृशी कान्तिः शरीरशोभा रमणीयता यस्याः सा विद्युत्पुञ्जसमानकान्तिः यदि कदाचित् एकदैवानेका विद्युतो मेघमण्डले विस्फूर्यमाणा भवेयुस्तासां या तीक्ष्णा कान्तिस्तत्सदृशकान्तिमती श्रीजनकजेत्यर्थः । 'अमितक्षान्तिः' अपरिमे-यक्षान्त्यादिगुणवतीत्यर्थः । अमातुमशक्यक्षमादिगुणसारभूतेतिभावः । तथा 'सु पद्मेक्षणा' प्रफुल्लितकमलसदृशनेत्रवतीत्यर्थः । तदीया क्षान्तिः केनापि प्रमाणेन मातुं योग्या न भवतीति । तथोक्तमादिकविना श्रीमद्रामायणे-रावणवधादनन्तरं जीवतिरावणे श्रीसीतां क्षोभयन्तीनां राक्षसीनां वधायाज्ञां समीहमानं श्रीहनुमन्तं प्रतिवचनम्-'राजसंश्रयवश्यानां कुर्वन्तीनां पराज्ञया । विधेयानां च दासीनां कः कुप्येत् वानरोत्तम । भोग्यवैषम्ययोगेन पुरा दुश्चरितेन च । मयैतत्प्राप्यते सर्वं स्वकृतं ह्युपभुज्यते । प्राप्तव्यं तु दशायोगान्मयैतदितिनिश्चितम् । दासीनां रावणस्याहं भर्षयामीह दुर्बला । आज्ञप्ता रावणेनैता राक्षस्योमामतर्जयन् । हते तस्मिन्न कुर्वन्ति तर्जनं वानरोत्तम' इति । अत्र 'स्वकृतं ह्युपभुज्यते' इति श्रीसी

तायाः कथनं मनुष्यदेहाभिप्रायेण नतु लोकोत्तरशरीराभिमानेन, सम्प्रति लीला सम्पादनायमनुष्यशरीरवत्वादितिज्ञेयम् ॥२॥

सर्व जगत् के कारण तथा सर्वान्तरात्मा सर्वशेषी भगवान् श्रीरामजी को नमस्कार करके जगत् जननी सर्वलोक जनक शक्तिस्वरूपा श्रीजानकीजी विदेहकन्या का नमस्कार द्वितीय श्लोक से करते हैं-'**ऐश्वर्यम्**' इत्यादि। इन्द्र कुवेर यम वरुण प्रभृतिक जो दिक्पाल हैं उनसे भोग करने के लायक स्वर्ग राज्यरूप महा ऐश्वर्य तथा देव मनुष्य से लेकर चौरासी लक्ष योनि विशेषों से विचित्र अनेक प्रकारक अतएव माया की तरह अत्याश्चर्यजनक यह परिदृश्यमान स्थूल सूक्ष्म साधारण स्थावर जङ्गमात्मक प्रपञ्च समुदाय जिस श्रीजानकीजी की कृपा के अधीन है तथा जो अनेक शुभ गुणवाली है तथा वात्सल्यादि गुणों की सीमा अवधिरूप हैं तथा क्षमा की महोदधि हैं भक्तों के अपराध को अपने हृदय में स्थान न देनेवाली है। बिजली के समुदाय की तरह कान्ति-शोभावाली तथा कमल के समान नेत्र युक्त हैं ऐसी श्रीरामजी की अतिप्रिया तथा इस श्रीसम्प्रदाय की प्रवर्तिका हैं ऐसी श्रीसीताजी मुझको मुक्ति आदि समस्त सम्पत्ति दें, अर्थात् एतादृश श्रीसीतादेवीजी को मैं नमस्कार करता हूँ ॥२॥

**'प्रत्यूहव्यूहभङ्गं विदधदुरूबलश्शक्तिमान् सर्वकारी**
**भूरिःश्रेयः प्रतापो मुनिवरनिकरैः स्तूयमानोविमानः।**
**रक्षोदैत्यादिनाशी क्षुभितजलनिधिर्लोकजिल्लोकमान्यो**
**धन्यो नो मङ्गलौघं सपदि सुकुरुताद्रामशस्त्रास्त्रसङ्घः ॥३॥**

सर्वविघ्नविनाशकरं सर्वशेषिणं जगतोऽभिन्ननिमित्तोपादानकारणंभगवन्तं सर्वान्तर्यामिणं श्रीरामचन्द्रं नमस्कृत्य तदनु श्रीरामाभिन्नां श्रीरामशक्तिस्वरूपां तस्येच्छया स्थावरजङ्गमसाधारणसर्वजगदुत्पत्तिस्थितिप्रलयनिमित्तां श्रीजनकजाञ्च नमस्कृत्य तदनन्तरं श्रीरामकार्ये करणभूतं तदीयशस्त्राद्यधिष्ठापकदेवं श्रीरामगौरवेण गौरवान्वितं नमस्करोत्याचार्यः-प्रत्यूहव्यूहभङ्ग, मित्यादि। सर्व जगत्पालकस्यभगवतो रामस्य शस्त्राणि बाणखड्गादीनि अस्त्राणि-ब्रह्मास्त्रादीनि च तादृशानां श्रीरामशस्त्रास्त्राणां सङ्घः समुदायः। एतेन श्रीरामस्य



शस्त्रादिकं नैकमात्रमपितु विभिन्नप्रकारकमनेकं चेत्यभिव्यञ्जितम्। स उपर्युक्तसंङ्घः नः अस्माकम् ग्रन्थकर्तृणां तदध्येतृणाञ्च। मङ्गलौघं मङ्गलानां कल्याणानामोघं समुदायं नत्वेकं द्विकं वा, सपदि झटिति नतु विलम्बेन सु सम्यक् कुरुतात् करोतु। किं कुर्वन् मङ्गलङ्करोतु तत्राह-प्रत्यूहव्यूहभङ्गं विदधत्, प्रत्यूहो विघ्नस्तस्य व्यूहः समुदायस्तस्य विघ्नसमुदायस्य भङ्गं विनाशं विदधत् सम्पादयन्। विघ्नो हि सर्वकार्यस्य प्रतिबन्धकः प्रतिबन्धके विद्यमाने कार्यं न भवतीति प्रतिबन्धकाभावः कारणमिति स्थितिः। ततश्च यावत्पर्यन्तं प्रतिबन्धक पापविशेषस्य विनाशो न स्यात् तावत्पर्यन्तं कल्याणादिकं कार्यं न सम्भवति। ततः प्रथमं विघ्नं विनाश्य तदनु माङ्गलिकं माङ्करोतु इत्यभिप्रायेणाह प्रत्यूहव्यूह भङ्गमिति। प्रथमतः श्रीरामशस्त्रादिर्मदीयं विघ्नं विनाशयतु, तदनु कल्याणं करोतु इति कवेरभिप्रायः। श्रीरामशस्त्रास्त्रेऽन्यदपि विशेषणं दर्शयति-ऊरुबलः शक्तिमानिति ऊरुमहद्बलं बेगोयस्य स महाबेगवानित्यर्थः पुनः कीदृशः शस्त्र-सङ्घस्तत्राह शक्तिमान्। सर्वतो विलक्षणाशक्तिर्विद्यते यस्य तादृशः। एतादृश विलक्षणशक्तिमद् गृहीतो जयन्तः शक्रपुत्रः स्वरक्षणाय कृतनाना प्रयत्नोऽपि अन्यत्र कुत्रचिद् शरणमलभमानः पुनः श्रीरामसमीपे आगत्य शरणागतिं स्वी कुर्वन् रक्षितशरीरोऽभवदिति श्रीमद्रामायणीया कथात्रानुसन्धेयेति। तथा सर्व-कारी। श्रीरामस्य यद् यदीप्सितं तत् तत्सर्वं कार्यं सम्पादयति सप्ततालगिरि रसातलादिकाप्रतर्क्यकार्यस्यापि सम्पादकः। भूरिश्रेयः प्रतापः भूर्योरनेकशः श्रेयांसि प्रतापाश्च यस्य सः, अनेकश्रेयः प्रतापादियुक्तो ब्रह्मरामशस्त्रास्त्रसङ्घ इति। मुनिवरनिकरैः स्तुयमानः, मननान्मुनिर्मननशीलामुनयो मुनीनां वराः श्रेष्ठा स्तेषां निकरैः स्तुतिविषयतां नीयमानः अर्थात् विगतरागमननशीला अपि मुनयो यस्य स्तुतिं कुर्वन्तीति, 'यस्यामलं नृपसदस्सु यशोऽधुनापि गायन्त्यघघ्नमृषयो दिगिभेन्द्रपट्टम्। तन्नाकपालवसुपालकिरीटजुष्टं पादाम्बुजं रघुपतिं शरणं प्रपद्ये ॥' इतिश्रीशुकार्योक्तेस्तादृशोऽस्यास्त्रसङ्घ इति। विमानः विगतं मानं यस्य स विमानः, रावणखरदूषणबालिवधप्रभृत्यनेकविलक्षणकार्यकारित्वेपि अहमेवैवं विधो यच्छ्रीरामस्यैतादृशं कार्यं करोमि नान्य एतादृशकार्यकरणे समर्थ इत्येवं प्रकारकमभिमानं न विद्यते यस्यातो विमानः। एकदा गरुडस्य मनस्येव-

च्छब्दविशेषैः त्रिकम् शब्दापेक्षयार्थापेक्षया च भिन्नं सत् त्रिविधं त्रिप्रकारकं तत् तत्त्वमुच्यते, इति तत्तत्वं श्रृणु' सावधानमनसेति शेषः। तत्र या एकाचित् प्रकृतिः सा नामभेदैर्नाम्नां पर्यायवाचिशब्दानां भेदेनानेकेति कथ्यते यथा नित्या उत्पादविनाशरहिता अज्ञा ज्ञानभिन्ना अचेतना चैतन्यवर्जिता प्रकृतिः सर्वस्य विकारजातस्य कारणम्। अविकृतिर्न भवति सा कस्यापिविकाररूपा। विश्वस्य महदादिसर्वकार्यस्य योनिनिर्दानम्। शुभा शोभमाना नाना वर्णात्मिका, अजा, त्रिगुणसुनिलया, अव्यक्तशब्दवाच्या, निर्व्यापारा, परार्था परप्रयोजनायैव प्रवर्तमाना, महदहमितिसूः, महत्तत्वादेर्जनितेत्युच्यते सा प्रकृतिरिति। तदेतदाहुः श्रौतप्रमेयचन्द्रिकायाः प्रकृतिपरिच्छेदे जगद्गुरवः श्रीश्रियानन्दाचार्य सिद्धान्तविजयिनः-सत्वरजस्तमः शालिद्रव्यं प्रकृतिसंज्ञकम्। रामस्यशक्तिरूपञ्च त्रिगुणञ्च सविक्रियम्' इति। शब्दस्पर्शविहीना च रूपादिरहिता तथा त्रिगुणैषा जगद्योनिरनाद्यन्तवती मता। प्रकृति रामशक्तिश्चरामाधीनाहिसम्मता। रामेणाहितवीर्या सा सर्जने प्रभवेत् खलु। अव्यक्ताख्य प्रधानस्य परिणामो महानिति' इति च।

विशेषः श्रीसुरसुरानन्दाचार्यः चतुर्थश्लोकेन प्रश्नदशकं तत्त्वादिकं पृष्टवान्। तस्योत्तरम्, उद्देशक्रमेण प्रथमं तत्त्वं किमितितत्वस्योत्तरं दातुमाह पृष्टनामेकमाद्यम्' इत्यादि।

तत्त्वविद्भिः तत्त्वं विदन्ति जानन्ति ये ते तत्त्वविदः श्रीपराशरव्यासबोधायनादिमहर्षयः प्राचीनाः सम्प्रदायप्रवर्धका आचार्याः तैः पृष्टानां प्रश्नविषयीकृतानां तत्त्वादिदशसंख्यकवस्तूनां मध्ये यत् प्रथममादिमं तत्त्वं तत् स्वासाधारणरूपेणैकमपि, भेदतोऽवान्तरभेदेन अचेतन चेतन परमेश्वर भेदात्, त्रिकं त्रिप्रकारकं भवति जडतत्त्वं चेतनतत्त्वमीश्वरतत्वञ्चेति। त्रयोऽवयवा अचेतन चेतनादिकावान्तरभेदप्रकारा यस्य तत्त्वसमुदायस्य तत् त्रिकमुच्यते। तथा तत् अचेतनादितत्वं नामभेदेन त्रिधा भवतीति श्रृणु। यथा घट इति नाम अर्थात् घट इति शब्दोभिन्नः, पट इति शब्दोऽपि भिन्न इति नामभेदेन शब्दभेदात्, घटपटयोर्भेदः। यथा वा घटस्य कार्यं जलाहरणं पटस्य च कार्यं प्रावरणादिकमिति कार्यभेदाद् घटपटयोर्भेदस्तथैव प्रकृतेऽचेतनमिति चेतनमिति ईश्वर इति च



शब्दभेदादचिच्चिदीश्वराः परस्परं विभिन्ना एव। यथा च घटपटयोः स्वरूपादितो भेदेऽपि द्रव्यत्वेनाभेदः तथैव चिदादीनां नामादिभेदेन भिन्नत्वेऽपि असाधारणधर्मेणैकत्वमेव। तत्त्वमित्यत्रैकवचनबलेनैकत्वं निश्चीयते, तथाऽचेतनादि शब्दभेदात् त्रित्वं प्राप्यते। तत्राचेतनपदेन प्रकृतेश्चेतनपदेन जीवराशेरीश्वरपदेन च सर्वशेषिणो जगत्कारणस्य सर्वनियामकपरब्रह्मणः श्रीरामस्य ग्रहणं भवति 'ब्रह्मशब्दश्च महापुरुषादिपदवेदनीयनिरस्ताखिलदोषमनवधिकातिशयासंख्येय कल्याणगुणगणं भगवन्तं श्रीराममेवाह सामान्यवाचकानां पदानां विशेषार्थे पर्यवसानात्' (आनन्दभाष्य १।१।१) इति जगद्गुरुश्रीरामानन्दाचार्योक्तेः। तदेतन्मिलितं सत् तत्त्वपदवाच्यं भवति एतादृशतत्त्वस्य ज्ञानमेव मोक्षसाधनमिति भावस्तत् 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' 'तरतिशोकमात्मवित्' तदेवं विद्वानमृत इह भवति' इत्यादिस्थले प्रदर्शितम्।

ननु कुत्रचित् पञ्चविंशतितत्त्वमुदाहृतम्-'पञ्चविंशतितत्वज्ञो यत्र तत्राश्रमे वसेत्। जटीमुण्डीशिखीवापि मुच्यते नात्र संशयः' तत्र मूलप्रकृतिरेका, महदहङ्कारपञ्चतन्मात्राणीति सप्तप्रकृतिविकृतयः, षोडशकविकारः, (पञ्चज्ञानेन्द्रियाणि पञ्चकर्मेन्द्रियाणि, इति दश, उभयात्मकं मनः पञ्चमहाभूतानीति मिलित्वा षोडशः) पुरुषश्चेति सर्वसंकलनया पञ्चविंशतिरेव तत्त्वम्। क्वचिदेतत् 'क्लेश कर्मविपाकाशयैरपरामृष्ट ईश्वरः' इतिलक्षणलक्षितेश्वरेण सह षड्विंशति तत्त्वम् क्वचित् द्रव्यगुणकर्मसामान्यविशेषसमवायाभावात्सप्तैव तत्त्वम्। क्वचिच्च प्रमाणप्रमेयसंशयप्रवोजनदृष्टान्तसिद्धान्तादिकाः षोडशपदार्था व्याख्याताः। येषां ज्ञानेन मोक्षमिच्छन्ति वादिन इति तेषां मतं खण्डयितुमाहाचार्यः 'त्रिकम्' इति, अर्थात् न तत्त्वं पञ्चविंशतिप्रकारकं न वा सप्तषोडशात्मकम्। किन्तु त्रिकमेव। ननु अचिच्चिदीश्वर इत्येवं गणनयापि त्रित्त्वसंख्या लाभसंभवेन संख्यावाचकपदकथनं निरर्थकमिवाभाति? सत्यं न्यूनाधिकसंख्याव्यवच्छेदाय तत्सार्थक्यात्। अर्थान्नतत्त्वमेकमेव केवलाद्वैतमतवत् नवा ततोऽधिकं किन्तु त्रिकमेवेति द्योतनाय त्रिकपदं 'अद्वैतश्रुतिवृन्दस्य विशिष्टाद्वैतबोधिता। देहात्मनोर्विभिन्नत्वे देहिनश्चैकता यथा। भेदे चिदचिदीशानां विशिष्टस्यैकता तथा।' इत्यादिरूपेणाचार्यसार्वभौमश्रीश्रियानन्दाचार्योक्तेः। 'प्रधानक्षेत्रज्ञप-

तिर्गुणेश इति च श्रुतौ । प्रधानजीवब्रह्मेति तत्त्वत्रयं समीरितम्' इति च प्रमिता
क्षरावृत्तिसाराख्यश्रीबोधायनमतादर्शे जगद्गुरुश्रीपूर्णानन्दाचार्योक्तेस्तत्त्वत्रय-
मेवेतितत्वम् । एतेनेदं ग्रन्थरत्नं पूर्वाचार्यसिद्धान्तान्वितमितिसूचितम् । अथवा
स्पष्टप्रतिपत्यर्थमिति केचन । अथवा तत्त्वत्रितयान्यतमव्याप्तमिति व्याप्तिला-
भायैव, अर्थात् यदि तत्वं तदा अचिदाद्यन्यतममेव, न न्यूनं नाप्यधिकमिति ।
तत्त्वविषियेन्यूनाधिकसंख्यावादिनां मतमुपरिष्टान्निराकरिष्यते ।

तत्र तत्त्वत्रयविषये-चिदचिदीश्वरश्चेति केचित् । अचिच्चिदीश्वरश्चेति-
अन्ये । तत्र कश्चिच्चित्तत्त्वमधिकृत्यप्रथमं वक्तिस्वाभिप्रायमपरश्चाचित्तत्त्वमिति
का प्राथमिकीव्यवस्थेति चेत्तेषामयमाशयः-यदचितत्तत्वं तस्य हेयतया ज्ञा-
तव्यत्वम्, ईश्वरस्य चोपादेयतया ज्ञातव्यत्वम् । एवमुभयोस्तत्त्वयोरधिकारि
णश्चेतनजीवस्य स्वरूपं प्रथमं ज्ञातव्यम् जीवज्ञानाभावे को हि अधिकारी
स्यात् ? ज्ञाता वा कथमिति जीवतत्त्वस्यैव प्राथम्यं कृतवानिति । आचार्याश
यस्तु-यावत्पर्यन्तं प्रकृतेर्ज्ञानं न स्यात् तावत् प्रकृत्यपेक्षया जीवात्मा पर इति
जीवस्य प्रकृत्यपेक्षयापरत्वं न सम्भवेदतः प्रथमतः प्रकृतेर्जडाया एवोपक्रमः
कृतः । अर्थात्प्रथमतः प्रकृतिं ज्ञात्वा तदनन्तरं प्रकृत्यन्तर्वर्तिनं जीवात्मानं सम्यग्
विज्ञाय तदन्तर्यामिणः शरीरस्यात्मवदुभयाभिमान्निन ईश्वरस्य स्वरूपज्ञानं सम्पा
दनीयम् । अचिदारभ्यकथनम्, अन्नमयकोशादारभ्यानन्दमयपर्यन्तस्य प्रतिपादनं
कुर्वन्त्याः श्रुतिमर्यादानुकूलमिति, अत आचार्येणाचिदारभ्येश्वरपर्यन्ततत्त्वत्र
यस्य प्रतिपादनं कृतम् । येन जीवमुपक्रम्य चिदचिदीश्वररूपतत्त्वत्रयस्य परिग
णनं कृतं तन्मते 'भोक्ताभोग्यं प्रेरितारं च मत्वा 'पृथगात्मानं प्रेरितारं च मत्वा'
'ज्ञाज्ञौ जीवेशावीशानीशौ' इत्यादिश्रुतेरानुकूल्यमिति तस्मात् क्रमद्वयमपि
वेदान्तानुकूलमेव । वस्तुतस्तु चेतनो हि यज्ञाधिकारी यदा शरीरादिभिन्नं परलो
कगामिनं विजानीयात्तदैव परलोकसाधकयागादिकर्मणि प्रवर्तेत इति पूर्वमचि
तोज्ञानमावश्यकं तत एव प्रवृत्तिर्वेदविहितजीवकर्मणि अत आचार्येण प्रथम
मचित् एवोद्देशक्रमेणाभिधानं कृतमिति सिद्धान्तानुयायिनामुद्गारः । अत्रैव 'प्र
धानक्षेत्रज्ञपतिर्गुणेशः' इति च श्रुतिः, 'प्रधानजीवब्रह्मेति तत्त्वत्रयं समीरितम्'
इति वदन्तः श्रीबोधायनमतादर्शकारा अपि अनुकूलाः ।



प्रकारत्रयेण तत्त्वविनिर्णयो भवति, उद्देशो लक्षणं परीक्षा चेति । तत्र
नाम्ना पदार्थसंकीर्तनमुद्देशः, यथा-द्रव्य-गुण-कर्म-सामान्यमित्यादि, तेषा
मुद्देशः । इहापि 'अचिच्चिदीश्वरः' इति । उद्दिष्टस्यासाधारणधर्मो लक्षणम् यथा
गन्धवत्वं पृथिव्या लक्षणम् । लक्षणं तदेव भवति यदव्याप्त्यतिव्याप्त्यसम्भव
रूपदोषत्रयशून्यं भवेत् । यथा केनचिन्नीलरूपवत्वं गोर्लक्षणं क्रियेत तदा नील
रूपात्मकलक्षणस्य श्वेतगवि विरहेण लक्ष्यव्यापकत्वाभावेनाव्याप्तिः स्यात् ।
एवं यदि श्रृङ्गवत्वं गोर्लक्षणं कुर्यात् तदा श्रृङ्गित्वलक्षणस्य लक्ष्यभिन्नमहिषा
दावपि विद्यमानत्वेनालक्ष्यगतत्वादतिव्याप्तिः स्यात् । तथा यदि कश्चिदेकशफ
वत्वं गोर्लक्षणं कुर्यात्तदा गोमात्रस्य द्विशफवत्वेन लक्ष्यमात्रेऽसत्वादसम्भवः ।
तस्मादेते नीलरूपवत्वादयो न गोर्लक्षणम्, अव्याप्त्यादिदोषग्रस्तत्वात् किन्तु
सास्नावत्वमेव सकलदोषरहितं सल्लक्ष्यगवादिसकलव्यक्तिष्वनुगतत्वात्तदेवलक्ष
णम् । अर्थात् यस्य योऽसाधारणधर्मः स एव तस्य लक्षणम् । ननु अव्याप्त्या
दिदोषदुष्टस्य लक्षणत्वे को दोष इति चेत्-श्रृणु तत्र दोषम् । तथा हि लक्षणं यद्
भवति तदितरभेदानुमाने साधनहेतुर्भवति, तेन लक्षणरूपहेतुना पक्षे लक्ष्ये इत
रभेदः साधितो भवति । यथा पृथिव्यादौ गन्धवत्वहेतुना पृथिवीतर जलादिभेदः
साध्यते पृथिवी स्वेतरेभ्यो भिद्यते गन्धवत्वात् । यदि लक्षणेऽव्याप्त्यादिरूप
कश्चिद् दोषोभवेत्तदा दोषवता हेतुना साध्यं साधितं न स्यात् प्रत्युत तादृशहे
तोर्हेत्वाभासतयाऽसाधकत्वमेव जलादिहेतुना ह्रदे वह्न्यनुमानवत् । तत्र यदि
अव्याप्तिदोषदुष्टं नीलरूपवत्वमेव हेतुर्गोः स्वीक्रियेत तदा तदेवेतरभेदानुमापकं
स्यात् गौ स्वेतरेभ्यो भिद्यते नीलरूपवत्वात्, यल्लक्षणं स एव हेतुः स्यात्, तत
श्चपक्षतावच्छेदकगोत्वाक्रान्ते श्वेतगविनीलरूपवत्वस्याभावेन पक्षैकदेशे श्वेत
गवि नीलरूपवत्वहेतोरभावेन पक्षैकदेशे हेतोरभावरूपभागासिद्धिर्दोषः स्या
दिति तादृशहेतुना गोमात्रे इतरभेदानुमानं न स्यादित्ययमेव दोषोऽव्याप्तिदोष
दुष्टलक्षणस्य हेतुकरणे स्यात् ।

एवं यदि अतिव्याप्तिदोषदुष्टलक्षणहेतुकरणे तेन इतरभेदानुमानं कुर्यात्
तदा इतरभेदानुमाने व्यभिचारदोषः स्यात् । तथा हि यथा श्रृङ्गित्वमतिव्याप्ति
दोषदुष्टं गोर्लक्षणं तादृशलक्षणरूपहेतुना यदि गौः श्वेतरेभ्यो भिद्यते श्रृङ्गित्वात् ।

अत्र शृङ्गित्वस्य विपक्षे अर्थात् साध्याभाववति महिषादौ सत्वेन तत्र गवेतरभेदात्मकसाध्यं न विद्यते किन्तु गो भेद एव विद्यते इति साध्याभाववति हेतोर्विद्यमानतया हेतोर्व्यभिचरितत्वम् । वह्निसाध्यकपर्वतपक्षकप्रमेयत्वहेतुवत् साध्य साधकत्वं न स्यादिति न व्यभिचरितत्वादितरभेदानुमानमतिव्याप्तलक्षणहेतुना सम्भवेत्तस्मादतिव्याप्तहेतोर्न साध्यसाधकतेति, अयमेव दोषोऽतिव्याप्तिदोष-दुष्टस्य भवति तस्माल्लक्षणेऽतिव्याप्तिः परिहरणीयेति ।

असम्भवदोषदुष्टलक्षणस्य हेतुतयोपादानं कुर्यात् तदा इतर भेदानुमाने स्वरूपासिद्धिरायाति, तथाहि-एक सफवत्वं लक्षणं क्रियते, तञ्च हेतुं कृत्वा यदि स्वेतरभेदानुमानं करिष्यति तदा एकशफवत्वहेतोर्गोरूपपक्षे कुत्राप्यसत्वेन पक्ष मात्रे हेतोरभावः स्वरूपासिद्धिरिति स्वरूपासिद्धिर्दोषः । अयञ्च पक्षताज्ञान प्रतिबन्धकः, ततश्च साध्यव्याप्यहेतुमान् पक्ष इत्याकारकपरामर्शो न स्यात्, परामर्शाभावे च कारणाभावादनुमित्यात्मककार्यं न स्यादिति । अर्थात् हेत्वभाववान् पक्ष इति विरोधिनिश्चयसत्वे हेतुमान् पक्ष इति पक्षधर्मताज्ञानं न स्यात् तदभावे तद्घटितसाध्यव्याप्यहेतुमान् पक्ष इति परामर्शो न स्यात्तदभावेऽनुमितिरूपं कार्यं न स्यात्, कारणाभावस्य कार्याभावव्याप्तत्वात् । ततश्च यत्रासंभवो दोषो लक्षणस्य तत्र तादृशलक्षणात्मकहेतुना नेतरभेदानुमितिः स्यादित्येवमव्याप्त्यादिदोषदुष्टलक्षणस्य न कार्यक्षमतेत्यतोऽव्याप्त्यादिरहितमेवनिर्वचनीयम् । तदनन्तरम्-अर्थादुद्देशानन्तरं लक्षणं लक्षणानन्तरं परीक्षा, लक्षितस्य यथावल्लक्षणं संभवति नवेति विचार एव परीक्षा, इत्येवमुद्देशलक्षणपरीक्षेति त्रिविधा शास्त्र मर्यादेति स्थितिः ।

अत्र च अचिच्चिदीश्वरस्तत्त्वत्रयमित्युद्देशो दर्शितः । तदनन्तरमुद्दिष्टस्य लक्षणं कर्तव्यं ततः परीक्षेतिक्रमे प्रथमोद्दिष्टाचित् प्रकृतेर्लक्षणादिकं कर्तुमाचार्यः प्राह-'नित्याज्ञाऽचेतना सा प्रकृति' रित्यादि । सेयं प्रकृतिः सर्वस्य महदादिमहाभूतान्तजडवर्गस्योत्पादनं प्रकरोति सर्वं कार्यजातमुत्पादयतीतितद्व्युत्पत्तेः । सा च स्वयमविकृतिर्न कस्यापि कार्यरूपा किन्तु कारणमेव सर्वस्य । यदि कुतश्चिदियमुत्पद्येत तदा महाभूतादिवत् विकाररूपा स्यान्नत्वेवं, तथात्वेऽनवस्था स्यात् 'मयाध्यक्षेण प्रकृतिः सूयते सचराचरम्' इतिगीतोक्तदिशा सर्व



विकारजातस्य कारणं प्रकृतिस्तस्या अपि कारणान्तरं स्यात् कारणान्तरस्या विकृतत्वे प्रकृतेरेव तथात्वं मन्तव्यम् । कारणान्तरस्य कार्यत्वेऽर्थात् जन्यत्वे तस्यापि कारणान्तरजन्यत्वम् । एवं कारणान्तरस्यापि जन्यत्वे तस्यापि किमपि कारणान्तरं वक्तव्यमित्येवमनादिप्रवाहकल्पनेऽनवस्था दुरवस्था स्यात् । ततः मूलप्रकृतिरविकृतिरेव न कास्यापि सा विकाररूपा किन्तु सर्वस्य जनयितृस्वयं विकाररहितैव । तदुक्तम्-ईश्वरकृष्णेन-'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृति विकृतयः सप्त । षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः' इति । प्रकृति प्रधानकशास्त्रस्य संक्षेपतश्चत्वारोऽर्थाः प्रतिपाद्या भवन्ति । तत्र कश्चिदर्थः सर्वस्य मूलकारणं प्रकृतिः कश्चिदर्थः प्रकृतिविकृतिः यथा महत्तत्वमहंकारः पंच सूक्ष्मभूतानि गगनवायुतेजोजलपृथिव्याः, तन्मात्रपदप्रतिपाद्याः । कश्चिदर्थो विकृतिर्विकाररूपैव यथा पंचज्ञानेन्द्रियाणि चक्षुस्त्वक्रसनाश्रोत्रकर्णाख्यानि, पंचकर्मेन्द्रियाणि वाक्पाणिपादपायूपस्थाख्यानि । कश्चिदर्थः पुरुषो न प्रकृतिरूपो न वा विकृतिरूपः किन्तु अनुभयरूप एव । तत्र प्राथमिको विभागः प्रकृतिरेव सर्वस्य मूलभूता नत्वस्याः कारणान्तरमस्ति, तथात्वेऽनवस्था प्रसंगात् । द्वितीयो विवागः-प्रकृतिविकृत्यात्मको महत्तत्वं प्रकृत्योत्पद्यते इति विकृतिः कार्यरूपम्, तथा तन्महत्तत्वाहंकारादिकमुत्पादयतीति प्रकृतिरूपत्वम् अर्थात् प्रकृत्यपेक्षया विकृतित्वं तथाऽहङ्कारापेक्षया प्रकृतित्वमहङ्कारोत्पाद-कत्वात् एवमहंकारो महत् तत्वाज्जायमानो विकृतिः कार्यरूपस्तथा आकाशादि सूक्ष्मपञ्चभूतजनकत्वात् प्रकृतिराकाशाद्युत्पादकतयाकारणत्वादिति । एवमाकाशतन्मात्रमहंकारजन्यत्वाद्विकाररूपं कार्यम् तथा वायुतन्मात्राया उत्पादकत्वात् प्रकृतिः कारणम् । वायुतन्मात्रचाकाशतन्मात्रजन्यत्वाद्विकृतिः कार्यं तथा तेजोमात्राजनकत्वात्प्रकृतिः । तथा तेजस्तन्मात्रा वायुस्तन्मात्रा जन्यत्वात् विकृतिः कार्यं तथा जलतन्मात्रजनकत्वात् प्रकृतिः कारणम् तथा जलतन्मात्रं तेजस्तन्मात्राजन्यत्वाद्विकृतिः कार्यं पृथिवीतन्मात्राया जनकत्वात्प्रकृतिः कारणम् । एवं पृथिवीतन्मात्रा जलतन्मात्राजन्यत्वाद्विकृतिः कार्यं महाभूतपृथिवीजनकत्वात् प्रकृतिः कारणमिति । तथा कश्चिदर्थो विकृतिरेव यथा षोडशको विकारः कार्यमेव न कदाचिदपि कारमम् । यथा श्रोत्रत्वच्चक्षुरसानाघ्राणात्मकानि पञ्च

बाह्येन्द्रियाणि । तत्र शब्दग्रहणप्रवणं श्रोत्रंशब्दग्राहकम् । **स्पर्शग्रहणं त्वक्** स्पर्शग्राहके वायवीयं तदपि बाह्येन्द्रियमेव । रूपग्रहणप्रवणं रूपग्राहकं चक्षुस्तैजसम् । एतत् रूपं रूपत्वं रूपाभावं रूपाधिकरणमपिगृह्णाति । त्वक् तु स्पर्शत्वं स्पर्शस्पर्शवद् द्रव्यमपि गृह्णाति । श्रोत्रं शब्द-शब्दत्व-शब्दाभावञ्च गृह्णाति, न तस्याधिकरणं द्रव्यं गृह्णाति, द्रव्यग्रहणे श्रोत्रघ्राणरसनानामसा-मर्थ्यात् अर्थात् चक्षुरिन्द्रियेण त्वगिन्द्रियेण च गुणं गुणाधिकरणं द्रव्यमपि गृह्यते तदन्यैस्तुगुणगुणाभावादिकमेव न तु द्रव्यम् । रसनेन्द्रियं रसं रसत्वं तदभावञ्च गृह्णाति । घ्राणेन्द्रियं गन्धं गन्धत्वं तदभावञ्च गृह्णाति । एवं वाक् पाणिपादपायूपस्थाख्यानि पञ्चकर्मेन्द्रियाणि । तत्र वाचा वदति पाणिभ्यां गृह्णाति पद्भ्यां चलति पायुनामलादिकं विसर्जयति, उपस्येनानन्दयति एतानि बाह्येन्द्रियाणि । आभ्यन्तरं करणं मनः उभयोरधिष्ठापक आन्तरसुखादिकं गृह्णाति । बाह्येन्द्रियसहकाराद्बाह्यमपि गृह्णाति । तदुक्तम्-'**उभयात्मकमत्र मनः** प्रवर्तकमिन्द्रियं च साधर्म्यात्' अन्यत्रापि कथितम्-' **मनोदशेन्द्रियाध्यक्षं** हृत्पद्मगोलके स्थितम् । तच्चान्तः कारणं वाह्ये ह्यस्वतंत्रं विनेन्द्रियैः' इति । एकमपि मनोवृत्तिभेदात्, बुद्धिमनोऽहंकारचित्तमित्याख्यायते । तदुक्तम्-'मनोबुद्धिरहंकारश्चितं करणमन्तरम् । संशयो निश्चयो गर्वः स्मरणाविषया इमे' तत्र संययवृत्तिकं मनो निश्चयवृत्तिका बुद्धिरभिमानवृत्तिकोऽहंकारः स्मणरवृत्तिकं चित्तम् । तदुक्तम् 'अध्यवसायो बुद्धिर्धर्मो ज्ञानं विराग ऐश्वर्यम् । सात्विकमेतद्रूपं तामसमस्माद्विपर्यस्तम्' धर्मो धर्मविरागाविरागज्ञानाज्ञानैश्वर्यानैश्वर्याख्या अष्टौ धर्मा बुद्धितत्वस्य । अत्र वृत्तिवृत्तिमतोरभेदमाश्रित्य, अध्यवसायो बुद्धिरिति कथितम् ।'अभिमानोऽहंकारस्तस्माद्गणश्च षोडशकः । तस्मादपि षोडशकात्पञ्चभ्यः पञ्चभूतानि । एतावत्प्रकरणेन प्रकृतिप्रकृतिविकृतिविकाराणां संग्रहः कृतः । शास्त्रप्रतिपाद्यश्चतुर्थोर्थः पुरुषः स न प्रकृति रूपोऽर्थात् कस्यापि कारणं न भवति । कूटस्थनित्यत्वात् नापि विकृतिरूपो नित्यतयाऽजायमानत्वात्, किन्त्वनुभयरूपः कार्यत्वकारणत्वधर्मरहितः **कूटस्थः सर्वस्यसा**क्षीद्रष्ठा च, केवलं प्रकृतिसंपर्कात् तद्गतं सुखदुःखादिकमनुभवति ! तदुक्तम्-'तस्मात्तत्संयोगादचेतनं चेतनावदिवलिंगम् । गुणकर्तृत्वेऽपि तथा **कर्तेव** भवत्यु



**दासीनः' तस्मिंश्चिद्दर्पणेस्फारे समस्ता वस्तुदृष्टयः, इमास्ताः प्रतिविम्बन्ति सरसीवतटद्रुमा'** इति, **प्रकृतिपुरुषयोः परस्परप्रतिबिम्बमूलकः संसार इति साङ्ख्यानुयायिनः, परञ्चात्र श्रौतविशिष्टाद्वैतवादवेदान्तिनः** 'सिद्धान्ते कापिलानां च कार्याभिव्यक्तिवादिनाम् । मृत्तिकाघटयोर्नस्यादन्वयस्तिलतैलवत् । रचनानुपपत्तेश्च मायाराममधिष्ठिता । जडा हि जगतो हेतुर्मन्यते न मनीषिभिः । प्रधानस्य प्रवृत्तिर्हि स्वभावान्नु सम्मता । चित्रसृष्टिस्ततो जाता नारिकेलादिनीरवत् । मैवं यतः प्रवर्त्तेत स्वभावात्प्रकृतिर्यदि । प्रलयोनोयपद्येत सृष्टिरेव भवेत्सदा' **इत्यादिरूपेण जगद्गुरुश्रीश्रियानन्दाचार्येण श्रौतप्रमेयचन्द्रिकायां प्रतिपादितदिशा कार्याभि**व्यक्तिवादमनादृत्यकार्योत्पत्तिवादं स्वीकुर्वन्तीति संक्षेपः । **प्रकृतवि-**षयेऽन्यत्रविचारयिष्यामः । **येयमनेकरूपेण** व्याखाता प्रकृतिः सा पुनर्नित्या उत्पादविनाशरहिता अन्यथा **विकारान्तर्भावेनानित्यत्वापातात्** । दर्शनादर्शनं तु तस्या आविर्भावतिहोवामाभ्यां भवति । यथा-तिले विद्यमानं तैलं निष्पीडनेनतेभ्य आविर्भवति । तथा सृष्ट्यादौ परमेश्वरादाविर्भूता प्रलयेतत्रैवतिरोभवति, **यथा हि** पतत्री सायं काले नीडेविशन् तिरोभूत इव भवति, सति सूर्योदये नीडेभ्यो निष्क्रामन् आविर्भूतो भवति, तथैवेयं प्रलये परमेश्वरे प्रलीयते सूक्ष्मरूपेण तद्विशेषणतयावतिष्ठते सर्गकाले च ततो निःसरति । तथेयं प्रकृतिः 'अज्ञाज्ञानरहिता जडेत्यर्थः । 'अचेतना' **चेतनाज्जीवाद्विभिद्यते** इत्थं भूताऽपि प्रकृतिः 'विश्वयोनिः' **विश्वस्य सर्वस्य कार्यजातस्य योनिरुपादानकारणम्** घटादेर्मृत्तिकावदिति । अतः शुभा-शोभमाना **कारणरूपतया** एकरूपापि शोभते कार्यरूपतयाऽनेकापि शोभते । तथा 'नानावर्णात्मिका' लोहितशुक्लकृष्णरूपादिभेदेनानेकरूपा प्रकृतेः सत्वादिगुणसमन्विताया अनेकरूपत्वात् । अर्थात् रूपभेदेनानेकवर्णवतीति, तदुक्तम्-'अजामेकां लोहितशुक्लकृष्णां वह्वीः प्रजाःसृजमानां सरूपाः । अजोह्येकोजुषमाणोऽनुशेते जहात्येनां भूक्तभोगामजोऽन्यः' इति । अजाम् न जायते नोत्पद्यते या सा अजा नित्येत्यर्थः ताम्, 'एकामिति' तत्रैकां सजातीयसहायकरहितां सजातीयद्वितीयरहितां वा, 'लोहितशुक्लकृष्णामिति' सत्वरजस्तमोगुणात्मिकामनेकवर्णामित्यर्थः । सरूपाः समानरूपवत्यः सदृशीर्वह्वीप्रजाः सृजमानां जनयन्तीम् समुत्पादयन्तीम् । 'अजोह्येकः' इत्यादि । एको बद्धो

जीवः संसारासक्तोऽजः उत्पादविनाशरहितः । यद्यपि सिद्धान्ते चेतनाचेतनयोरीश्वरजन्यत्वेन स्वभावतोऽजन्यत्वरूपाजत्वं जीवस्य न घटते तथापि प्रकृतिसंबद्धस्य जायमानतया विशेषणांशे एव जीवस्य जन्यत्वं न तु स्वरूपेण जन्यता, 'आत्माज्ञानमयोऽमलः, न जायते म्रियते वा विपश्चित्' इत्यादिना जीवस्य नित्यत्वस्वीकारात् । तदत्र जगद्गुरु श्रीपूर्णानन्दाचार्याः श्रीबोधायनमतादर्शे 'स्वरूपे च स्वभावे च विकारः प्रकृतेः खलु । स्वभाव एव जीवस्य विकारः स्वीकृतो बुधैः ॥ ब्रह्मणस्तुविकारोयत्र स्वरूपस्वभावयोः । तथा-त्रिधाऽपि श्रुतौ सर्ववित्सर्वशक्तिर्जगत्कारणं जानकीनाथ एव । ततः कापिलं गौतमीयञ्च शैवं च शाक्तंतथाऽन्यन्मतं नानवद्यम् ॥' (श्रौतसिद्धान्तविन्दुः) इत्याद्याचार्यदिव्यप्रबन्धाऽनुसन्धेयाः । यथा खलु स्वभावतो निर्मलोपि स्फटिकमणिः जपाकुसुमाद्युपाधिसंपर्केण रक्तो वा नीलो वानुभूयते स्वभावतस्तु सर्वथा स्वच्छतैव । तथा प्रकृते प्रकृतिप्राकृतिककर्मयोगो यावद् भवति तावदेव नाना योनिषु जायते मृयते वा भगवच्छ्रीराम प्रपत्या कर्मादिनिखिलोपाधिसम्पर्करहितः सनापाततः कृतकृत्योभवन् जन्ममरणादिषड्विधाभावविकारपरित्यक्तः परमपदमवाप्य परमेश्वरस्य कैङ्कर्यं कर्तव्यबुद्ध्या कुर्वन् (न तु स्वार्थप्रेरितः सन्) भगवद्दास्यतामनुभवन् कृतार्थो भवति । तस्मात् स्वरूपतो जीवोऽज एव । परन्तु कर्मवशात् प्रकृतिमासेवमानः संसारभाग् भवति । अर्थात् प्रकृत्यधीनो जीवः संसारसुखमेव बहुयन्यमानसंसारे परिभ्रमतीव । तथा एतदतिरिक्तोऽर्थात् विषयेभ्यो विरक्तो भगवत्प्रपत्तौ कृतमनाः भुक्तभोगां तां प्रकृतिं जहाति अर्थात् तत्रासक्तिं त्यजति । तदुक्तम्-'दृष्टामयेत्युपेक्षक एको दृष्टाहमुपरमत्यन्या । सति संयोगेऽपि तयोः प्रयोजनं नास्ति सर्गस्य' इति । त इमे चत्वारोप्यर्थाः प्रत्यक्षानुमानाप्तबचनरूपप्रमाणेन सिद्ध्यन्ति । यद्यपि वादिन उपमानादिन्यपि प्रमाणान्तराणि कथयन्ति तथापि तेषां प्रमाणान्तरेषु त्रिषु यथायथमन्तर्भावो भवति । एतत्स्पष्टीकरणमुपरिष्टात्करिष्ये । त्रिगुणसुनिलयेति तत्र त्रयो गुणाः सत्वरजस्तमांसि समीचीनरूपेण निलीयन्ते प्रविशंत्यस्यामिति त्रिगुणसुनिनिलया प्रकृतिः । 'सत्वरजस्तमः शालि द्रव्यं प्रकृतिसंज्ञकम्' इति श्रौतप्रमेयचन्द्रिकायामाचार्योक्तेः । तत्र गुणास्त्रयः सत्वरजस्तमोगुणरूपाः । तत्र सत्वादीनां स्वरूपं



सत्वं लघुप्रकाशकमिष्टमुपष्टंभकं चलञ्च रजः । गुरुवरणसमेवतमः प्रदीपवच्चार्थतोवृत्तिरिति । यदिदं सत्वं तल्लघु अतिशयेनलघुत्वयुक्तं भवति । इदमेव लाघवं वह्न्यादेरूर्ध्वज्वलने कारणम्, तथा प्रकाशकं च सत्वम्, तथा रज उपष्टंभकं चलं च, रजसः प्रभावादेव सत्वमितस्ततः प्रसरणशीलं भवति, तथा तमः गुरुत्ववत् वरणकमाच्छादकञ्च । यहि तमो न भवेत्तदारजसानीयमानं तमः क्वचिदपि व्यवस्थितं न स्यात् तमसानीयमितं तु क्वचिदेव प्रवर्तते सर्वत्र न इति, अथैवमिमे परस्परविरोधशीला गुणादयः परस्परं वाधिता एव भवेयुः शुंभोपशुंभवत् । ततश्च भोगापवर्गरूपः पुरुषः कथं साधितः स्यात् तत्राह-'प्रदीपवच्चार्थतो वृत्तिः' परस्परविरुद्धानामपि गुणानां वृत्तिः कार्योन्मुखता व्यापारः अर्थतः पुरुषार्थमपेक्ष्य प्रदीपवद् भवति । अर्थात् वर्तितैलानलसमुदायरूप एव प्रदीपः, तत्र सर्वे परस्परं विरुद्धा एव वर्तितैलयोर्विरुद्धोऽनलः परन्तु मिलिताः सन्तः प्रदीपसंज्ञामाशाद्य प्रकाशलक्षणमेकं कार्यं कुर्वन्ति न तु परस्परं विनष्टा भवन्ति । अयमाशयः-विरुद्धोप्यनलादिः प्रकाशात्मकमेकं कार्यमुद्दिश्यमिलिता सन्तः प्रकाशात्मकं कार्यं सम्पादयन्ति, तथैव सत्वादयोगुणाः स्वरूपतः विरुद्धाः सन्तोऽपि भोगापवर्गलक्षणपुरुषस्यैकं कार्यमुद्दीश्य स्वस्वकार्यं कुर्वन्तीति । पुनः सा प्रकृतिः कीदृशी तत्राह-'अव्यक्तशब्दाभिधेया' अव्यक्तशब्दवाच्या भवति यथा कम्बुग्रीवादिमान् पदार्थो घटपदवाच्यो भवति, तथाऽव्यक्तशब्दवाच्या प्रधानादिशब्दवाच्या च प्रकृतिरिति कथ्यते । तदुक्तम्-'हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिंगम्, सावयवं परतत्रं व्यक्तं विपरीतमव्यक्तम्' व्यक्तं पृथिव्यादिमहत्तत्वान्तं वस्तुहेतुमत् कारणवत् अर्थात् कारणजन्यम् । तत्र महत्तत्वं प्रति प्रकृतिः कारणम्, अहंकारं प्रति महतत्त्वं कारणम् । पंचतन्मात्रं प्रति तथेन्द्रियं प्रत्यहंकारः कारणम् । पंपमहाभूतं प्रति पञ्चतन्मात्राणि । तदिदं यत् महाभूतादारभ्य महत्तत्वान्तं व्यक्तं तत् हेतुमद्भवतीतिभावः । तथा यदिदं व्यक्तं तदनित्यं तिरोभावि, न तु विनाशप्रतियोगि । व्यक्तमव्यापि न सर्वं व्याप्नोति । व्यक्तं सक्रियं परिस्पन्दादिलक्षणक्रिययायुक्तम् । यद्व्यक्तं तत्सर्वमनेकं नत्वेकम् । व्यक्तं यत्तदाश्रितं स्वकारणमाश्रित्यतिष्ठतीति । व्यक्तं लिङ्गं लयं गच्छति प्रलयकाले, अर्थात्कारणे लीनं भवति । व्यक्तं सावयम् अवयवेन युक्तं तथा

व्यक्तं परतन्त्रं पराधीनं स्वकारणाधीनमिति । एतत्सर्वं व्यक्तसाधर्म्यम् । एतद्विपरीतमव्यक्तम् । तथेयं प्रकृतिर्निर्व्यापारा जडत्वात् स्वातन्त्र्येण व्यापाररहिता रथादिवत् । यथा रथवाहचालिताश्वक्रियया रथादयो व्यापारवानिति व्यवहारो नतु रथादेर्व्यापारः स्वातन्त्र्येण, तथैवपुरुषप्रेरितप्रकृतेः क्रिया जायते नतु स्वातन्त्र्येण तस्य व्यापारः, तथेयं प्रकृतिः 'परार्था' पराधीना परमेश्वराधीना । अथवा परस्य स्वव्यतिरिक्तपुरुषस्य प्रयोजनाय प्रवर्तमाना भवति, प्रकृतेः प्रवृत्त्या पुरुषस्य भोगापवर्गौ भवतो नान्यथा निष्क्रियत्वात् । 'महदहमितिसूः' तत्र महत् महत्तत्वम्, अहम् अहं कारः, अथ इति शब्द आद्यर्थकः तथा महत्तत्वाहङ्कारादितत्वं सूते समुत्पादयतीति महदहमितिसूः । यदा खलु गुणत्रयस्य साम्यावस्थायां भवति प्रकृतिस्तस्मिन् समये सजातीनेव गुणप्रवाहान् सूते । यदा तु विषमावस्थामापद्यते तदा विजातीयान् महदहङ्कारादिकान् महाभूतान्तां सृष्टिं करोति प्रतिक्षणपरिणामिनो हि भावा ऋते चितिशक्तेः इति नियमेन प्रलयावस्थायां सत्वगुणः सजातीयमेव सत्वगुणधारां जनयन्ती भवति, रजसा रजोगुणधारां जनयन्ती भवति तथैव तमसोपि भवति । तदेवं प्रकृतिरुभयरूपेण परिणमन्ती सर्वदाऽवतिष्ठते । यद्यपि 'विश्वयोनिः' इतिविशेषणेनैव सर्वोपादानत्वस्य प्रकृतौ सिद्धिर्जायते एव तदा 'महदहमितिसूः' इतिविशेषणमनर्थकमिवाभाति, तथापि विश्वयोनिरिति विशेषणेन सामान्यत उभयप्रकारकपरिणाममादाय सर्वजगत्कारणत्वं कथितम् महदहमिति विशेषणेन तु विषयपरिणाममाश्रित्याभिव्यक्तस्थूलजगत्कारणत्वं दर्शितम् । एकेन विशेषणेन योऽर्थः प्रतिपादितः स एवार्थो यदि विशेषणान्तरेण प्रतिपादितो भवेत् तदा पौनरुक्त्यमाशंक्येतापि, परन्तु प्रकृते तु नैवमत्रतु प्रथमविशेषणेन गुणानां सजातीयसृष्टिर्दर्शिता । द्वितीयविशेषणेन तु विषमस्थूलसर्गं प्रति तस्याः महदादिकसर्वपदार्थकारणत्वं प्रदर्शितमिति नात्र कोपि शंकावसरः समुन्मीषतीतिदिक् । एतदेव स्पष्टीकृतं भागवते 'यत्तत् त्रिगुणमव्यक्तं नित्यं सदसदात्मकम् । प्रधानं प्रकृतिं प्राहुरविशेषं विशेषवत्' इति । अर्थात्-यदेतत्प्रधानं त्रिगुणमव्यक्तं तदेव प्रकृतिः सर्वजगत् उपादान कारणम् । तत्र प्रधानमेव किमित्याशङ्कायामाह-अविशेषं विशेषवदिति । स्वरूपेण न विशेषवत् प्रधानम्, अपित्वपेक्षया विशेषवत्, विशेषा महदादिका विद्यन्ते



यस्मिन्निति विशेषवत् । अर्थात् सर्वविशेषाणामाश्रयभूतम् । नचैतादृशलक्षण लक्षितस्तु परमात्मा ? नैवं वक्तव्यम् इदं तु त्रिगुणम् तत्किं प्रधानपदेनमहत्तत्वं गृह्यते तस्यापि त्रिगुणत्वात्, नैवं वक्तव्यं किन्तु अव्यक्तम् । अर्थादकार्यम्, महत्तत्वं तु प्रधानस्य कार्यमेव न तत् प्रधानपदेन महत्तत्वस्य संग्रहः । न च तर्हि अव्यक्तं तु कालोऽपि तस्यापि प्रधानपदवाच्यता स्यात्तत्राह-सदसदात्मकमर्थात् कार्यकारणरूपमिति । तदत्र सांख्यादिदर्शने चतुर्विंशति तत्त्वं पातञ्जले पञ्चविंशति कणादे सप्त, न्याये षोडश इति कथं तत्वानां त्रिकमेवेतिचेदत्रोच्यते पृथिव्यादिभूतानामिन्द्रियादीनां च साक्षात्परम्परया वा प्रकृतावेवान्तर्भावान्न कोऽपि विरोधः । तथाहि-

'स्वरूपे च स्वभावे च विकारः प्रकृते खलु' ॥४॥

(श्रीबोधायनमतादर्शे श्रीपूर्णानन्दाचार्याः)

'अव्यक्तत्वदशातो या दशाऽव्यवहितोत्तरा ।
तदाश्रयो महत्तत्त्वं मन्यते वेदवेदिभिः ॥९६॥
सात्विकं राजसं चाथ तामसं चेतिभेदतः ।
प्रकृतेश्च विकारो हि महत्तत्त्वं त्रिधामतम् ॥९७॥
महतश्च समुद्भूतोऽहङ्कारस्त्रिविधोमतः ।
सात्विको राजसश्चाथ तामसश्चेति भेदतः ॥९८॥

इत्यादिरूपेण श्रौतप्रमेयचन्द्रिकायां षण्णवतिसंख्यातः सार्द्धशतसंख्याक श्लोकं यावत्प्रतिपादितदिशा सर्गादिकाले प्रकृतौ गुणसाम्यावस्थायाम् एकैकस्याधिक्यात् तदन्यस्य च तिरोभावे सति गुणवैषम्यमूलको महत्तत्वस्य प्रकृतेः प्राथमिककार्यस्योत्पत्तिर्भवति । तन्महत्तत्वमध्यवसायलक्षणकम्-अध्यवसायो बुद्धिरिति वचनात् । तस्य ज्ञानाज्ञानवैराग्यावैराग्यैश्वर्यानैश्वर्यधर्माधर्मप्रमुखा धर्मा अष्टौ सात्विकास्तामसाश्च जायन्ते । ततः महत्तत्वादहङ्कारस्योत्पत्तिर्भवति । स च 'अभिमानलक्षणकः' अभिमानोऽहङ्कारस्तस्माद् गणश्च षोडशकः' इति वचनात् । अहङ्कारात् पञ्चसूक्ष्मतन्मात्रपदवाच्यानि जायन्ते । तथा सात्विकाहङ्कारादेव श्रोत्रत्वक् रूपग्राहकचक्षुरसनाघ्राणेन्द्रियाणि पञ्चज्ञानजनकानीन्द्रियाणि जायन्ते । तथा तादृशाहङ्कारादेव वाक्पाणिपादपायूपस्थाख्यानि पञ्चकर्मेन्द्रियाणि

जायन्ते, तथोभयात्मकं मनो जायते । तथा सूक्ष्माकाशादिपञ्चतन्मात्रेभ्यः क्रमशः शब्दगुणक आकाशो जायते । तथा शब्दतन्मात्रा सहकृतस्पर्शतन्मात्रेण स्पर्शगुणको वायुर्भवति, वायुसहकृततेजस्तन्मात्रेण बह्नीरूपादिगुणको जायते तत्सहकृतरसतन्मात्रेण गन्धादिगुणा पृथिवी जायते । पृथिवीतस्तदितरसर्वपदार्थानामुत्पत्तिर्भवति । तदित्थं ये केचनपदार्थास्तेऽचित्प्रकृत्यैव साक्षात्परम्परया वा जायन्ते । अतश्चैकेनैवाचित्प्रकृत्या सर्वस्य संग्रहो भवतीति न तत्त्वान्तरशङ्का कर्तव्येति संक्षेपः ।

तदत्र 'प्रधानक्षेत्रज्ञपतिर्गुणेशः' इतिश्रुत्या 'प्रधानजीवब्रह्मेति तत्त्वत्रयं समीरितम्' इतिचाचार्यश्रीपूर्णानन्दाचार्यसिद्धान्तसार्वभौमवर्णितक्रमेण अचिच्चिदीश्वररूपतत्वत्रयमुद्देशक्रममितिस्थितम् । तत्र तत्त्वत्रयान्तर्गतमचिद्वस्तूद्देशक्रमेण प्रथमं निरूपयितुमचिद्वस्तुनः स्वरूपस्वभावादिविशेषानित्थं वर्णयति । तथाहि-तत्राचिज्ज्ञानरहितं विकारि च । तदाहुर्जगद्गुरवः श्रीश्रुतानन्दाचार्याः-अचिन्नाम तत्त्वं द्विधा ज्ञानशून्यं, जडञ्चाजडं नैवमिथ्या कदाचित् । जडं मिश्रसत्त्वं तथा कालतत्त्वं, मनीषाऽजडं शुद्धरूपं च सत्त्वम्' इति । तथैव जगद्गुरुश्रीअनुभवानन्दाचार्या अपि श्रौतार्थसंग्रहे-'अचिन्नाम ज्ञानवीरहितं तत्त्वम्' इति । अचिदित्यस्य चेतनाया अनाश्रयीभूतं वस्तु । चैतन्यानाधारत्वमेव तस्यज्ञानरहितेति विशेषणेन स्पष्टीकृतम् । इदमचित् शुद्धसत्वमिश्रसत्वसत्वशून्यत्वभेदेन त्रिप्रकारत्वं जायते । तत्र प्रथमं शुद्धसत्वं रजस्तमोभ्यामस्पृष्टमनादिनिधनात्मकं नित्यं ज्ञानानन्दयोरुत्पादकं कर्मणः सहकारमन्तरेणैव केवलमीश्वरेच्छयैवातिविलक्षण लोकोत्तरविमानादिरूपेणपरिणामिनमतिशयितप्रकाशात्मकं नित्यसूरिणा परमेश्वरेणापि ज्ञातुमशक्यमिव प्रतिभासमानमत्याश्चर्यजनकं तत् । एँतादृशाति शुद्धसत्वे 'क्षयन्तमस्यरजसः पराके' तमसस्तुपारे 'आदित्यवर्णं तमसः परस्तात्' पञ्चशक्तिमये दिव्ये शुद्धसत्वे सुखाकरे' तद्विष्णोः परमंपदं सदापश्यन्ति सूरय' इत्यादिश्रुतिस्मृत्यादय एव प्रमाणम् । तदत्र वचनान्तरमपि प्रमाणं भवति, तथाहि-'कालातीतमनाद्यन्तमप्राकृतमचञ्चलम् । प्राप्य अर्चिमयात्सद्भिर्मयि संन्यस्त मानसैः ॥' 'यत्तत्पुराणमाकाशं सर्वस्मात् परमं ध्रुवम् । यत्पदं प्राप्यतत्त्वज्ञा मुच्यन्तेसर्वकिल्विषैः ॥' तथा 'न तत्र सूर्यो भाति न चन्द्रतारकं नेमाविद्युतो



भान्ति कुतोयमग्निः । तमेवभान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' अतर्क्यानलदीप्तं तत्स्थानं विष्णोर्महात्मनः । स्वयैव प्रभया राजन् दुष्प्रेक्ष्यं देव दानवैः ।' इत्यादिश्रुतिभिर्लोकोत्तरमतिविलक्षणमकृतात्मभिर्द्रष्टुमयोग्यमपीति सूचितं भवति ।

नित्यसूरिपरमेश्वरेणापि चास्याः शुद्धसत्वरूपायाः स्वरूपेयत्तापरिमाणादयोऽशक्यप्राया एव ज्ञातुम्, तस्य परिमाणादीनामनन्तत्वेन ज्ञातुं निर्वचितुं चाशक्यत्वात् । ननु यदि मुक्तादयः शुद्धसत्वरूपप्रकृतेः स्वरूपादिकं न जानन्ति तदा तेषां सर्वविषयकज्ञानवत्वरूपसर्वज्ञत्वं न स्यात्, यतः सर्वान्तर्गतशुद्धसत्वात्मकं प्रकृतेः स्वरूपस्य मुक्तपरमेश्वरादिनापि न ज्ञायते इति स्वयमेव प्रतिपादनात् । न चेश्वरस्यासार्वज्ञमिष्टम्-'यः सर्वज्ञः स सर्ववित्' इत्यादिश्रुतिव्याकोप प्रसङ्गात् । किञ्च परमेश्वरोऽपि यदि तां न जानीयात्तदा सर्वान्तर्यामितया सर्वस्य नियामकत्वमन्तर्यामिब्राह्मणादौ प्रतिपादितं तदप्युन्मत्तप्रलपनमेव स्यादितिचेत् उच्यते, यद्वस्तु यादृशं यथास्वभावपरिमाणसंख्यादिविशिष्टं तस्य तथाभूतस्य ज्ञानं यत् तादृशज्ञानवत्वमेव सर्वज्ञत्वं परमेश्वरस्य । यत् प्रकृत्यादिकं यादृशं तस्य तथाभूतं ज्ञानमेव परमेश्वरस्य भवति । यथा प्रकृतेरनन्तस्वभावाकारादिमत्वं तादृशीं प्रकृतिं तेन रूपेण यदि परमेश्वरो जानाति तदा तस्य सार्वज्ञत्वं नापयाति, अपि तु तादृशरूपेण तज्ज्ञानं सर्वज्ञताया अनुकूलमेव । अर्थात् परिच्छेद्यत्वेन परिच्छेद्यस्य ज्ञानं तथाऽपरिच्छेद्यस्य वस्तुनोऽपरिच्छेद्यतयाज्ञानमीश्वरस्य सार्वज्ञम् । परमेश्वरस्य तादृशं सार्वज्ञं प्रकृतेरपरिच्छेद्यत्वरूपेणाज्ञाने जाते न किञ्चित्क्षतिकरं भवति । नहि घटं घटत्वेन जानन् भ्रान्तो भवति, अपि तु यथावज्ज्ञाता भवति । प्रत्युत घटपटत्वेन जानन्नेवभ्रान्तो भवति । तथैव प्रकृते परमेश्वरः शुद्धसत्वरूपां प्रकृतिमनन्ताकारतयाऽपरिच्छेद्यां जानन् न भ्रान्तोनाप्यसर्वज्ञो भवति । तदुक्तं केनापि भक्तेन-'देवि त्वन्महिमावधिर्नहरिणा नापि त्वया ज्ञायते-यद्यप्येवं तथापि नैव युवयोः सर्वज्ञता हीयते । यन्नास्त्येवतदज्ञतामनुगुणां सर्वज्ञतायाविदु व्योमांभोजमिदंतयाकिलविदन् भ्रान्तोऽयमित्युच्यते' ।

अर्थात्-यथा गगनकुसुमकूर्मरोमादिकं प्रत्यक्षतयाऽजानन् पुरुष ईश्वरो वा भ्रान्तोऽसर्वज्ञो वेति कथ्यते । कुतः ! तस्य प्रत्यक्षाऽयोग्यत्वात् 'संवद्धं वर्त

मानं च गृह्यते चक्षुरादिनेति' नियमात् । गगनकुसुमादिकमहं प्रत्यक्षयामीति मन्वानोवितथवचनो भवति । एवं प्रकृतेऽनियतानेकाकारतया प्रकृत्यादिकंजानन्नपि नित्यमुक्तपरमेश्वरादिको नासर्वज्ञोभ्रान्तो वा भवति । प्रत्युतैतत्कथनेन परमेश्वरवैभव एव प्रतिपादितो भवतीत्येतत् ।

एनां शुद्धसत्वरूपां प्रकृतिं केचन जडां स्वयं प्रकाशरहितां ज्ञानभिन्नामिति प्रतिपादयन्ति । अन्ये केचन शुद्धसत्वलक्षणामजडां स्वयं प्रकाशरूपां कथयन्ति । तदाहुराचार्याः-'तन्नित्यमजडमधः प्रदेशे परिच्छिन्नमूर्ध्वप्रदेशे चान्तरहितम्, (श्रौतार्थसंग्रहः) द्वितीयपक्षे नित्यमुक्तजीवानामीश्वरस्य च ज्ञानं विनापि स्वयमेव प्रकाशते, न च यदि शुद्धं ज्ञानरूपं सत् स्वयं प्रकाशत इतीश्वरस्य ज्ञानमन्तरेणापि प्रकाशमाना भवति तदा जीवोऽपि ज्ञानमन्तरेणैव प्रकाशितो भवतु ततश्च संसारिजीवपरमेश्वरयोर्न कोऽपि भेद इति वाच्यम्, 'एष द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोध्दा कर्त्ता विज्ञानात्मा पुरुषः' इतिश्रुतिप्रामाण्या ज्ज्ञानाश्रयोऽपिजीवः सिद्धान्ते ज्ञानरूपतयाऽङ्गीकृतोऽत एव स ईश्वरवत्प्रत्यक् पदवाच्यः । यः स्वस्मै स्वयमेवप्रकाशते स प्रत्यक्' इतिश्रौतार्थसङ्ग्रहोक्तदिशा यद्यपि प्रकाशरूपं तथापि ईश्वरस्यैव सा भासते न तु जीवस्य संसारिणः कर्म प्रतिरुद्धतया तस्य तादृशसामर्थ्याभावात् ।

ननु शुद्धसत्वमजडमात्माप्यजडस्ततश्चैतयोर्द्वयोर्लक्षणभेदाभावादुभयोरेकत्वमापद्यते इति चेन्न विषयव्यवस्थानादुभयोर्भेदात् । तथाहि-अहमित्याकारकज्ञाने कर्तृत्वेनात्मन एव भानं नतु शुद्धसत्वभानमिति द्वयोर्भेदः । तथा 'स्वरूपे च स्वभावे च विकारः प्रकृतेः खलु । स्वभाव एव जीवस्य विकारः स्वीकृतोबुधैः, इत्यादिरूपेण जगद्गुरुश्रीद्वारानन्दाचार्येण परिणामविमर्शे प्रदर्शित दिशा प्रकृतेः शरीररूपेण परिणामो भवति जीवात्मनस्तु परिणामो नतद्रूपेण । आत्मनः कूटस्थनित्यतया सर्वथा तद्रूपपरिणामाभावात् । अर्थादेकरूपत्वादात्मनो न परिणामः । स्वभावस्यपरिणामित्वेऽपि शरीरादिरूपेण परिणामो न, विषयनिरपेक्षप्रकाशमानत्वात् । शब्दार्थादीनामनाश्रयत्वात् शब्दादिग्राहकाज्ज्ञानाद्भेदः सिद्ध्यतीति तद्वदेव शुद्धसत्वेऽपीतिदिक् ।

शुद्धसत्वस्य निर्वचनं कृत्वाऽवसरप्राप्तं मिश्रसत्वं दिङ्मात्रतो निरूपया



मि-तत्र सत्वरजस्तमोगुणत्रयैः परिवृतास्तथा ये बद्धजीवाः सन्ति तेषां सम्बन्धि ज्ञानानन्दयोराच्छदको मृसाज्ञानस्योत्पादकनित्यपरमेश्वरस्य क्रीडोपकरणरूपस्तथा देशकालभेदेनसमविषमविकारिकार्यजनकः प्रकृतिप्रधानाविद्यामायाद्यपरनामकोऽचिद्विशेषलक्षण एव । अर्थात्-इदं सत्वं जीवस्य संसारबद्धस्यैव ज्ञानानन्दयोस्तिरोधानं करोति न तु स्वेच्छया प्राकृतशरीरग्रहणं कुर्वतो नित्यमुक्तस्य ज्ञानानन्दयोः । न केवलं बद्धजीवज्ञानादीनां तिरोधानं करोति किन्तु 'अतस्तिस्तद्बुद्धिरितिमिथ्याप्रत्ययमपि तेषां जनयति । यथाऽनात्मन्यात्मबुद्धिम स्वतंत्रे जीवे स्वातन्त्र्यबुद्ध्यादिकञ्चेति । अर्थात् 'अनीशयाषोचतिमुख्यमानः' अनादिमाययासुप्तः 'भगवन्माययातिरोहितस्वभावः' इत्यादिविलक्षणं विपरीत प्रत्ययं जनयतीत्यर्थः । सोयमचिद्विशेषो नित्य उत्पादविनाशरहितः । तदुक्तम्-'अजामेकां लोहितशुक्लकृष्णां वह्वीः प्रजाः सृजमानां सरूपाः । अजोह्येको जुषमाणोनुशेते जहात्येनां भुक्तभोगामजोऽन्यः' 'गौरनाद्यन्तवती सा जनित्रीभूतभाविनी' 'अचेतना परार्था च नित्या सततविक्रिया । विकारजननीमज्ञामष्टरूपामजां ध्रुवाम्, तदयमचिद्विशेषः सर्वेश्वरस्य प्राकृतिकजगत्सर्गादिलीलायाः परिकर उपकरणभूतः । तदुक्तम्-

'क्रीडतो बालकस्येव चेष्टां तस्य निशामय ।
अप्रमेयोऽनियोज्यश्चयत्रकामगभोगमी ॥
'मोदते भगवान्भूतैर्बालः क्रीडनकैरिव ।'
त्वन्यञ्चद्भिरुदञ्चद्भिः कर्मसूत्रोपपादितैः,
हरेविहरसि क्रीडां कन्दुकैरिवजन्तुभिः ।'

इत्यादिना सर्वनियामकस्य या क्रीडा कथिता, तादृशक्रीडायां प्रकृतिः प्रधानमुपकरणम् तद् 'सितासिताच रक्ता च सर्वकामदुघाविभोः' 'दैवीह्येषा गुणमयी मम मायादुरत्यया' इत्यादिस्वयमेवावोचत् । तथा देशकालभेदेन समविषम' इत्यादि । अयमाशयः-सोयमचिद्विशेषः प्रदेशभेदेन कालविशेषभेदात् समानसमानविकारजनकः । तत्र प्रदेशभेद इत्यस्यगुणवैषम्यशून्यप्रदेशः । सचैतस्य कार्योन्मुखे स्थूलगुणानां वैषम्यम्, तदन्यत्र सर्वस्थले समानगुणवदेव भवति । तत्र गुणविषमरहितो देशः सदृशविकारवान्नेव भवति । गुणवैशम्यवान्

प्रदेशस्तु विषदृशविकारवानेवनामरूपविभागकथनायोग्यः सूक्ष्मविकार एव सदृशविकारस्तथा नामरूपविभागनिर्देशयोग्यः स्थूलविकार एव विसदृशविकारो नामेति । एवं साम्यावस्थायां यो यो विकारः स सर्वोपि सदृशविकार एव, यथा सत्वस्य सत्वमेव विकारो रजसो रजस्तमसश्चतदेवेति । प्रतिक्षणपरिणामिनोभावादृते चितिशक्तेमहदहङ्कारादिविसदृशोविकारस्तत्र कस्यचिद्गुणस्याधिक्यं न्यूनता च कस्यचित्, अतएव महदादिविकारो विषम इति कथ्थते । तथा कालभेदः-तत्र कालभेदः कालविशेषोऽर्थात् सर्वसंहारकालप्रलय इत्यर्थः । तत्र सर्गकालश्च तत्र प्रलयकालेऽस्याचिद्विशेषस्याविभक्तरूपेणावस्थानेन न कुत्रापि गुणा वैषम्यानि सर्वत्र समानरूपेण सदृश एव विकारो जायते । यथा सत्वगुणस्य सत्वगुणरूपेण रजसो रजोरूपेण तमसस्तमोरूपेणेति । सर्गकाले परमेश्वराधिष्ठानविशेषेण परस्परं विभक्ततया कार्योन्मुखस्यार्थात्कार्योत्पादनाय प्रयतमानस्यावश्यकतयागुणवैषम्ये सति कारणापेक्षयाविसदृशविकाराः कार्याणि भवन्ति । गुणत्रयात्मकाचिद्विशेषस्य सर्वदा विकारूपतया सत्ता प्रयुक्त एव । विकारादर्थात् यावत्यसत्वं तावत्पर्यन्तं विकारः स्यादेव । 'प्रलयः प्रोच्यते प्राज्ञैरव्यक्तत्वेन संस्थितिः । विद्वद्भिरुच्यते व्यक्तंस्थूलभावेन तूद्गमः' ॥ इति प्रमिताक्षरावृत्तिसारोक्तेः सर्गप्रलयादिविभागनिर्देशस्तु-सूक्ष्मत्वस्थूलत्वप्रयुक्त एव, न तु स्वरूपप्रयुक्तो निर्विकाररूपेणप्रकृत्यवस्थाया एवाभावात् । सोयमचिद्विशेषः प्रकृतिप्रधानमविद्या माया मूलकारणमव्यक्तम् इत्यादिपर्यायवान् । सोऽस्य नामभेदः स्वभावबलादेवभवति तथाहि-यस्मिन्समये महदादिविकारानुत्पादयति तदा प्रकृतिरिति तस्य नाम भवति, प्रकरोति कार्यं करोति-इति प्रकृतिपदव्युत्पत्तेः । यदा सर्गकाले महदादिसर्वविकारानुत्पाद्यावतिष्ठते तदास्वविकारापेक्षया श्रेष्ठरूपेण जनकतया च प्रधानमिति गीयते । चक्षुरादीन्द्रियावेद्यत्वात् प्रलये भगवति लीनत्वादव्यक्तमिति कथ्यते । ज्ञानविरोधित्वादविद्येति । अत्र न विद्या अविद्येति समासे नञर्थोविरोधः न सुरोऽसुरः सुरविरोधीतिवत् ।

अर्थात् समासान्तर्गतस्य नञः षडर्था भवन्ति, तदुक्तम्-तत् सादृश्यमभावत्वं तदन्यत्वं तदल्पता । अप्राशस्त्यंविरोधश्चनञर्थाः षट्प्रकीर्तिताः' इति । सादृश्यमभावभेदाल्पत्वाप्राशस्त्यविरोधाः षडिमेऽर्थाः समासान्तर्गतनञो



भवन्तीति तत्र यथा न इक्षुरनिक्षुः सरः अत्र इक्षुवत् लम्बायमानत्वमिष्टत्वादिसादृश्यमादाय अनिक्षुः सरः इति प्रयोगो भवति, तत्र यथा इक्षौमिष्टाधिकं तथैव यस्य सरसो जलं मिष्टं तथेक्षुकाण्डवदेव लंभायमानं तादृशसरसि सादृश्यबोधको नञर्थः । न घटोऽघटस्तादृशं भूतलमित्यत्रात्यंताभावो नञर्थस्तेन घटात्यंताभाववद्भूतलमित्यर्थोभवति । अघटः पट इत्यत्र न घट इत्यघटोऽर्थात् घटभिन्नः पट इति बोधो जायते इति प्रकृते भेदार्थको नञः । अलवणकंशाकम्-न विद्यते लवणं यस्मिन् तदलवणकम् ईषत्लवणविशिष्टमिति, अल्पार्थकोत्रनञः । यथा वा-'अनुदराकन्या इत्यत्राल्पोदरवतीत्यर्थो भवति । 'अब्राह्मणो बार्धुषिकः' न ब्राह्मण इति अब्राह्मणोऽर्थादप्रशश्तो ब्राह्मणो बार्धुषिकोऽत्राप्राशस्त्यमर्थोनञः । एवम् न सुरोऽसुर इत्यत्र विरोध एवार्थो नञः । अर्थात् सुराणां विरोधी योऽसुरः । भेदार्थकत्वे सुरभिन्नत्वस्य मनुष्यादावपि सत्वान्मनुष्यादीनामप्यसुरत्वापत्तिरितिभावः । तदेवं प्रकृते अविद्येत्यत्र नञः विरोधार्थकतया विद्यायाः यथार्थज्ञानस्यविरोधित्वमेवार्थः । अत इयमविद्या 'तद्वति तत्प्रकारकज्ञानमर्थात्तद्वन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालिज्ञानं विद्या तथा तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशाली भ्रमोऽविद्या वा । इत्येवं विद्याविरोधाद् भवत्ययमचिद्विशेषो विद्याविरोधीत्यतोऽविद्यापदवाच्यत्वमिति । तथायमचिद्विशेषो विचित्रविलक्षणात्याश्चर्यजनकसृष्टिसम्पादकतया मायापदवाच्योपि भवति । तदुक्तम्-'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् । तस्यावयवभूतैस्तु व्याप्तं सर्वमिदंजगत्' 'माया चाविद्या च स्वयमेव भवति' मायाख्यायाः कामधेनोः' इत्यादौ विचित्राश्चर्यजनके मायापदप्रयोगात् । लोकेपि कश्चिन्मायावी (मदारी) विचित्रमाश्चर्यजनकं कार्यं दर्शयति, तत्र लौकिकोपि वदति यदयं मायया सर्वं दर्शितमिति । विशेषस्त्वन्यत्रावधातव्यमितिदिक् ।

यद्यपीदमचिद्रव्यं स्वरूपत एकविधं तथापि कार्यकारणरूपेणानेकविधतां भजते । इदमेव वर्द्धमानं शब्दस्पर्शरूपरसगन्धात्मकपञ्चविषयः श्रोत्रत्वक् चक्षुरसनघ्राणेन्द्रियात्मकपञ्चज्ञानेन्द्रियभाक् तथा वाक्पाणिपादपायूपस्थाख्यानिपञ्चकर्मेन्द्रियाणि आकाशादिपञ्चभूतप्राणगा प्रकृतिर्महत्तत्वाहङ्कारमनांसि चतुर्विंशति तत्त्वरूपं जायते । तत्र प्रथमं तत्त्वं प्रकृतिः । अस्य प्रकृतिः

प्रधानमव्यक्तमविभक्ततमो विभक्ततमोऽक्षरमित्यवस्थाविशेषा भवन्ति । 'अव्यक्तमक्षरेलीयते' 'अक्षरं तमसिलीयते' 'तमः परे देव एकीभवति' इति पूर्व कथितप्रकारेण सर्गकालेऽव्यक्तावस्थानिवृत्तिरवस्था, ततस्तन्निवृत्तिः । ततोऽतिसूक्ष्मतया तमः पदबोध्यता भवति, ततोपि नामरूपविभागानर्हतया परेण ब्रह्मणैकीभवतीत्यस्मादेवकारणात् विभक्ततम इति नामभागिति । 'सर्गकाले तु संप्राप्ते प्रादुरासीत्तमो नुद' इत्युक्तेः' ब्रह्मणा प्रेरितं सत् नामरूपविभागयोग्यं यथा भवति तथा तस्मात् विभक्तं कार्योन्मुखं भवतीति विभक्ततम इति नामभागिति च । तदनन्तरं भगवतःश्रीरामस्य संकल्पविशेषेणपुरुषसमष्टिगर्भत्वं यथा ज्ञायते तथाऽवस्थां प्राप्यावस्थिततत्वादक्षरमिति नाम । अत्रापि केचनावस्थाविशेषा भवन्त्येव । तस्मादस्याविभक्ततमस्त्वं नामाक्षरावस्थानिवृत्तौ सत्यां तमः शब्द वाच्यतया नामरूपविभागायोग्यतया च सर्वशरीरकपरमेश्वरविषये, एकीभवनम् । विभक्ततमस्त्वं तु नामरूपविभागयोग्यता यथा स्यात्तथा विभक्ततया कार्योन्मुखरूपत्वमक्षरनामकमिदमचित् । अत्रपुरुषसमष्टिरिति विवेचनायोग्यमतिसूक्ष्मायास्तमोऽवस्थायानिवृत्तौ सत्यां पुरुषसमष्टिगर्भत्वं यथा ज्ञायते तथाविधावस्थाप्राप्तिरेव । गुणत्रयवैषम्यानन्तरपूर्वावस्था गुणसमत्वलक्षणकमव्यक्तं, यस्यामवस्थायां गुणसमत्वविषयत्वं नो स्फुटं, तदवस्थचेतनसमष्टिगर्भत्वमेवाक्षरशब्देन कथ्यते, नतुचेतनमात्रं, तस्याव्यक्तप्रकृतित्वतमोविकृतित्वायोगात् अतः सर्वं तत्त्वजातं चिदचिदात्मकमेवमन्तव्यम् । 'प्रधानादिविशेषान्तं चेतनाचेतनात्मकम्' इतिश्रीपराशरवचनादिति संक्षेपः ।

यथोक्तवर्णितप्रकारायाः प्रकृतेर्गुणवैषम्यान्महतत्त्वादिविकाराः समुत्पद्यन्ते । तत्र गुणाः सत्वरजस्तमोगुणरूपाः । एते सत्वादयो गुणाः प्रकृतेः स्वस्वरूपभूता नतु आगन्तुकास्ते प्रकृतिदशायामनुद्भुता अवतिष्ठन्ते कार्यदशायांतूद्भुता भवन्ति । 'सत्वंरजस्तम इति गुणाः प्रकृतिसम्भवाः' प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः' इतिभगवदुक्तेः । तदुक्तं प्रकृतश्लोकेऽर्थचन्द्रिकायामस्मद् परमगुरुभिर्महामहोपाध्यायजगद्गुरुश्रीरामानन्दाचार्यश्रीरघुवराचार्यवेदान्तकेसरिभिरपि 'सत्त्वं रजस्तम इति संज्ञामादधाना गुणा इति च सामस्त्येनत्रयोऽपिगुणपरव्यपदेश्यास्ते च प्रकृतिसम्भवाः प्रकृतिः सम्भवो येषान्तो तथा भूताः स्वरूप



निरूपकधर्माणां धर्मिस्वरूपं यावत्स्थायित्वनियमादेतेऽपि शश्वत्प्रकृताववस्थितास्तथापि महत्तत्त्वादिरूपेण कार्यदशायामेतेषां व्यक्ततया प्रकृतिसम्भवता युज्जत इति न विरोधः' ( गीतार्थचन्द्रिका १४।५ ) 'प्रकृतेरचित्पदवाच्याया अनादिभूताया गुणैः करणकलेवरत्वेन परिणतैः सत्वजस्तमोभिः सर्वशः सर्वप्रकारेण क्रियमाणानि' ( गी. अ. ३।२७ ) इति ।

तत्र यदा विषमावस्थायां गुणस्योद्रेको भवति, तदा तादृशसत्वगुणात् सुखं ज्ञानञ्चोत्पद्यते, तथा ज्ञानसुखयोरात्मनि सङ्गश्च जायते । रजोगुणस्तु रागतृष्णासङ्गात् तथाकर्मसङ्गञ्च जनयति, तमोगुणस्तु भ्रमज्ञानं प्रमादमालस्यं निद्राञ्च समुत्पादयति ।

'तत्र सत्वं निर्मलत्वात् प्रकाशकमनामयम् ।
सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ॥'
रजोरागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् ।
तन्निबध्नाति कौन्तेय ? कर्मसङ्गेन देहिनम् ॥

'इति अत्र वनितादयितयोः परस्परं स्पृहैव रागपदबोधितो भवति, अर्थात् स्त्रीपुरुषयोरान्तरोऽनुरागविशेष एव रागः । बाह्यशब्दस्पर्शरूपरसगन्धादिसर्वविषयकोऽनुरागविशेष एव तृष्णा । पुत्रकलत्रधनधान्यादिबाह्यविषयकप्राप्तीच्छैवसङ्गः । यागपर्यटनतीर्थादिभ्रमणविषयकेच्छाविशेष एव कर्मसङ्गः । अर्थात् रागतृष्णासङ्गविक्रयादिविषियकानुरागरूपं सर्वं रजो गुणस्य कार्यं रजसोरागात्मकत्वेन स्वानुरूपकार्ये एव प्रेरकत्वात्तस्य । तथा 'तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम्, प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ?

तमो गुणोऽज्ञानजनितः, आज्ञानं नाम विपरीतज्ञानम् । यथा घटे ज्ञातव्ये कर्तव्ये वा पटं जानाति करोति वा प्रमादोनाम-अभिलषितवस्तुनि संपाद्यमानेऽनभिमतस्य सम्पादनमेव, कर्तव्यवस्तुनि अनारम्भरूपमेवतन्द्राविशेषलक्षणम् । पुरुषादेरिन्द्रियादिप्रवर्तनश्रमानुभवमूलकेन्द्रियमात्रस्योपरतिरूपैवेति । तथा 'सत्वात्संजायतेज्ञानं रजसोलोभ एव च । प्रमादमोहौतमसोभवतोऽज्ञानमेव चेति' । तदत्राहुः श्रीआनन्दभाष्यकारजगद्गुरवः श्रीरामानन्दाचार्याः-'सत्वरजस्तमोभ्यः क्रमेण ज्ञानलोभप्रमादमोहादयः सम्मुत्पद्यन्ते' ( गीतानन्दभाष्यम् ) ।

तदुक्तमीश्वरकृष्णेनापि 'सत्वंलघुप्रकाशकमिष्टमुपष्टम्भकं चलं च रजः । गुरुव रणकमेवतमः प्रदीपवच्चार्थतोवृत्तिः' इति । यद्यपि सत्वादयो गुणाः परस्परं विरुद्धा विवदमानाविनश्यन्त्येव न तु महदादिविकारान् मिलित्वोत्पादयिष्यन्ति तथापि यथा अनलवर्त्तितैलसङ्घातरूपः प्रदीपः परस्परविरुद्धपदार्थघटितोऽपि भविष्यत्कालिकार्थप्रकाशनलक्षणपुरुषार्थमपेक्ष्यमिलित्वाऽर्थप्रकाशलक्षण कार्यं करोति तथैव परस्परं विरोधशीला अपि गुणा भोगापवर्गलक्षणपुरुषार्थ मपेक्ष्य मिलिताः सन्तोऽभिलषितपुरुषार्थभोगापवर्गरूपं कुर्वन्तीतिसारः ।

प्रकृतिर्महदादिविकाररूपेण स्वविषयेण विकाररूपेण परिणमते इति स्थितम् । तत्र वस्तुमात्रस्य जागतिकजडस्यप्रकृतिविकारत्वेऽपि प्रकृत्याः प्रथमो विकारः कः ? इतिजिज्ञासानिवृत्तये प्राचीनैः कथितम्, प्रकृतेर्विकारेषु मध्ये प्रथमो विकारो महत्तत्वम्, तदध्यवसायलक्षणकम्, अध्यवसायो बुद्धि' रिति वचनात् । तत् सात्विकराजसतामसभेदेन त्रिविधम् । तदुक्तम्-'गुणसाम्यात्ततस्तस्मात्क्षेत्रज्ञाधिष्ठितान्मुने । गुणव्यञ्जनसंभूतिसर्गकालं द्विजोतम ?' इति । अयमाशयः-गुणानां समावस्थातः क्षेत्रज्ञेन बद्धचेतनाधिष्ठितात्, अव्यक्ताद् गुणोन्मेषकारणतया गुणाभिव्यक्तिजननात्मकन्महत्तत्वं समुत्पद्यते । तन्महत्तत्वं त्रिविधम्, सात्विकोराजसश्चैवतामसश्चत्रिधामतमितिवचनात् । प्रकाशप्रवृत्तिमोहात्मककार्यानुमेयसत्वरजस्तमोगुणसम्बन्धेन सात्विकराजसतामसंचेत्येवं तन्महत्तत्वं त्रिविधं भवति । तत्र 'अध्यवसयो बुद्धिधर्मोज्ञानबिराग ऐश्वर्यम्' इति वचनात् अध्यवसायात्मकव्यापारवत्वमेवमहत्तत्वस्य लक्षणम् । अर्थात्-सात्विकराजसतामसबुद्धिभेदेन त्रैविध्यमर्जुनायप्राह श्रीकृष्णः-'प्रवृत्तिं च निवृत्तिं च कार्याकार्येभयाभये । बन्धं मोक्षं च या वेत्ति बुद्धिःसा पार्थ राजसी 'अर्थात् धर्माधर्मादीनां ज्ञानं न साकल्येन किन्तु अंशरूपेणैतेषां ज्ञानमेवराजसज्ञानमिति । तथा 'अधर्मंधर्ममिति या मन्यते तमसावृता । सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ तामसीति सर्वत्र तदभावति तत्प्रकारकं ज्ञानं तामसम्, यथा धर्मादिकमधर्मादिकमकर्त्तव्यं कर्तव्यमित्यादि । न केवलं महत्तत्वमेव प्रकृतेर्विकारः किन्तु महत्तत्वानन्तरमहंकारो जायते, स च वैकारिकतैजसभूतादिभेदेन त्रिविधः स चाभिमानसलक्षणः । तदुक्तम्-वैकारिकस्तैजसश्चभूतादिश्चैवतामशः । त्रिवि



धोऽयमहङ्कारोमहत्तत्वादजायत' इति । अर्थात् प्रकृतिजनितमहत्तत्वात् वैकारिकः सात्विक इत्यर्थः तैजसोभूतादिश्चेति । अत्र त्रिविधाहङ्कारेषु वैकारिकात्सात्विकाहङ्कारात् सत्वलघुप्रकाशयुक्तानि श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मकानिशब्दस्पर्शरूपरसगन्धग्राहकाणि पञ्चज्ञानेन्द्रियाणिवाक्पाणिपादपायूपस्थाख्यानि वचनादानविहरणोत्सर्गानन्दाख्यविषयाणि पञ्चकर्मेन्द्रियाणि तथोभयात्मकमान्तरं मनश्च समुत्पद्यमानानि भवन्ति । तदुक्तम्-'तैजसानीन्द्रियाण्याहुर्देवावैकारिकादश । एकादशं मनश्चात्र देवावैकारिकाः स्मृताः' इति । 'अग्निर्वाग्भूत्वामुखंप्राविशत्' वायुः प्राणोभूत्वानासिकेप्राविशत् 'आदित्यश्चक्षुर्भूत्वाऽक्षिणीप्रावीशत् 'दिशः श्रोत्रंभूत्वा कर्णौप्राविशत्' ओषधिवनस्पतयो लोमानिभूत्वानाभिं प्राविशत्' चन्द्रमामनोभूत्वाहृदयं प्राविशत् मृत्युरपानोभूत्वा नाभिं प्राविशत् आपोरेतोभूत्वा शिश्नंप्राविशत्' इत्यादिश्रुत्या इन्द्रियाणां तत्तद्देवाधिष्ठितत्वश्रवणेन देवशब्दप्रतिपाद्यान्येकादशेन्द्रियाणि मनः सहितानि सात्विकाहंकाराज्जातानि, राजसाहङ्कारेणेन्द्रियाणामुत्पत्तिर्भवति प्रवृत्तिशीलत्वादिन्द्रियाणामिति कस्यचिन्मतम्, तन्न युक्तम् श्रीपराशरादिभिरिन्द्रियाणां सात्विकाहङ्कारजन्यत्वस्यैवप्रतिपादनात् । तथैवश्रौतप्रमेयचन्द्रिकायां जगद्गुरुश्रीश्रियानन्दाचार्यनिर्वचनाच्च । तथाहि-'इन्द्रियाणि हि जातानि चाहङ्कारात्तुसात्विकात् । अनुग्राहकता चाथ राजसाहंकृतेरिह । इन्द्रियाणि तन्मात्रेषु' इत्येतच्छ्रुतिवाक्यतः । विरुद्धैवेन्द्रियाणां नन्वहङ्कारिकता खलुः । मैवं लयपदाभावाल्लयो नात्रानुसज्यते । तन्मात्रेष्विन्द्रियाणां च किन्तु संसर्गितैव हि । 'इन्द्रियाणि मनश्चापि लीयन्तेऽहंकृतौ ततः । पुराणेऽपीन्द्रियाणां हि हेतुताहङ्कृताविति' (१०३) इति । इन्द्रियाणामेकादशत्वकथनं समष्ट्यभिप्रायेण तदुक्तमाचार्यश्रीपराशरेण-

तेषां त्ववयवान् सूक्ष्मान् षण्णामप्यभितैजसाम् ।
संनिवेश्यात्ममात्रासु सर्वभूतानि निर्ममे' इति ॥

अत्रेन्द्रियाणां सूक्ष्मत्वकथनेन 'अणवश्चे'ति सूत्रप्रतिपादितमणुत्वमिन्द्रियस्याविष्कृतम्, तथैवाहुः भाष्यकारा अपि प्रकृतसूत्रे-'ते हीन्द्रियशब्दाभिलप्याः प्राणा विभव आहोस्विदणव इति पूर्वः पक्षः । कुतः ! 'त एते सर्व एव समाः सर्वेऽनन्ताः' (बृ. १।५।१३) इति श्रुतेः, इति प्राप्तेऽभिधीयते-अणवश्चेति । अण

व एव प्राणाः । 'प्राणमनूत्क्रामन्तं सर्वे प्राणा अनुत्क्रामन्ति' ( बृ. ४।४।२ ) इति तेषामुत्क्रान्तिश्रवणादणुत्वमेव विभूत्वे तूत्क्रान्त्यसंभवात् । प्राणानां गतावपि पार्श्वस्थैरदृश्यमानत्वादणव एव प्राणाः । इन्द्रियाणां प्राप्यकारित्वाच्चक्षुरादेर्ग तिमत्त्वमप्यत्रमानम् ( आनन्दभाष्यम् २।४।७ ) तथा 'आत्ममात्मासुसंनिवेश्य' इतिकथनात् सर्गादौ यानीन्द्रियाणि यस्मै प्रदत्तानि तान्येवेन्द्रियाणि यावत्प्रलयं भवन्ति न तु षाट्कौशिकशरीरवत् प्रतिजन्मनि विभिन्नानि भवन्तीति । तथोक्तं भगवता-

शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।
गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ॥ इति ।

सात्विकाहङ्कारेणेन्द्रियाणां सर्गो भवति, तदनन्तरं तामसाहङ्कारेण भूतादि पदवाच्येन आकाशः तन्मात्रं जायते, शब्दतन्मात्रेण महाकाशः स्पर्शतन्मात्रं च जायते, स्पर्शतन्मात्रेण महावायुतेजस्तन्मात्रमुत्पद्यते, तेजस्तन्मात्रेण महत्तेजोरस तन्मात्रञ्चसमुत्पद्यते, रस तन्मात्रेण महज्जलं पृथिवीतन्मात्रञ्चोत्पद्यते, पृथिवी तन्मात्रेण सर्वाधारभूतामहापृथिवी भवति पृथिव्यां चतुर्दशलोका ओषधिवनस्प तयश्च समुत्पद्यन्ते । इत्थमत्रोत्पत्तिक्रमः । भूतादेस्तामसाहङ्कारात्, शब्दतन्मात्रं समुत्पद्यते, तं भूतादिरहङ्कार आवृणोति, ततो महाकाशस्योत्पत्तिर्भवति, त-तोऽस्मात्स्पर्शतन्मात्रमुत्पद्यते, शब्दतन्मात्रमावृणोति । एवं शब्दतन्मात्रावृताकाश सहायकात्स्पर्शतन्मात्राद्वायोरुत्पत्तिर्भवति, ततोऽस्माद्रूपतन्मात्रं जायते, रूप-तन्मात्रं स्पर्शतन्मात्रमावृणोति, एवं स्पर्शतन्मात्रावृताद्वायुसहायकात् रूपतन्मा त्रात्तेजो जायते, तस्माद्रसतन्मात्रं तं रूपतन्मात्रमावृणोति । रसतन्मात्रं रूपतन्मा त्रादूगन्धतन्मात्रं जायते, रसतन्मात्रमावृणोति, रसतन्मात्रावृतजलसहायकाद्गन्ध तन्मात्रात्पृथिवी जायते इति प्रक्रमः ।

नन्ववगतोऽभिमानलक्षणको गगनादिजनकोऽहङ्कारः । अवगतश्चभूताका शादिः परन्त्वनयोर्मध्ये समागतमिदं तन्मात्रनामकं वस्तु किमिति चेदत्रोच्यते 'तामसाहंक्रियाकार्यं भूतोपादानकारणम् । द्रव्यं तन्मात्रसंज्ञं तदनुद्भूतगुणाश्रयः' इत्याचार्योक्तेरनुद्भूतगुणाश्रयत्वरूपाभूतानामाकाशादीनां ज्ञेयं सूक्ष्मावस्थासैवा काशादितन्मात्रपदवाच्येति विजानीहि । सूक्ष्मावस्थं भूतमेव तन्मात्रपदवाच्यं तत



एव व्यवहारप्रवर्तकाकाशादिपृथिव्यन्तमहाभूतस्योत्पत्तिर्भवतीति महाभूतजनका हङ्कारव्यतिरिक्तवस्तुविशेष एव तन्मात्रपदवाच्यो भवतीति संक्षेपः ।

यद्यपि यथा सात्विकाहङ्कारस्येन्द्रिसर्गः स्वतन्त्रं कार्यं यथा वा तामसा हङ्कारस्य स्वतन्त्रं कार्यं भूतसर्गस्तथा राजसाहङ्कारस्य स्वतन्त्रं कार्यान्तरं नास्ति, तथापि सात्विकतामसाहङ्काराभ्यां स्वस्वकार्ये समुत्पादनीये राजसाहङ्कारः सह कारी भवति । रजसो हि प्रवर्तकत्वेन प्रसिद्धिरत इन्द्रियकारणसत्वांशस्य भूत कारणतमोंशस्य च सदाचलनस्वभावकेन रजोगुणेन प्रेरकेन प्रवर्तनं भवति । अर्थात् गुणान्तरस्य प्रवृत्तिरहिततया रजसाप्रवर्तितं सत् स्वस्य कार्यं करोति । यथा घटोत्पादने मृदः सहकारिजलादिकं भवति । तथैव ताभ्यां तत्तत्कार्योत्पा दयितव्ये रजोगुणः सहकारी भवन् सार्थको भवति स्वतन्त्रकार्याभावेऽपीति ध्येयम् ।

सात्विकोऽहङ्कारः शब्दतन्मात्रादिपञ्चकं सहकारिणं प्राप्य श्रोत्रत्वक्चक्षु रसनघ्राणाख्यानि पञ्चज्ञानेन्द्रियाणि तथा वाक्पाणिपादपायूपस्थाख्यानि पञ्च कर्मेन्द्रियाणि च जनयति । तथा स स्वयमेवान्तःकरणं मनोबुद्धिचित्तरूपं सृज तीतिकेचना अन्ये तु आकाशादिभूतानामेव कार्याणि इन्द्रियाणि । अर्थात् न्याय विद एवं कथयन्ति यत् घ्राणादिकानीन्द्रियाणि पृथिव्यादिभूतकार्याणि अतएव तानीन्द्रियाणिभौतिकानीत्युच्यन्ते तत्र श्रुतिरेव प्रमाणम्, तथाहि-'अन्नमयं हि सौम्य मन आपोमयः प्राणस्तेजोमयीवागिति' अतोनाहङ्कारप्रभवाणीन्द्रियाणी ति । मोक्षधर्मेऽपि-

'शब्दःश्रोत्रं तथाखादित्रयमाकाशसंभवम् ।
वायोःपर्शस्तथाचेष्टात्वक् चैव त्रितयं स्मृतम् ॥
रूपं चक्षुस्तथाव्यक्तिस्त्रितयं तेज उच्यते ।
रसः क्लेदश्चजिह्वा च त्रयोजलगुणाः स्मृताः ॥
घ्राणं घ्रेयं शरीरं च ते तु भूमिगुणाः स्मृताः' इति ।

इत्युपर्युक्तप्रकारेणेन्द्रियादिनां भूतकार्यतया प्रतिपादनेनाहङ्कारकार्यत्व कथनं विरुद्धमिवाभातीतिचेन्न भावानवबोधात् । अयमाशयः-इन्द्रियाणि तु अनेकप्रमाणयुक्तितर्कादिबलेन सात्विकाहङ्कारकार्यमिति व्यवस्थापितम् । यत्र

क्वचनभूतकार्यत्वकथनं न तत् कार्यत्वाभिप्रायेण किन्तु पोषकत्वाभिप्रायेण। अर्थात् इन्द्रियोत्पत्तिस्त्वहङ्कारात्, उत्पन्नं सत् भूतेनाप्यायितं पुष्टं भवति ततश्चेन्द्रियपोषकत्वं भूतानां न तूत्पादकत्त्वम् । अतएव छान्दोग्यस्य षष्ठाध्याये उद्दालकेन कथितम्-पञ्चदशाहानि उपोषणं कुरु ततस्ते ब्रह्मोपदेक्ष्यामि । तथा कृत्वा यदा श्वेतकेतुरागतस्तदा पित्रोक्तं 'वेदान् पठ' ततः श्वेतकेतुरुवाच-नेमे वेदाः प्रतिभान्ति । ततः पित्रोक्तम्-अन्नमयं सोम्य मनः' इत्यादि । अर्थात् हे पुत्र ? यदिदं मनस्तदन्नभक्षणेन पुष्टं सत् विचारादिकरणे प्रभवति, तदभावेदुर्बलं सत् किमपि कर्तुं न शक्नोति । इतिछान्दोग्यीयप्रकरणपर्यालोचनेनेदमायाति यदुत्पद्यते इन्द्रियमन्यस्मात्, उत्पन्नं सदन्नादिना आप्यायितं भवन् कार्याय पर्याप्तं भवति । आप्यायकत्वं नामपोषकत्वमेव ततश्च पृथिव्यादीनि पोषकाणि न तु इन्द्रियाणामुत्पादकानीति संक्षेपः । विस्तरस्तुपूर्वाचार्यादिदिव्यप्रबन्धेभ्य आकरग्रन्थेभ्यश्चानुसन्धेयो विशेषार्थिभिः । अनेनोपर्युक्तप्रकारेण महदादिभौतिकान्तपदार्थानां सृष्टिप्रकारः प्रदर्शितः परन्तु यावत्पर्यन्तमेतेमिलिताः परस्परं सापेक्षा न भवेयुस्तावत्पर्यन्तं न किमपि स्यात् तदुक्तम्-'नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना । नाशक्नुवन् प्रजाः स्त्रष्टुमसमागम्य कृत्स्नशः ॥ इतीश्वरः परस्परासंहतान् तान् सर्वान् मेलयित्वा ब्रह्माण्डमुत्पा दयति । यथा कश्चिद् गृहनिर्माता यतस्ततः शूष्कमृत्तिकां बालुकाजलादिकं समाहृत्यसर्वान् मेलयित्वा तदेकं कृत्वा भित्यादिकं निर्माय प्रासादं करोति, तथैव सर्वशक्तिमान् परमेश्वरो महदादिकान् सर्वान् मेलयित्वा मिलितैर्महदादिभिरेकं ब्रह्माण्डमुत्पादयति ।

'समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः ।
एकसंघातलक्षाश्च संप्राप्यैकमशेषतः ॥
महदादिविशेषान्ता ह्यण्डमुत्पादयन्ति ते ।'

इतिवचनेनैतत्सर्वं महदादिकं परस्परमेकीकृत्य तैर्ब्रह्माण्डसर्गं करोति परेशः श्रीरामः । कुतः ? अण्डमध्ये महदादिसर्वतत्त्वानां समावेशदर्शनेन महदादिसर्वपदार्थानेकीकृत्याण्डसृष्टिमकरोदित्यर्थः । अत एवोक्तम्-'भूतेभ्योऽण्डं महाबुद्धे बृहत्तदुदकेशयम्' इति । भूतेभ्योजातमण्डं कियत्कालं जलेऽवतिष्ठते इत्यर्थः । मनुरप्याह-



'ततः स्वयंभूर्भगवान् सिसृक्षुर्विविधाः प्रजाः ।
अप एव ससर्जादौ तासु बीजमवासृजत् ॥
तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्' इति ।

इत्येवं सर्वप्रथमं जलेभ्यो ब्रह्माण्डस्योत्पत्तिरभवदिति मनोर्वचनम् । अर्थात् भूतान्तरसंसृष्टपृथिवीभागाज्जलादण्डस्योत्पत्तिस्तथा तस्मिन्नेव जले कियत्कालपर्यन्तं तदवस्थानमिति ।

पूर्वोक्तक्रमेण परमेश्वरनिर्मितब्रह्माण्डसर्गप्रकारं प्रदर्श्य तेषां बाह्यभूतानामाकाशादीनामान्तराकाशसमीरणादिस्वरूपेणान्तरलोकादिविभागं तथा तेषु चतुर्दशलोकेषु मध्ये देवमनुष्यादिविभागं च दर्शयितुमण्डान्तर्गतबद्धजीवसमष्टिस्वरूपं चतुर्मुखब्रह्मणः सर्गो भवति । अर्थात् ब्रह्माण्डसर्गानन्तरं तदधिष्ठायकं जीवघनात्मकं चतुर्मुखं सृजति परमेश्वरः स्वयमेव, अर्थात् महदादिसमुदायरूपमण्डात्मककार्यं तत्करणानिमहदादिपदार्थान् सत्यसङ्कल्पवान् परमेश्वर-सङ्कल्पाव्यवहितोत्तरकाले एव सृजति । तदुक्तम्-

'सोभिध्यायशरीरात्स्वात् सिसृक्षुर्विविधाः प्रजाः ।
अप एव ससर्जादौ तासुबीजमवासृजत् ॥
तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्' इति ।

ईश्वरसृष्टान्तर्गतपदार्थात् चतुर्मुखस्यान्तर्यामीभवन् अर्थात् चतुर्मुखहृदये स्थित्वा 'सर्वस्यचाहं हृदिसन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनञ्च 'इतिसङ्कल्पज्ञानादीन् समुत्पाद्य तदण्डान्तर्गतसकलपदार्थान् समुत्पादयति, तथोक्तम्-'यत् किञ्चित् सृज्यते येन सत्यजातेन वै द्विज ? तस्य सृज्यस्य संभूतौ तत्सर्वं वै हरेस्तनुः' तत्र अण्डतत्कारणमहदादिकं चतुर्मुखञ्च स्वयमुत्पादयति तदन्तर्गतपदार्थास्तु चतुर्मुखान्तर्यामीभूत्वासत्यसङ्कल्पेन सृजति । तत्र चतुर्मुखान्तसृष्टौ साक्षात्कारणमीश्वरः अण्डान्तर्गतपदार्थोत्पादने च चतुर्मुखद्वाराकारणमितिभावः ।

'पञ्चीकृतैश्च भूतैश्च रामश्चाण्डं ससर्ज हि ।
अण्डोत्पादनतः पूर्वा सृष्टिः समष्टिनामिका ॥
श्रीरामेण कृता पश्चात् सृष्टिस्तु व्यष्टिसंज्ञका ।
अद्वारिकासमष्टिश्च व्यष्टिः सद्वारिकामता ॥'

इतिश्रौतप्रमेयचन्द्रिकायामाचार्योक्तेः ।

अथ यदिदमण्डं परमेश्वरेणोत्पादितं तदेकमनेकं वेति संशयेऽनेकान्येव तान्यण्डानिभूरादिचतुर्दशलोकसंस्थानरूपाणि यथोत्तरं दशगुणोत्तरैरावरणैः सप्तसंख्याकैरावृतानि तस्य लीलोपकरणानि जलबुद्बुदवद् भगवज्जातानि । 'अण्डानां तु सहस्राणां सहस्राण्ययुतानि च । ईदृशानां तथा तत्र कोटि कोटि शतानि च ।' इतिवचनात् चतुर्दशलोकयुक्तानि, तत्र चतुर्दशलोकाश्चाण्डकपाल स्योर्ध्वदेशेऽशीतिलक्षयोजनोच्छ्रायवन्तः गर्तोदकस्योपरितु-

'सप्ततिस्तु सहस्राणिद्विजोच्छ्रायोपि कथ्यते ।
दशसाहस्रमेकैकपातालं मुनिसत्तम ॥
अतलं वितलं चैव नितलं च गभस्तिमत् ।
महांश्च सुतलं चाग्र्यं पाताले चैव सप्तमः' इति ।

इत्येवं तत्प्रत्येकं दशसहस्रयोजनोच्छ्रायवन्तो दैत्यादीनां निवेशदेशः । तथा-'शुक्लकृष्णारुणाः पीताः शर्कराः शैलकाञ्चनाः । भूमयो यत्र मैत्रेय ? वरप्रसादशोभिताः ।' इतिवचनेन शुक्लादिवालुकाप्रायाविलक्षणादेवनगरेभ्यो प्युत्कृष्टदैत्यभोगभोग्यातलादिकाऽधोधोविद्यमानाः सप्तलोकाः । तेषामुपरिनव सहस्रयोजनविस्तृतः सप्तद्वीपपर्वतसागरविशिष्टः पद्भ्यांचरणशीलमनुष्यप्रभृति भिर्युक्तोकमलकोरकसदृशो भूर्लोकः, ततोभूर्लोकस्योपरिसूर्यस्यार्धलक्षयोजन परिमितो गन्धर्वप्रभृतिराकुलोदेशविशेषोभूवर्लोकः । ततः सूर्यसंचरणदेशादुपरि ध्रुवलोकस्यनीचैश्चतुर्दशलक्षयोजनविस्तृतः स्वकीयाधिकारेविनियुक्तशुक्रादिग्रह रोहिण्यादिनक्षत्रप्रभृतिभिराराधितोदेशविशेषः स्वर्लोकः, ततो ध्रुवलोकस्योपरि ष्टात्कोटियोजनोच्छ्रायः 'विनिवृत्ताधिकारास्तुमहर्लोकनिवासिनः' इतिवचनात् विनिवृत्ताधिकारवद्भिः परन्तु स्वकीयाधिकारापेक्षाशालिभिरिन्द्रियमादिभिर्देवैः संकुलितोदेशविशेषोनाममहर्लोकः महर्लोकादुपरिष्टात् कोटिद्वययोजनोच्छ्रितश्च तुर्मुखब्रह्मपुत्रसनकसनन्दनसनातनादिभिर्बाल्यादेवपरमयोगिभिः सदापञ्चवार्षि कावस्थावद्भिरध्यासितोदेशविशेषोजनलोकेतिनामतः प्रथितो भवति, ततो जनलोकादुपरिदेशेऽष्टकोटियोजनविस्तृतो वैराजनामकप्रजापतिभिरधिष्ठितो लोकविशेषस्तपोलोकः, ततस्तपोलोकादुपरिभागेऽष्टचत्वारिंशत् कोटियोज-



नोच्छ्रितः सत्य लोकः-

'तेषामेषां केचन ब्रह्मलोकाः । रुद्रस्यान्ये सन्ति तत्रैव लोकाः ॥ तांस्तां ल्लोकान् तानुपास्यव्रजन्ति' इतिवचनप्रामाण्येन ब्रह्मविष्णुशिवानुपास्य प्राप्तै रध्यासितो देशविशेष एव सत्यलोकः । एवमूर्ध्वाधः कटाहयोरन्तरालेऽष्टषष्टि योजनोच्छ्रितः पञ्चाशत्कोटियोजनोऽण्डस्योच्छ्राय इत्यपि वदन्ति । तत्र 'सूर्याण्ड गोलयोर्मध्ये कोस्य स्युः पञ्चविंशति' रितिवचनात् सूर्यस्योपरिदेशे पञ्चविंशति-कोटियोजनान्यधस्तात् पञ्चविंशतिकोटियोजनानि च भवन्तीति । एवं प्रकारे णोपर्युक्तैश्चतुर्दशभूरादिलोकैर्युक्तानि, उत्तरोत्तरं दशगुणितैः सप्तभिरावृतानीति । पूर्वोक्तचतुर्दशलोकान् 'एतदण्डकटाहेन तिरश्चोर्ध्वमधस्तथा । कपित्थस्य यथा बीजं सर्वतोवैसमावृतम्' इत्युक्तप्रकारेण यथा कपित्थस्य फलविशेषस्य बिल्व फलस्य वा बीजादिकं कपित्थादित्वचा यथा सर्वत आवृतं भवति तथा 'कोटि योजनमानस्तुकटाहः संव्यवस्थित 'इतिकोटियोजनप्रमाणवत्तया स एवोक्तोऽण्ड कटाह आवृणोति चतुर्दशभुवनम् । साण्डकटाहं चेदं ब्रह्माण्डम् 'दशोत्तरेण पयसा मैत्रेयाण्डं च तद्वृतम्' इतिवचनप्रकारेण स्वापेक्षयादशगुणितविस्तार युक्तजलत्वेनावृतं समास्ति ।

पञ्चाशत्कोटिविस्तीर्णा सेयमुर्वी महामुने । सहैवाण्डकपालेन सद्वीपाब्धि महीधरा । इतिवचनेन साण्डकटाहमण्डं पञ्चाशत्कोटिविस्तीर्णमिति केचन वदन्ति । भूमण्डलं शतकोटिविस्तारं साण्डकटाहमिति वराहपुराणे । एवं शिव पुराणे स्कन्दपुराणे सविस्तरं दर्शितं तत एव द्रष्टव्यं विशेषजिघ्रिक्षुभिः । कनका चलस्य मेरुपर्वतश्चतुर्दिक्षुपञ्चाशत्कोटि विस्तारं स्वीकृत्य भूमिं शतकोटिविस्तृतां वदन्ति । अत्र यां कामपि मर्यादामव लम्ब्य ततो दशगुणेन जलतत्वेनावृतमिति केचित् । एवं दशाधिकेन तेजस्तत्वेन जलतत्त्वमामृतं भवति तथा दशाधिकं वायुतत्वं तेजस्तत्वमावृणोति, तथा दशाधिकं वायुतत्वमाकाशमावृणोति, आ काशतत्वं दशाधिकोऽहङ्कार आवृणोति, अहङ्कारं दशाधिकं महत्तत्वमावृणोति, तादृशं महत्तत्वं दशाधिकमव्यक्तमावृणोति, यद्यपि तदनन्तरमसंख्यातप्रमाणम्, अर्थादसंख्यातप्रमाणकमव्यक्तमितिदशोत्तरकथनमयुक्तमिवाभाति, अपरिमित-प्रमाणस्याव्यक्तस्यावरणत्वप्रयुक्तं दशोत्तरत्वं न संभवति, तथापि सहस्रे दशवत्

अपरिमितसंख्यायां तस्यापिसत्वे नोपपत्तिसंभवात् ।

वारिवहन्यनिलाकाशै स्ततो भूतादिना बहिः ।
वृत्तं दशगुणैरण्डं भूतादिर्महता तथा ॥
अव्यक्तेनावृतो ब्रह्मन् तैः सर्वैः सहितो महान् ।
एभिरावरणैरण्डं सप्तभिः प्राकृतैर्वृतम् ॥

इतिवचनप्रमाणेन दशोत्तरसप्तावरणैरेवावृतं ब्रह्माण्डगोलकमितिभावः । एतज्जगत् परमेश्वरश्रीरामस्य लीलोमकरणमिवोपकरणं यथा कश्चिद्बालको लीलासक्तः तस्य कन्दुकादीनि क्रीडोपकरणानि तथा इदं सर्वंभूमण्डलं परमेश्वरश्रीरामस्य लीलोपकरणम् । तदुक्तम्-'हरे विहरसि क्रीडां कन्दुकैरिवजन्तुभिः' इति । तथा 'मोदते भगवान् भूतैर्बालः क्रीडनकैरिवेति । तानि ब्रह्माण्डान्यनेकान्येक काले एव जलबुद्बुदवत् सम्पादितानि, नत्वेकं नवा क्रमेणोत्पादितानि । अपित्वेककाल एवानेकान्युत्पादितानि तथोक्तम्-'न क्रमेण विवृद्धं तज्जलबुद्बुदवत् सममिति । यथा वर्षासमये जलराशिमहातडागादौ युगपदनेकानि बुद्बुदानि जायन्ते न तेषां क्रमः किन्तु समानकालिकत्वं तथैव युगपदेव सहस्त्रोऽण्डानि ब्रह्मणा निर्मितानीति । तदुक्तमुदयनाचार्येण 'अलावूलतावत् परमेश्वरशक्तिलतायां सहस्त्रसोऽण्डानि अनुस्यूतानि' इति । उक्तप्रकारेण ब्रह्माण्डस्य महदादितत्वेनोत्पत्तिर्भवतीति वर्णितम् एवं यथा एकः कुलालो दश वा शतं वा घटमुत्पादयति तथैव परमेश्वरोऽपि द्वित्राण्येव तान्यण्डानि स्त्रक्ष्यतीति न वक्तव्यम्, परमेश्वरस्यापरिमितशक्तितया सत्यसङ्कल्पेन सर्वसंभवात् । तदिदं 'पादोऽस्येहाऽभवत्पुनः' (ऋग्वेदः) इत्युक्तदिशा प्रकृतिमण्डलनिदर्शनमितिदिक् ।

'त्रिपादूर्ध्वउदैत्पुरुषः' इतिर्निदेशदिशा परेशश्रीरामाभिन्नत्रिपाद् विभूतिस्तु

'पुरं तो ब्रह्मणो वेद यस्याः पुरुष उच्यते ।
यो वै तां ब्रह्मणो वेदामृतेनावृतां पुरम् ।
तस्मै ब्रह्म च ब्रह्माश्च चक्षुः प्राणं प्रजां ददुः ।
नवै तं चक्षुर्जहाति न प्राणो जरसः पुरा ।
पुरं यो ब्रह्मणो वेद यस्याः पुरुष उच्यते ।



अष्टाचक्रा नवद्वारा देवानां पूरयोध्या ।
तस्यां हिरण्ययः कोशः स्वर्गो ज्योतिषाऽऽवृतः ।
तस्मिन् हिरण्यये कोशे त्र्यरेत्रिप्रतिष्ठिते ।
तस्मिन् यद्यक्षमात्मन्वत् तद्वै ब्रह्मविदो विदुः ।
प्रभ्राजमानां हरिणीं यशसा सम्परीवृताम् ।
पुरं हिरण्ययीं ब्रह्मा विवेशापराजितम् ।'
(अथर्ववेदे १०।२। २८ तः ३३) तथा
'अयोध्या नन्दिनी सत्यानामा साकेत इत्यपि ।
कोसला राजधानी च ब्रह्मपूरपराजिता ॥
अष्टचक्रा नवद्वारा नगरी धर्मसम्पदाम् ।
दृष्ट्वैवं ज्ञाननेत्रेण ध्यातव्या सरयूस्तथा ॥ (शिवसंहिता ५।२०।१५-१६)
भोगस्थानं पराऽयोध्या लीलास्थानं त्वियं भुवि ।
भोगलीलावती रामो निरङ्कुशविभूतिकः ॥ शि.सं. ५।२।८)
'ब्रह्मज्योतिरयोध्यायाः प्रथमावरणे शुभम् ।
यत्र गच्छन्ति कैवल्याः सोऽहमस्मीति वादिनः ॥' (वशिष्ठसंहिता २६।१)
'अयोध्यानगरी नित्या सच्चिदानन्दरूपिणी ।
यस्यांशांशेन वैकुण्ठो गोलोकादिः प्रतिष्ठितः ॥
यत्र श्रीसरयूर्नित्या प्रेमवारिप्रवाहिणी ।
यस्या अंशेन सम्भूता विरजादिसरिद्वाराः ॥' (व.सं.)
'साकेतके पुरद्वारे सरयूः केलिकारिणी' (बृहद्ब्रह्मसंहिता ३।१।८९)
'अयोध्यानगरे रम्ये रत्नमण्डपमध्यगे ।
स्मरेत्कल्पतरोर्मूले रत्नसिंहासनं शुभम् ॥
तन्मध्येऽष्टदलं पद्मं नानारत्नैश्च वेष्टितम् ।
रामं रघुवरं वीरं धनुर्वेदविशारदम् ।
मङ्गलायतनं देवं रामं राजीवलोचनम् ॥'
(सनत्कुमारसंहितास्थः श्रीरामस्तवराजः)

'यायोध्या पूः सा सर्ववैकुण्ठानामेवमूलाधारा मूलप्रकृतेः परा तत्सद् ब्रह्ममयी विरजोत्तरा दिव्यरत्नकोशाढ्या तस्यां नित्यमेव सीतारामयोर्विहारस्थलमस्ति' (श्रुतिः)

'तद्विष्णोः परमं धाम यान्ति ब्रह्मसुखप्रदम् ।
नाना जनपदा कीर्णं वैकुण्ठं तद्धरेः पदम् ।
प्राकारैश्चविमानैश्च सौधैर्रत्नमयैर्वृतम् ।
तन्मध्ये नगरीदिव्या सायोध्येति प्रकीर्तिता ।
मणिकाञ्चनचित्राढ्यप्राकारैस्तोरणैर्वृता ।
मध्ये तु मण्डपं दिव्यं राजस्थानं महोच्छ्रयम् ।
मध्ये सिंहासनं रम्यं सर्ववेदमयं शुभम् ।
धर्मादिदैवतैर्नित्यैर्वृतं पादमयात्मकैः ।
धर्मज्ञानमहैश्वर्यवैराग्यैः पादविग्रहैः ।
ऋग्यजुसामाथर्वाख्यरूपैर्नित्यंवृतं क्रमात् ।
शक्तिराधारशक्तिश्च चिच्छक्तिश्चसदाशिवा ।
धर्मादिदैवतानां च शक्तयः परिकीर्तिताः ।
तन्मध्येऽष्टदलं पद्ममुदयार्कसमप्रभम् ।
तन्मध्येकर्णिकायां तु सावित्र्यां शुभदर्शने ।
ईश्वर्या सह देवेशस्तत्रासीनः परः पुमान् ।
इन्दिवरदलश्यामः कोटिसूर्यप्रकाशवान् ।
युवा कुमारः स्निग्धश्च कोमलावयवैर्वृतः ।
फुल्लरक्ताम्बुजनिभः कोमलाङ्घ्रिसरोजवान् ।'

(पद्मपुराणोत्तरखण्डे २२८।१०-तः १२ तथा १९ तः २३। २६ तः २८) इत्यादिश्रुतिस्मृतिपुराणसंहितादिग्रन्थतस्तथा जगद्गुरुश्रीरामेश्वरानन्दाचार्यसारस्वतसार्वभौमप्रसादितः श्रीरामप्राप्तिपद्धतिस्थः-

श्रीमद्रामस्य सङ्कल्पाद् दिव्यदेहो भवत्यसौ ।
कालकाल्येतरे दिव्ये देशे प्राप्तो भवत्यथ ॥
सरस्यैरंमदीयेऽथ दिव्ये स्नानं करोति सः ।



भवत्यनन्तरं चासौ दिव्यभूषणभूषितः ॥
दिव्यं चाथ विमानं हि समारूढो भवत्ययम् ।
तिल्यारण्यप्रवेशोऽस्य विमानारोहणादनु ॥
अप्सरोभिश्चदिव्यैर्हि भक्त्याचास्य सुसत्कृतिः ।
तिल्यगन्धप्रवेशोऽस्य तादृश्याः सत्कृते परम् ॥
तिल्यगन्धं प्रविश्याथ ब्रह्मगन्धं विशत्ययम् ।
सम्प्राप्नोति ततश्चायं प्राकृतेतरगोपुरम् ॥
वैकुण्ठनगरस्याप्तिर्भवत्यस्य ततः परम् ।
भवत्ययं च तत्र श्रीनारायणाभिनन्दितः ॥
गोलोकस्याथ सम्प्राप्तिर्भवत्यस्य महात्मनः ।
भवत्यसौ हि तत्राथ श्रीकृष्णेनानुमोदितः ॥
ततः साकेतलोकस्य प्राप्नोत्ययं च गोपुरम् ।
ब्रह्मविष्णुमहेशाद्यैर्देवैः स्तुतं च वन्दितम् ।
वेदैर्निवेदितञ्चाथ श्रीरामेणाणिनन्दितम् ।
समृद्धं परमं दीप्तं सर्वथा चाथ सर्वदा ॥
परात्परमयोध्यं च सुषमासागरं शुभम् ।
अयोध्यानगरं चासौ सम्प्राप्नोति ततः परम् ।

इत्यादिवर्णनतोऽवसीयते यदनन्तस्वरूपः सर्वेश्वरश्रीरामस्तत्स्वरूपश्चेति । विस्तरस्तु तत्तद्ग्रन्थव्याख्यानतोऽवमन्तव्यस्तत्रैव ग्रन्थस्वारस्यं प्रष्फुटिष्यतीति दिक् । एवं ब्रह्माण्डस्य दिग्दर्शनं कृत्वा तदन्तर्गताकाशादिभूतानां कार्यं निरुच्यते । अवकाशहेतुराकाशः । अवकाश एवाकाशस्यमुख्यं कार्यम् । इदमुपलक्षणं स्थितिगमनादीनामपि तथा चोक्तम्-

अस्य देहस्यनियतो लाघवं सौक्ष्म्यमेव च ।

शब्दः श्रोत्रे बलं ब्रह्मन्शुषिरत्वं विविक्तता । इत्यादि । तथा सर्वदावहनादिहेतुर्वायुः । अर्थात् वहनादिकार्यं वायोरिति, इदमुपलक्षणम् चेष्टादीनाम् । तथा चोक्तम्-वायोः स्पर्शेन्द्रियं चैव कार्कश्यं स्पर्शमेव च । व्यूहनं वहनं देहः स्वीकरोति सदुत्तम ? इति । तथा पचनप्रकाशादिकार्यं तेजसः । तत्र पचनं पाकः

इदमुपलक्षणम्, औष्ण्यप्रकाशादीनाम् । तथा चोक्तम्-

'अग्नेरौष्ण्यं प्रकाशत्वं रूपेन्द्रियममर्षणम् ।
संतापशौर्यं तैक्ष्याणि वर्णवचनशक्तिताम् ॥

आदत्ते सहसादेहः साहसं च द्विजोत्तम ? इत्यादि । तथा सेचनचूर्णादीनां पिण्डीकरणकार्यं जलस्य । सेचनादिकं शैत्यमार्दवादीनामप्युपलक्षणम्-तथोक्तं 'अद्भ्यः शैत्यं समादत्ते स्निब्धत्वं रसनेन्द्रियम् । प्रसादं मार्दवं पिण्डीकरणं क्लेदनं च वै' इत्यादि । तथा गन्धवत्वादिकं पृथिव्याः कार्यं तथोक्तम्-

भूमेर्गन्धगुणं घ्राणं परिमाणं तु धारणम् ।
मूर्तिमत्वं सहिष्णुत्वं स्वीकरोति यथातथम् ॥

इदानिमेकादशानां चक्षुरादीन्द्रियाणां स्वरूपं कार्यञ्चदर्श्यते, तत्र श्रोत्रत्वक् चक्षुरसनघ्राणादिलक्षणज्ञानेन्द्रियाणां शब्दादिविषयग्रहणं कार्यम् । तत्र श्रोत्रेन्द्रियेणाकाशकार्येण शब्दशब्दत्वतदभावादीनाञ्चग्रहणं भवति । त्वगिन्द्रियेण सकलशरीरादिगतस्पर्शस्पर्शत्वतदभावादीनां तदाश्रयस्यापि ग्रहणं भवति । चक्षुरिन्द्रियेण तैजसेन रूपरूपत्वतदभावतदाश्रयस्य च ग्रहणं भवति । रसनेद्रियेणापिरसरसत्वतदभावस्य च ग्रहणं जायते । तथा घ्राणेन्द्रियेण-पार्थिवेन गन्धगन्धत्वतदभावस्य च ग्रहणम् भवति । तदुक्तम्-

त्वक् चक्षुर्नासिकाजिह्वा श्रोत्रमत्र तु पञ्चमम् ।
शब्दादीनामवाप्त्यर्थं बुद्धियुक्तानि वै द्विजे'ति ॥

वाक्पाणिपादपायूपस्थाख्यानां पञ्चकर्मेन्द्रियाणाञ्च वचनादानविहरणविसर्गानन्दाख्या विषया-अर्थात् वचनादीनां ग्रहणं यथा संख्यं वागादिकर्मेन्द्रियेण भवतीति । तदुक्तम्-

'पायूपस्थौ करौ पादौ वाक् च मैत्रेय पञ्चमी ।
विसर्गशिल्पगत्युक्तिकर्म तेषां च कथ्यते ॥ इति

समासेन ज्ञानेन्द्रियकर्मेन्द्रियाणां कार्याणि प्रदर्शितानि । तथैवाकाशादि पञ्चभूतानां पञ्चप्रतिनियतगुणा इमे भवन्ति शब्दादिकाः, तथाहि-आकाशस्य शब्दो नियतगुणो वायोः स्पर्शः तेजसो रूपं जलस्य रसस्तथा पृथिव्याः गन्धः । एतेषां गुणानां विनिमयोऽन्यभूतगुणस्य भूतान्तरे समावेशः । तत्र भूतस्य



भूतान्तरेण मिस्त्रीकरणवत् एकगुणस्य गुणान्तरेण मिस्त्रीकरणं न विनिमयः किन्तु आकाशगुणस्य शब्दस्यान्यत्रगमनेन सर्वगुणानां सर्वत्र समावेश एव । यद्वा एकस्य दानेनान्यस्यादानम् । आकाशगुणस्य वायौ गमनं वायुगुणस्य स्पर्शादेस्तदन्यस्मिन् भूतान्तरे गमनम् । एतेन स्वगुणस्यान्यत्रावस्थानम् । अन्य गुणस्य स्वस्मिन्स्वीकरणमिति । अर्थात् वायुः स्वगुणं पृथिव्यै ददाति तथा पृथिव्या गुणं गन्धं स्वस्मिन्नाददातीति ।

योयमाकाशादिगुणानां मिस्त्रीकरणं तत्पञ्चीकरणेन ज्ञातव्यम् । अर्थात् 'अथ द्रव्याश्रिताज्ञेया निर्गुणा निष्क्रिया गुणाः' इतिनियमेन द्रव्याश्रितत्वं गुणानां धर्मः स च स्वाश्रयीभूतद्रव्यं विहायान्यत्र नगच्छतीति द्वयोर्द्रव्ययोर्मिश्रीकरणमेव गुणानां विनिमयः । पञ्चीकरणं तु-

'द्विधाविधाय चैकैकं चतुर्धा प्रथमं पुनः ।
स्व स्वेतर द्वितीयांशैर्योजनात्पञ्चपञ्चते ॥
एवं जातेषु भूतानि प्रत्येकन्तु द्विधा ततः ।
चतुर्धा भिन्नमेकैकमर्द्धमर्धं तथा स्थितम् ॥
व्योम्नोर्द्धभागाश्चत्वारो वायुतेजः पयोभुवाम् ।
अर्द्धानि यानि वायोस्तु व्योमतेजः पयोभुवाम् ॥

इत्यादिपौराणिकवचनानुसारेण पञ्चाकाशादिभूतानि प्रत्येकं प्रथमं द्विभागं कृत्वा पुनरेकार्द्धभागस्य चत्वारोभागाः कर्तव्याः । तान् स्वेतरचतुर्षु योजयेत् तथा आकाशं द्विधा विधाय अर्द्धभाग एव अत्र स्थापनीयः । ततो द्वितीयभागस्य पुनश्चतुर्विभागः कर्तव्यः । तत्रैकैकस्याकाशव्यतिरिक्तवायुतेजजलपृथिवीसुयोजयेत् । एवं स्थिते आकाशस्थार्द्धोभागः तथा तस्मिन्नाकाशार्धभागे वायुप्रभृत्यंशानां योजनात्, आकाशार्धभागे इतरभागविशिष्टे अयमाकाश इति व्यवहारोभूयस्त्वात् । एवमेव पवनादारभ्य पृथिव्यन्तभूतेषु पञ्चीकरणम् । ततश्चपृथिवीगुणस्याकाशवायुतेजोजलेषु गमनमेव, जलभागस्य पृथिवीतेजोवायुगगनेषु योजनेन जलगुणस्य सर्वत्र सत्वं जायते एवमेव वायुतेजसामपि प्रथमं द्विधाभागं कृत्वा एकार्धभागमन्यत्र स्थापयेत् । अन्यार्धभागस्य चतुर्भागं कृत्वा एकैकभागस्य स्वार्धभागेतरभागेषु योजनात् पञ्चीकरणम् । ननु सर्वस्य

भूतस्य सर्वत्र सद्भावात्, अयमाकाशोऽयं वायुरित्यादिक्रमेण भूतानां स्वातन्त्र्य व्यवहारः कथं स्यादितिचेत् ? स्वांशाधिक्यात् । अर्थात् यद्यपि सर्वभूतस्य भागः सर्वभूतेषु विद्यते तथापि यत्र यस्याधिक्यं तत्र तस्य स्वातन्त्र्यव्यपदेशः । यथा आकाशार्द्धभागे पवनादीनां चतुर्थ एवभागः स चाल्पीयान् । आधिक्यं तु तत्र गगनस्य एवं पवनादिष्वपि ततः यत्र यस्य स्वांशाधिक्यं तत्र तस्य मुख्योव्यवहारः । अतएवोक्तं ब्रह्मसूत्रे 'वैशेष्यात्तु तद्वादस्तद्वाद' इति । तदत्राहुः श्री-रघुवरीयवृत्तिकारा जगद्विजयिनो महामहोपाध्यायजगद्गुरुश्रीरामानन्दाचार्य श्रीरघुवराचार्याः-'ननु यदि त्रिवृत्कृतामेव परिमाणोऽन्नमशितमित्यादावुच्यते तर्हि कथमन्नाद्येकरूपेणाभिधानमित्याशङ्कायामुच्यते वैश्येष्यादिति । तु शब्दः शङ्कामुच्छिनत्ति । भूम्यम्बुतेजसां त्रिवृत्कृतत्वेपिस्वभागाधिक्यादन्नादिवाद इति न दोषः' (२।४।२१) पञ्चीकरणप्रक्रियायाः समादरात् आकाशे-'नीलं नभः' इति प्रतीतिरपि न सर्वथाऽकस्मिकी पृथिवीरूपस्य नैलस्याकाशेऽपि सद्भावेन तद्बलादेव तथा जायमानाप्रतीतिर्नैनिरालम्बनेति । नच समीपे आकाशे कस्यापि नीलादिरूपस्य चक्षुषाऽग्रहणात् दूरस्थे एव गगने नीलप्रतीतिर्जायते इति सा भ्रान्तिरूपैवेति वाच्यं पञ्चीकरणप्रक्रियाया तथा संभवात् । तदुक्तम्-

'यदग्नेरोहितं रूपं तेजसस्तदधामपि ।
रूपं शुक्लं पृथिव्याश्चेत्यग्नेरेवत्रिरूपता ॥'

'श्रुत्यैवदर्शितातस्मात्सर्वे सर्वत्रसंगता ।'

तथैवाहुः श्रीश्रियानन्दाचार्याः-श्रौतप्रमेयचन्द्रिकायाम् 'पञ्चीकृतेषु भूतेषु यदर्धं तस्य नामतत्' इति ।

अथैवं यदि पञ्चीकरणं श्रुतिसिद्धतयाप्रामाणिकं तदा छान्दोग्यीय षष्ठेऽध्याये पञ्चीकरणं बिहाय त्रिवृत्करणं कथमुक्तमिति चेदयमाशयः । छान्दोग्ये तेजोजलपृथिवीनामेवोत्पत्तिक्रमः प्रतिपादितः । परन्तु तैत्तिरीयादिश्रुत्यन्तर प्रतिपादितगगनपवनयोरव्यक्तमहदहङ्कारादीनामुत्पत्तिर्न प्रतिपादिता । अतश्च छान्दोग्ये तेजोवन्नानां कथनं यथा तत्वान्तराणामुपलक्षणम्, तथैव तत्रत्य त्रिवृत्करणकथनं पञ्चीकरणस्याप्युपलक्षणम् । अन्यथा पञ्चीकरणप्रतिपादकप्रकरणान्तरस्योन्मत्तप्रलापितस्यादितिभाव्यम्, उपलक्षणार्थताऽवश्यं वक्तव्या ततो न कस्य



चित्केनचिद्विरोध आपद्यते इति । एवं पञ्चीकरणप्रक्रियया सर्वभूतानामाकाशादिपृथिव्यन्तानां परस्परं मिश्रितत्वात्, शब्दस्पर्शादिपञ्चगुणानामपि सर्वभूतेषु सर्वस्य सद्भावोऽवाधित एव ।

अथ पञ्चीकरणेनाकाशादिप्रत्येकभूतगुणस्यभूतान्तरेपि सद्भावः कथितस्तदापृथिव्यां शब्दादारभ्य गन्धान्तपञ्चगुणाः । जले चत्वार एव तेजसि त्रयः । वायौद्वाविव । आकाशे एक एवेति विभागः कथम्-अर्थात् पूर्वापेक्षया उत्तरोत्तरे गुणाधिक्यं कथमिति चेत् ? श्रृणु-पूर्वपूर्वतन्मात्राविशिष्टैरेव तदुत्तरोत्तरतन्मात्राभिः स्वस्वगुणस्य समुत्पादनेन पूर्वापेक्षयोत्तरस्मिन् गुणाधिक्यं भवति । अर्थात् एकेन शब्दतन्मात्रेणाकाशस्योत्पत्तिर्भवतीति कारणगुणस्य कार्येऽनुगमनादाकाशे एक एव शब्दो गुणः । एवं शब्दतन्मात्रेणावृत्तं स्पर्शतन्मात्रं वायुमुत्पादयति । तस्मात् वायोः कारणद्वयजन्यत्वेन वायौ स्पर्शः स्वकीयः आकाशसम्बन्धीशब्दश्चेति द्वौ गुणौ । एवं शब्दतन्मात्रस्पर्शतन्मात्राभ्यामावृततेजोमात्रेण तेजस उत्पत्तिरिति तत्र रूपस्पर्शशब्दास्त्रयो गुणा आविर्भवन्ति । तत्र शब्दस्पर्शौ कारणगुणाभ्यामागतौ रूपं च स्वकीयम् एवमाकाशवायुतन्मात्राभ्यामावृततेजस्तन्मात्रायुतरसतन्मात्रेण जलस्योत्पत्तिर्भवतीति जले शब्दस्पर्शरूपरसश्चेति चत्वारोगुणाः समुपलभ्यन्ते । एवं पूर्वपूर्वतन्मात्रत्रयविशिष्टे रसतन्मात्रावृतेन गन्धतन्मात्रेण पृथिव्या उत्पत्तिरिति तत्र शब्दादिगन्धान्ताः पञ्चगुणा आविर्भवन्ति । एतावता यथा एकैकगुणाश्रयाणामाकाशादीनां गुणमिश्रीकरणं पञ्चीकरणबलादायातं तथैवोत्तरोत्तरभूतेषु गुणानामाधिक्यं स्वस्वतन्मात्रस्य विद्यमानावरणप्रयुक्तमेवेति विज्ञेयम् । तथोक्तम्-

'आकाशं शब्दमात्रन्तु स्पर्शमात्रं समाविशत् ।
रूपं तथैवाविशतः शब्दस्पर्शगुणावुभौ ॥
शब्दः स्पर्शं च रूपं च रसमात्रं समाविशत् ।
तस्माच्चतुर्गुणह्यापो विशेषाश्चेन्द्रियग्रहाः' इति ।

卐 अथकालनिरूपणम् 卐

एतावता प्रबन्धेन समासतः शुद्धसत्वमिश्रितसत्वरूपप्रकृतिप्राकृतपदार्थस्वरूपनिरूपणं कृतम् । तत्र स्वभावत एव जिज्ञासा जागर्त्ति यत् गुणत्रयरहि

तोऽपि कश्चिदचित्पदार्थोऽस्ति न वा ? अस्ति चेत्तदा स कीदृशः कीदृक् स्वभावकः किं लक्षणश्चेति संशयनिराकरणाय्याचिद्विशेषः गुणत्रयरहितं 'गुणत्रयेण शून्योऽथ कालो नित्यो विभुर्जडः । भूतादिव्यवहाराणां हेतुत्वेन मतो बुधैः' इत्यादिरूपेणाचार्यप्रदर्शितं समासतोनिरुच्यते-सत्वरजस्तम इत्याकारकगुणत्रयरहितः कालः स च अव्यक्ताख्यप्रकृतेस्तज्जनितस्य महदारभ्य महाभूतान्तपर्यन्तप्राकृतपदार्थस्य परिणामेऽसाधारणं कारणं भवति। यत् किमपि कार्यं तत् स्वकीयोपादानपरमेश्वरव्यतिरिक्तकारणकं भवत्येव।तत्रोपादानं सजातीयं विजातीयञ्च चेतनः कर्तृकारणं ताभ्यामतिरिक्तः कालोऽपि सहकारिकारणम् भवति बभूव भविष्यतीति कालत्रये एव सर्वस्य जन्यस्योत्पत्तेः । तदुक्तम्-

'न सोस्ति प्रत्ययो लोके यत्र कालो नभासते ।'
अनुविद्धमिवज्ञानं सर्वं कालेन भासते ॥'

इति नियमात् भवति, बभूव, भविष्यतीत्यादिप्रतीत्या प्रकृत्याद्यतिरिक्तस्य सर्वजनकस्य कालस्य सिद्धिः। एतादृशो गुणत्रयरहितः प्रकृतिप्राकृतादिपरिणामहेतुः तथा कलाकाष्ठामूर्हूतादारभ्य परार्द्धपर्यन्तभेदेनानेकविधोनित्यो न तु प्राकृतिकपदार्थवदनित्यः । परमेश्वरस्य लीलोपकरणसहकारितया तथा तस्य शरीरंचान्तर्यामिप्रकरणकथितप्रकारेण, परमेश्वरो हि स्वकीयसङ्कल्पेन प्रकृतिंप्राकृतांश्चपरिणामयन् तदवस्थाविशेषानपेक्ष्य तत्तकाले समागतान् प्रकृतिप्राकृतान् परिणामयतीति तेषां परिणामे गुणत्रयरहितकालस्यावश्यापेक्षणात् । तदुक्तम्-

'प्रकृतिं पुरुषं चैव प्रविश्यात्मेच्छयाहरिः ।
क्षोभयामास संप्राप्ते सर्गकाले व्ययाव्ययौ ॥'

इत्यादिपुराणवचनोक्तप्रकारेण जगदुत्पादनावसरे तत्तत्कलाकाष्ठादिकालागमनं प्रतीक्ष्य तत्तत्पदार्थं तत्तत्काले समुत्पादयति । एवमेव सर्वेश्वरश्रीरामस्तत्तत्कालागमनमपेक्ष्यसृष्टपदार्थानां तत्तत्काले स्थितिं विनाशंच करोति । एवं प्रकारेण भागवान् सहकारिणं कालं प्रधानीकृत्य सर्गस्थित्यादिसकलव्यापारं निर्वर्तयतीत्यत्रलीलाविभूतौ सर्वोऽपिपदार्थः कालकृतपरिणामक एव भवति । एतेषां प्रकृतिप्राकृतपदार्थीयपरिणामानामसाधारणकारणत्वमन्वयव्यतिरेकाभ्यां लौकिकपदार्थवदेवनिर्धारणीयम् । अतः कालस्य प्रकृतिप्राकृतपदार्थपरिणामकारणत्वं प्रत्यक्षादिनाऽगमप्रमाणेन च सिद्धंभवति । एतादृशोऽयमखण्डः कालो न पदार्थपरिणामहेतुः काष्ठादिभेदादनेकविधो भूत्वातत्तत्कालिकं तत्तत्पदार्थपरिणामं करोतीति काष्ठाकलादिरूपेण परिणतः पदार्थपरिणामहेतुर्भवति ।



तथोक्तम्-

काष्ठापञ्चदशाख्याता निमेषा मुनिसत्तम ।
काष्ठात्रिंशत्कलात्रिंशत्कला मौहुर्त्तिकोऽवधिः ॥
तावत्संख्यैरहोरात्रं मुहुर्तैर्मानुषं स्मृतम् ।
अहोरात्राणि तावत् त्रिमासः पक्षद्वयात्मकः ॥
तैः षड्भिरयनं वर्षं द्वेऽयने दक्षिणोत्तरे ।
अयनं दक्षिणं रात्रिर्देवानामुत्तरं दिवा ॥
दिव्यैर्वर्षसहस्रैस्तु कृतत्रेतादिसंज्ञितम् ।
चतुर्युगं द्वादशभिस्तद्विभागं निबोध मे ॥
चत्वारि त्रीणि द्वे चैकं कृतादिषु यथाक्रमम् ।
द्विव्याब्दानां सहस्राणि युगेस्वाहुः पुराविदः ॥
तत्प्रमाणैः शतैः सन्ध्या पूर्वा तत्र विधीयते ।
संध्यांशकस्तुतत्तुल्यो युगस्यानन्तरो हि सः ॥
संध्या संध्यांशयोरन्तर्यः कालोमुनिसत्तम ।
युगाख्यः स च विज्ञेयः कृतत्रेतादिसंज्ञितः ॥

इत्यारभ्य-'एवं तु ब्रह्मणो वर्षमेवं वर्षसतं तु तत् ।
शतं हि तस्य वर्षाणां परमायुर्महात्मनः ॥

एतदन्तप्रकरणेन महाकालस्य परिणामविशेषाः खण्डकालामहामुनिना श्रीपराशरेण तत्तत्प्रकरणेव्याख्याताः । तथा चाहुराचार्याः श्रीश्रियानन्दाचार्याः-

'खण्डाखण्डादिभेदेन विज्ञैःकालो द्विधामतः ।
खण्डकालो निमेषादिरखण्डकालजश्च सः ॥

इत्यारभ्य-

एकैकस्य मनो कालश्चतुर्युगैकसप्ततिः ।
ब्रह्मा च ब्रह्ममानेन शतं वर्षाणि जीवति ॥'

इत्यन्तद्वादशश्लोकेनेति विशेषार्थिभिस्तत्रैवावलोकनीयः । श्रीपराशर प्रोक्तकालविशेषरूपोऽर्थः केचनेत्थं प्रवदन्ति तथाहि-पञ्चदशनिमेषाः एका-काष्ठा । निमेषश्च नेत्रपक्ष्मणोर्निपतनम्, तत् यदा पञ्चदशवारं जायते तदा निमेष समूहः काष्ठा, त्रिंशत्काष्ठाया एका कला भवति, त्रिंशत्कलाया एकं मुहूर्तम्, त्रिंशत्मुहूर्त्तानि एको मानुषो दिवसः पञ्चदशा दिवसा एकः पक्षः तथैव पञ्चदश दिवसात्मकोऽपरः पक्षः पक्षद्वयमेको मानुषो मासः, मासद्वयादेक ऋतुः स च ऋतुर्वसंतग्रीष्मवर्षाशरद्धेमन्तशिशिरभेदात् षड्विधः । त्रयऋतवोऽयनम्, द्वे अयने मानुषः संवत्सरः । एवं मानुषसंवत्सराः षष्ठ्यधिकत्रिंशत्संख्यका एको देवसंवत्सरः, द्वादशसहस्त्राणि देवसंवत्सराश्चतुर्युगम्, तत्रकृतयुगस्य त्रीणिस हस्त्राणि, द्वापरयुगस्य द्वे सहस्त्रे प्रमाणम्, कलियुगस्यैकं सहस्त्रं सर्वत्रैकैकस्य युगसहस्त्रस्य ह्रासो जायते, कृतयुगस्य पूर्वा संध्या चत्वारिशतानि, अर्थाच्चतुः शतसंख्यका पूर्वसंध्या, अपरापि संध्या चतुः शतप्रमाणैव संकलनयाऽष्टौ श तानि संध्याकालः । त्रेतायुगस्य पूर्वसंध्या त्रीणि शतानि, तथाऽपरापि संध्या त्रिशतात्मिकैव, द्वापरस्य पूर्वसंध्याद्विशतप्रमाणा, अपरापि संध्या द्विशतप्रमा णैव, कालियुगस्य पूर्वसंध्या शतैकम्, अपरापि संध्या शतमात्रप्रमाणिकैव । संध्याप्रमाणेपि कृतयुगादिसर्वत्र शतशतवर्षस्य ह्रासो ज्ञातव्यः । यावत् त्रिस हस्त्राणि यत्र दिनकालस्तावत् शतं तत्र कृतयुगादौसंध्या कालो ज्ञातव्यः । दशांश न्यूनादिवसस्य रात्रेश्चसंध्येति । एवं किञ्चिदधिकान्येकसप्ततिचतुर्युगान्येकं मन्वन्तरम् । एवं चतुर्दशमन्वन्तराणि चतुर्युगसहस्त्रं चतुर्मुखसत्यलोकाधिपति ब्रह्मण एकं दिनम् । तदुक्तम्-'चतुर्युगसहस्त्राणि ब्रह्मणो दिनमुच्यते' ब्रह्मणो रात्रिरपि दिवसकालतुल्यैव, रात्रिकालस्य दिवसकालतुल्यदर्शनात् । एवं दिनपक्षमासऋत्वयनसंवत्सरक्रमेण शतान्तपरिगणितसंवत्सराब्रह्मण आयुः । तदायुषः परमिति नाम, तत्र पञ्चाशत् संवत्सराः परार्द्धमिति कथ्यते, द्विपरार्द्ध चतुर्मुखब्रह्मणोऽधिकारकालस्तदनन्तरं स परिसमाप्तेऽधिकारे स्वर्लोकवासिभिः सहैव साकेतमाविशति, तदुक्तम्-

ब्रह्मणा सह ते सर्वे सं प्राप्ते प्रतिसंचरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥



तथा-द्वि परार्द्धेत्वतिक्रान्ते ब्रह्मणः परमेष्ठिनः ।
तदा प्रकृतयः सप्त कल्पन्ते प्रलयाय हि ॥ इति ॥

अनेन प्रकारेण महाकालस्य निमेषकाष्ठाकलादिभेदप्रकारः प्रतिपादितः शास्त्रे वेदोवृङ्हणके एतादृशानेकभेदभिन्नः कालः प्रकृतिप्राकृतिकसकलजग तः परिणमने कारणमिति । स चायं महाकालो नित्योऽर्थात् ध्वंसप्रागभावप्रति योगिभिन्नः । तस्य न प्रागभावो भवति, उत्पत्तिविरहात् न वा ध्वंसोऽनन्तत्वात् । तथा चाद्यन्तरहितो नित्यः । तदुक्तम्-'अनादिर्भगवान् कालो नान्तोऽस्य द्विज वि द्यते' इति । सचायमुक्तलक्षणको महाकालः परमेश्वरश्रीरामस्य लीलोपकरणीभू तः । यथा प्रकृत्यादयः पदार्थाः परमेश्वरलीलायामुपकरणरूपास्तथा कालोपि तदुपकरण एव । यद्यपि प्रकृतिपुरुषकालास्त्रयोपि पारमेश्वरीलीलायामुपक रणानीति समानम् । तथापि प्रकृतिपुरुषौ सर्गकर्मतयालीलोपकरणतामासा दयतः कालस्तु तत्र सहकारिकारणतया उपकरणमित्येतावानेव भेदः । परमेश्वरो हि सृष्ट्याद्युत्पादनसमये सत्यसंकल्पेन सम्पादितकालनियमानुसारेण तत्तत्का लागमनं प्रतीक्ष्य सर्गं करोति । अयं कालोपि यद्यपि महाकालत्वरूपेणपरिणा मविषयो न भवति किन्तु नित्यस्तथापि निमेषकाष्ठादिरूपेण परिणामवान् भवन् सर्गकर्मतया समुत्पद्यते । इत्थं परमेश्वरस्य लीलोपकणरूपो भवति कालः । तस्य पारमेश्वरलीलोपकरणत्वकथनात्, कालकृतपरिणामवत्तया पारमेश्वरीय लीलाविभूतौकालस्य विनियोगो भवति । यद्यपि 'न कालस्तत्रवै प्रभुः' इत्यादि वचनेन भगवल्लीलाविभूतौ तदुपयोगो विनिवारित इति तत्कथनं कथं सङ्गच्छ ते ? इतिशङ्कास्पदं तथापि उपर्युक्तवचनस्य पारमेश्वरभोगविभूतौ कालनैरपेक्ष्य कथने एव तात्पर्यवत्वेनाविरोधात् । अर्थात्-भगवतो भोगविभूतौ कालस्या पेक्षा न भवति, लीलाविभूतौ तु तदपेक्षा विद्यते एवेति विषयभेदेन परिहारसु लभत्वादिति ज्ञेयम् ।

सचायमेतादृशः कालः परमेश्वरशरीररूपम् । यथा प्रकृतिपुरुषौ परमेश्व रस्या पृथक्विशेषणतया तस्यशरीररूपौ तथा कालोऽपि तदपृथक् सिद्धविशे षणतया तद्रूपमेव । तथोक्तं महर्षिपराशरेण,

परस्य ब्रह्मणोरूपं पुरुषः प्रथमं द्विज ? ।

व्यक्ताव्यक्ते तथैवान्ये रूपे कालस्तथापरः ॥
प्रधानपुरुषव्यक्तकालास्तु प्रविभागशः ।
रूपाणि स्थितिसर्गान्तव्यक्तिसद्भावहेतवः ॥
विष्णोः स्वरूपात्परतोदिते द्वे रूपे प्रधानं पुरुषश्च विप्र ? ।
तस्यैवतेऽन्येन मिथो वियुक्ते रूपान्तरं तद् द्विजकालसंज्ञम्' इत्यादि ॥

केनचिच्चेतनेन सह कस्यचिद् द्रव्यस्य विद्यमानपृथक्सिद्ध्यनर्हाधाराधेयभावोनियम्यनियन्तृभावः शेषशेषिभावश्चेत्यादिकं प्रत्येकं शरीरलक्षणं भवति । नतु चेष्टाश्रयत्वादिकं तन्त्रान्तरसिद्धमिहशरीरत्वं विवक्षितम् । एवञ्चकालनामकचिदतिरिक्ताचिद्द्रव्यस्य परमेश्वरेण सहोपर्युक्तसम्बन्धत्रयविद्यमानतयाऽयं तस्य शरीरं भवत्येवेतिभावः । एतादृशप्रकृतिप्राकृतिकपदार्थोत्पत्तौ सहकारिकारणमहाकालस्यापि परमेश्वरशरीरत्वकथनेन 'सकलप्राकृतिकजगदुत्पत्तौ सहकारिकारणं परमेश्वर एव' इति पूर्वाचार्यवचनविरोधो न भवति । यतः कालस्य कालशरीरकपरमेश्वरस्यापिकारणत्वोपपत्तेः । शरीरवाचकपदानां शरीरिपर्यन्तबोधकत्वनियमस्य वेदादिस्थले दर्शनात् तदाहुः श्रीसम्प्रदायाचार्याः 'ब्रह्मशब्दश्चमहापुरुषादिपदवेदनीयनिरस्ताखिलदोषमनवधिकातिशयासंख्येय-कल्याणगुणगणं भगवन्तं श्रीराममेवाह समान्यवाचकानां पदानां विशेषार्थे पर्यवसानात्'( आनन्दभाष्यम् १।१।१ ) इति । तदेवं समासतो त्रिविधस्य शुद्धसत्वमिश्रसत्वकालरूपस्याचित्पदार्थस्य निरूपणंकृतम् । तेषु शुद्धसत्वस्य परमेश्वरभोगोपकरणत्वरूपगौरवयुक्तत्वात्सर्वप्रथमं निर्वचनमनन्तरं परमेश्वरलीलायांप्रधानीभूतं मिश्रसत्वम् । तदनन्तरञ्चप्रधानस्य परिणामसहकारितया लीलोपकरणभूतं गुणत्रयरहितकालतत्वस्य निर्वचनं कृतमित्येवं रूपेण निर्वचनस्य पूर्वापरविभागबीजं ज्ञातव्यम् ।

एवं यथोक्तक्रमेणाचित् त्रिकनिरूपणप्रसङ्गे प्रकृतिप्राकृतपदार्थानां परिणामहेतुत्वं काल इति वदन् पदार्थपरिणाम एव कालस्य ग्रयोजनमाविष्कृतम् । परन्तु शुद्धाचित् मिश्रिताचितोर्विनियोगः-कार्यं तु नप्रतिपादितमिति तदप्यवश्यं प्रतिपादनीयमिति प्रतिपाद्यते । तथाहि शुद्धचिन्मिश्रिताचित्पदार्थाः परमेश्वरस्य तथा जीवात्मनश्च भोग्यभोगोपकरणभोगभूमिश्च भ



वति । कश्चित् कुत्रचिद्भोगस्य कर्मभवति, कश्चित् कुत्रचित् भोगस्योपकरणमर्थात् कारणं, कश्चित् कुत्रचित् भोगस्याधिकरणं भवति । अचेतनाः खलुपदार्थाः परार्थत्वात् तेषां भोक्तारश्चेतना एव भवन्ति । चेतनाश्च परमेश्वरो जीवात्मानश्च । तस्मादेतयोरुभयोरपि अचिद्रूपं भोग्यादिकमिति । तत्र लीलाविभूतौ तदुभययोरचिद्द्रव्यं भोग्यादिकं भवति । तत्रापि लीलाविभूतौ परमेश्वरस्य लीलारसस्यैव प्रधानतया भोगरसस्याल्पीयस्त्वादतोमिश्रसत्वस्य विनियोगो बद्धचेतने एव भवति । भोगविभूतौ परमेश्वरकृतमिश्रसत्वविनियोगस्तत्र तेन भोग्यानि, लोकोत्तराप्राकृतशब्दस्पर्शरूपरसादीनि भोगोपकरणानि विलक्षणदिव्यमाल्यादीनि, छत्रचामरादिकानि करणानि, भोगस्थानानि श्रीसाकेताधिकरणकाप्राकृतरत्नमयमण्डपप्रासादादिकानि वस्तूनि ।

तत्र लीलाविभूतौ शब्दस्पर्शरूपरसगन्धाख्याविषया एव भोग्यपदेन गृहीता भवन्ति । ननूभयविभूतेरपिभोग्यशब्दादीनामुपादानं भवतु इति चेन्न भोगोपकरणे प्रधानस्याकथनात् । भोगस्थानेषु वैषम्यान्नतथाकथितम् अर्थात् चेतनानां भोगः सुखदुःखान्यतरसाक्षात्काररूप एव । तादृशसाक्षात्कारीयज्ञानविषयत्वात् शब्दस्पर्शादयो विषया भोग्यपदवाच्याः तादृशसाक्षात्कारिज्ञानानां जनकत्वेन करणत्वाच्चक्षुरादिकरणान्येव भोगोपकरणानि । एवं यत्राधिकरणे स्थितस्य देवदत्तादिचेतनस्य सुखदुःखान्यतरसाक्षात्कारो भवति तादृशस्थान-विशेष एव भोगस्थानशब्दस्य वाच्योऽर्थो भवति । तत्र विषया भोग्या विषयाः चक्षुरादिकानि करणानि भोगस्थानानि भूरादिकानि चतुर्दशभुवनानि समस्तप्राणिदेहाश्च । अर्थात्-देवमनुष्यतिर्यक् स्थावरशरीराणि भोगस्थानानीति । यदा खलु 'सर्वेषामवताराणामवतारी रघूत्तमः' इत्यागमोक्तदिशा भगवानयोध्याधिपतिः सर्वावतारी लीलाविभूतौ भक्तानुग्रहायावतरति, अर्चावतारादिषु तदा भोग्यभोगोपकरणादीनि विनियुज्यमानानि भवन्तीति ज्ञातव्यम् ।

एतावता प्रकरणेन शुद्धसत्वमिश्रसत्वकालात्मकाचित् त्रयस्य संक्षेपतो यथाशास्त्रं निरूपणमभवत् । तेषां परिमाणं तु तत्र पूर्वाचितः शुद्धसत्वस्याधः सीमा विद्यते कुतः ? मिश्रसत्वावधिकत्वात् । उपरि परितश्च शुद्धसत्वस्य सीमा नास्ति, तत्र सर्वत्रसत्वात् । मध्यमाचितो मिश्रसत्वस्यो परिसीमा विद्यते शुद्ध

सत्वावधित्वात् परितोऽधश्च मिश्रसत्वस्य सीमा नास्ति अवधेरभावात् । कालस्तु कस्यचिदप्यवच्छेदकस्याभावेन सर्वत्र लीलाविभूतौभोगविभूतौ च समान रूपेणावतिष्ठते । तस्य सीमानास्तीति सिद्धान्तमतम् ।

अन्ये तु भोगविभूतौ अर्थात् परमपदे कालो नित्यःकुतः ? तदुत्पादक शास्त्रवचनस्याभावात् । लीलाविभूतौ तु कालस्यानित्यत्वम् । भगपद्व्यूह कायप्रतिपादनावसरेऽनिरुद्धात्मकव्यूहेन कालो निर्वर्तित इति प्रतिपादनात् । प्रकृतेः सर्गो यथा महदादिरूपेण परिणामस्तथैव कालसृष्टिरपि निमेषकलाकाष्ठा दिरूपेण परिणाम इति । सततपरिणामशालिन्याः प्रकृतेर्महदहङ्कारादिरूपप- रिणामोऽनवरतंभवति तद्वत् सततपरिणामशीलस्य कालस्यापि निमेषकला काष्ठादिलक्षणं परिणामः सततं जायते महदहङ्कारादिवत् । निमेषकलाकाष्ठा दिवत्कालस्यापि उत्पादविनाशवत्वेनात्र अर्थात् लीलाविभूतौ मिश्रसत्ववत् का लोप्यनित्य एव अनित्यताप्रयोजकप्रतिक्षणपरिणामस्योभयत्रापि समानत्वेन युक्तेस्तुल्यत्वात् । अर्थात् लीलाविभूतौ मिश्रसत्वं महदादिस्थूलात्मकविकारेण सततं परिणमते इति सततपरिणामशालित्वान् मिश्रसत्वस्यानित्यत्वं सर्वानु मतम् । तथैव लीलाविभूतौ कालोपि निमेषकलाकाष्ठादिस्थलरूपेण सर्वथैव परिणमतेऽन्यथा दिनादिव्यवहारस्य निर्मूलकत्वप्रसंगादिति सततपरिणाम वत्वात् मिश्रसत्ववत् कालोपि लीलाविभूतावुत्पादविनाशशालिभवन् अनित्य एव । परमपदे भोगविभूतौ निमेषादिपरिणामविशेषप्रयुक्तोत्पत्यादिव्यवहारा- भावात् कालो नित्य इति व्यवहारः ।

बौद्धमतानुयायिनस्तु नातिरिक्तं कालात्मकं द्रव्यं मन्यन्ते । तथाहि रूप स्पर्शादिरहिततया न प्रत्यक्षेण तद्ग्रहणं जायते । नवाऽनुमानादिना अव्यभिचरित हेतोरभावात् । नाप्यागमेन कालनिर्णायकागमानुपलब्धेस्तस्मादतिरिक्तः कालो नास्ति । तथा कालस्वीकारेऽपि उपाधिविशेषमादायैव क्षणदिनादिव्यवहारो जा यते इतिकालिकतत्तत्पदार्थेनैवकालव्यवहारसंभवात् घटपदाद्युपाधिव्यतिरिक्तं कालो नास्तीति । तन्नयुक्तम्-अद्यजातवस्तुनः वर्षाद्यनन्तरं क्षणादिपरिणामपूर्व कविनाशादिदर्शनेन प्रात्यक्षिकेणैव कालसद्भावः सिद्ध्यतीति कालः स्वीक्रि यते । तथा अस्ति कालः अद्यदृष्टस्य बहुकालानन्तरं विनाशादिव्यवहारस्यान्यथा



सिद्ध्यसंभवात् कालास्तिता, अयमतीतोऽस्ति गत इत्यादिव्यवहारान्यथानु पपत्त्या अतिरिक्तः कालपदार्थः । किञ्च यः कालं नातिरिक्तं स्वीकरोति स बौद्धानुयायी 'भगवान् तथागतो भूत्वा गतस्तस्यानेके संवत्सराव्यतीताः' इति कथं व्यपदिष्यति तस्मादुपरिदर्शितव्यवहारान्यथाऽनुपपत्तिरेवकालसद्भावे प्रमा णम् । अन्यथाऽनुपपत्तिश्च सर्वप्रमाणापेक्षया बलवती तदुक्तम्-

'अन्यथाऽनुपपत्तिश्चेदस्ति वस्तु प्रसाधिका ।
पिनष्टि दृष्टवैमत्यं सैव सर्वबलाधिका ॥
वाच्यान्यथोपपत्तिर्वा त्याज्यो वादृष्टताग्रहः ।
न ह्येकत्रसमावेश्याश्छायातपवदेतयो, रिति ॥

परिगणितपदार्थातिरिक्तकालसद्भावे आगमोऽपि प्रमाणं तद्बलेन का लसिद्धिः । तथाहि-

'कालः सृजति भूतानि कालः संहरते प्रजाः ।
कालः सुप्तेषु जागर्ति कालो हि दुरतिक्रमः ॥
'कलाकाष्ठामुहूर्ताश्चाहोरात्राश्च सर्वशः ।

तथा-'मधुश्च माधवश्चवासंतिक ऋतू शुक्रश्च शुचिश्च ग्रीष्मा ऋतू' इति श्रुतिप्रतिपादिताः । एवं विष्णुपुराणेऽपि-'कालस्वरूपं विष्णोश्च यन्मयोक्तं तवानघ ? इत्यादिप्रकरणे विस्तरेण प्रतिपादितं काले प्रमाणम् । एवमेतदन्ये पुराणे इतिहासादौ पूर्वाचार्यप्रबन्धे च द्रष्टव्यम् । कालविशेषनिर्णयायैव ज्योतिः शास्त्रस्य निर्माणमभूत् । यत्र स्वाध्यायाध्ययनोपवीतपाणिग्रहणचूडाकरणादि शुभविषयाणां कर्तव्यतायाः प्रतिपादनमस्ति । ज्योतिःशास्त्रेऽमुकसमयेऽध्ययनं कर्तव्यम्-श्रावण्यां प्रौष्ठपद्यां च उपाकृत्य यथाविधि । युक्तश्छंदांस्यधीयीत विप्रो मासार्द्धपञ्चमान् । 'वसन्ते' कृष्णकेशो ब्राह्मणोऽग्नीनादधीत' दर्शपौर्णमासाभ्यां यजेत' ऋतौ भार्यामुपेयात् 'श्राद्धे त्रीणि पवित्राणि दौहित्रः कुतुपस्तिलाः' तत्र कुतुपोनाम दिवासु मध्याह्ने उनद्वादशवादनादारभ्य सार्द्धद्वादशवादनपर्यन्तः कालविशेष एव । एवं क्रमेण संपूर्णज्योतिः शास्त्रे तत्तत्कालविशेषस्यैव प्रति पादनं कृतम् । अतएव ज्योतिः शास्त्रवेदस्य चक्षुरितिगीयते, तत्र यत् सूर्योपरा गादिकममुकवर्षेऽमुकमासेऽमुकपक्षेऽमुकतिथावमुकदिने एतावत्समये भविष्य

तीति प्रतिपाद्यते तत्सर्वं यथावत् प्रत्यक्षेण परिगृह्यते हालिकैरपि तस्मात् तादृश शास्त्रप्रामाण्यस्यापामरसाधारणलोकेनापि अवगमात् । तादृशगृहीतप्रमाणेन ज्योतिः शास्त्रेण कालनिश्चयः कृत इतिप्रत्यक्षागमादिप्रमाणबलसिद्धकालस्य नाभावः शक्यते ज्ञातुमिति कालविचारः संक्षेपः ।

卐 अथ दिग्विमर्शः 卐

पदार्थव्याप्य नवद्रव्यनिरूपणावसरे यथा पृथिव्यादिकं स्वतन्त्रं द्रव्यं तथैव दिशोऽपि स्वातंत्र्येण द्रव्यत्वं साधयन्ति वैशेषिकादयः परन्तु विशिष्टाद्वैत सिद्धान्ते दिशोऽतिरिक्तत्वं नानुमन्यते इति तन्निराकरणमेवात्रविवक्षितम्, तत्र- 'प्राच्यादिव्यवहारहेतुर्दिगितिदिशोर्लक्षणम्, यथा-अतीतादिव्यवहारहेतुः काल इति काललक्षणं कृत्वा तृतीयमचिद्द्रव्यं काल इति कालनिश्चयःकृतो लक्षण प्रमाणबलात् तथैव 'प्राच्यादिव्यवहारहेतुर्दिक्' तत्र यस्य पुरुषस्य उदयाचल संनिहिता या दिक् सा तस्य प्राची । अस्ताचलसंनिहिता या दिक् यस्य तस्य सा प्रतीची । तथा सुमेरुसंनिहिता या दिक् सा तस्योदीची एवं सुमेरुव्यवहिता या दिक् सा तस्यावाची । मेरुः कनकाचलसर्वस्योत्तरे एव भवति न पूर्वे न वा परे दक्षिणे वा ततश्च प्राच्यादिव्यवहारहेतुतया सिद्धदिशो द्रव्यत्वमुदाहरन्ति वैशेषिकाः । एवं विलक्षणं नवमं द्रव्यमिति केचन वदन्ति । तदुक्तम्-'पृथिव्यप्तेजो वायुराकाशकालदिगात्ममनांसि' इति । तथा-'भूमिरापोज्योतिरनिलो नभः कालस्तथादिशः । आत्मामन इति प्राहुर्द्रव्याणि नव इति तद्विदः । अत्र ज्ञानाधिक रणमात्मा सुखादिसमवायिकारणमात्मेति, आत्मलक्षणं तेन जीवेशयोरुभयो रपिसंग्रहो नेश्वरस्य द्रव्यान्तरत्वापत्तिरिति वैराजः । तन्मतं न सम्यक्, अनेकका रणैराकाशादेवान्तर्भावसंभवेन द्रव्यान्तरस्वीकारे प्रमाणाभावादिति । तदयमर्थः, यत्र चत्वारः चतुर्दिक्षुव्यवस्थितास्तत्र तेषां तथावस्थितानां योमध्यप्रदेशः स देश विशेष एकस्य पूर्वादिग् परस्य पश्चिमा तदपरस्योत्तरा तदपरस्यदक्षिणेति । एतन्मूलद्रव्यमन्तरेण प्रतियोग्यनुगुणं काल्पनिकं चतुर्णां मध्ये विद्यमानपृथि व्यादयोद्रव्यत्वान्नैवं विप्रतिपत्तिविषया भवन्ति तत्रादित्यस्योदयप्रदेशः प्राची अस्तमय प्रदेशः प्रतीचीति स्वीक्रियते, स च मेरोः परितो भिन्नो भवति । अत एव चतुर्षु पार्श्वेषु स्थितानां मेरुः सर्वदोत्तरे एव भवति । तदुक्तम्-



नैवास्तमनमर्कस्य नोदयः सर्वदासतः ।
उदयास्तमनाख्यं हि दर्शनादर्शनं रवेः ।
सर्वेषां द्वीपवर्षाणां मेरुरुत्तरतः स्थितः ॥ इति ॥

इत्येवं विष्णुपुराणादौ । तदत्र प्रकरणे पण्डितसम्राट्स्वामीश्रीवैष्णवाचार्याः प्रमेयपपिशोधिनीनामकस्वप्रबन्धे-'दिशोव्यावृत्तये श्रेष्ठा विशेषकल्पना न च । दिङ्नामकं पृथग्यस्मान्नित्यं द्रव्यं न विद्यते । प्राच्यादिव्यवहारोहि तद्विषया च शेमुषी । आकाशेनैव संसिद्ध्येत् सूर्योदयाद्युपाधिभिः । इत्यारभ्य 'दिङ्नामकं पृथक् तस्मान्नित्यं द्रव्यं न सिद्ध्यति' इत्याद्यन्तग्रन्थेन दिङ्निरासं कुर्वन्त्यतो नातिरिक्तदिगितिदिक् ।

卐 अथाकाशविमर्शः 卐

अथ शब्दसमवायिकारणत्वमाकाशलक्षणम् । यथा गन्धादिसमवायिकारणतया परिगणितभूतव्यतिरिक्तस्वतन्त्रपृथिव्यादिपदार्थस्य सिद्धिर्भवति, तथैव शब्दसमवायिकारणतयापरिगणितपृथिव्यादिभूतव्यतिरिक्तस्य शब्दकारणस्याकाशस्यापिसिद्धिर्भवतीति नैयायिकाः । सिद्धान्तवादिनस्तु अहङ्कारोपादानकतया यथा पृथिव्यादिभूतानां सिद्धिर्भवति, तथैवाहङ्कारोपादानकतया रूप स्पर्शादिमतो गगनस्यापि सिद्धिर्भवत्येवेति । परन्तु बौद्धपण्डितो नानुमन्यते पृथिव्यादिव्यतिरिक्तभावरूपमाकाशम् स तु आव्रियतेऽनेनेति करणव्युत्पत्या स्थूलपदार्था एवावरणपदवाच्याः यथा पृथिव्यादिकाः तेषामावरणरूपाणां पृथिव्यादीनामभाव एव अर्थादावरणाभाव एवाकाशो न तु पृथिव्यादिवत् भावरूपः भावरूपतयाऽननुभवात् । प्रत्युत पृथिव्याद्यभावरूपतयैव निर्वाहसंभवेन भावरूप तया तत्स्वीकारस्यायोग्यत्वात् । यथा मीमांसको गन्धाभावादिकमतिरिक्तं नाभ्युपैति किन्तु जलादिरूपगन्धाभावाधिकरणरूपमेव मन्यते तथैवायमपि आकाशं भावरूपं नाभ्युपैति किन्तु आवरकपृथिव्यादिस्थूलपदार्थस्याभावरूपं मत्वा आकाशमभावेऽन्तर्भावयति । तन्मतं न समीचीनम् । यथारूपस्पर्शादिमतः पृथिव्यादिकाः पदार्थाभावरूपतया स्वीकृता भवन्ति, अन्यथा भावात्मकरूपाधिकरण तयाप्रतीत्यभावप्रसङ्गात् । तथैवाकाशोऽपिभावरूपतयैवानुभूयते । अर्थात्-भाव रूपतयास्वीकृतपृथिव्यादिवत् पृथिव्यां घटः पटः इत्यादिवत् । अत्राकाशे शब्दः

पतति पतत्री पतति, इतिश्येनादिपतनदेशतयाऽकाशस्यापिभावरूपतयाभावात्, आवरणाभावरूपत्वकथनमयुक्तम् । तस्मादावरणाभावात्मकाभावरूपो नाकाशः किन्तु श्येनादिपतनादिकरणतया प्रतीयमानत्वात् भावरूप एव । यतो भाव एव कस्यचिदधिकरणं न तुच्छरूपोऽभावः । तस्याधिकरणरूपत्वेनाप्रतीयमानत्वात् । अधिकरणत्वादिकं भावत्वव्याप्तो धर्मः स आकाशे समुपलभ्यमानो बलादाकाशभावत्वं साधयति । व्याप्यसत्वस्य व्यापकसत्वगमकत्वात्, धूमसत्वस्य वह्निसत्वानुमापकवत् । तस्मादाकाशो नावरणपृथिव्यादिस्थूलाभावरूपः, किन्तु पृथिव्यादिवदेवभावरूपतयाऽनुभूयमानत्वाद्भावात्मकोऽतिरिक्त एव । तदत्र 'त्रयाणां निरुपाख्यत्वमिति सौगतः समयस्तत्र द्वयोर्निरुपाख्यत्वं पूर्वं निराकृतमिदानीमाकाशस्य तुच्छत्वमिति मतमाक्षिप्यते । नह्याकाशस्यनिरुपाख्यत्वम् । पृथिव्यादिवदाकाशस्याप्यवाधितप्रतीतिसिद्धत्वात् । अत्र श्येनः पततीत्यादिप्रतीतिरेवाकाशस्य वस्तु सत्वे मानम्' इत्यादिकं 'आकाशे चाविशेषात्' ( २।२।२४ ) इतिसूत्रस्थानन्दभाष्यं तद्विवरणञ्चालोडनीयं विशेषार्थिभिः । स च शब्दाधिकरणमिति ।

अन्ये केचन नैयायिकाः शब्दात्मकगुणाधिकरणतयापृथिव्याद्यतिरिक्तं नवमं द्रव्यं साधयन्ति, तथाहि-शब्दो विशेषगुणो बहिरिन्द्रियग्राह्यत्वात् रूपवदित्यनुमानेन गुणत्वं प्रसाध्य शब्दो द्रव्यसमवेतो गुणत्वात् संयोगवदित्यनुमानेन द्रव्यसमवेत्वं साधयित्वा शब्दो न स्पर्शवद्विशेषगुणोऽग्निसंयोगासमवायिकारणकत्वेन्यकारणगुणपूर्वकत्वात् सुखादिवत् । शब्दो न कालदिक् मनसां गुणो विशेषगुणत्वात्सुखवत् । नात्मविशेषगुणो वहिरिन्द्रियग्राह्यत्वात् रूपादिवत् । ततश्चाष्टद्रव्यातिरिक्तं नवमद्रव्यं गगननामकं शब्दाधिकरणं सिद्ध्यति । तदाकाशं नित्यमुत्पादविनाशरहितत्वात् । विभुसर्वमूर्तसंयोगित्वादात्मवत् । एकम् नानेकमनेकत्वे प्रमाणाभावात् । एकाकाशस्वीकारेणैव सर्वव्यवहारोपपत्त्याऽनेकत्वकल्पने गौरवात् । घटाकाशादिप्रतीतिस्तु, औपाधिकी । तथा तदेवाकाशं कर्णशष्कुल्याद्युपाधिभेदादनेकं श्रौत्रात्मकं शब्दग्राहकमपि भवति । अनेन प्रकारेणाकाशस्य सत्वं प्रसाध्य तस्य नित्यत्वं निरवयवत्वं व्यापकत्वं प्रत्यक्षाग्राह्यत्वं च स्वीकुर्वन्ति । परन्तु तदेतन्मतं वेदान्तसिद्धान्तविरोधादुपेक्ष्यम् ।



तथाहि-'यतो वा इमानि भूतानि जायन्ते' 'तस्माद्वा एतस्मादात्मनः आकाशः' इत्यादिश्रुत्या 'आकाशमुत्पद्यते सृष्ट्यादौ प्रलीयते च प्रलये, भावकार्यत्वादित्यनुमानादिनाचाकाशस्योत्पादविनाशरूपत्वप्रतिपादनात् उत्पादविनाशरहितत्वरूपनित्यत्वस्वीकारे श्रुत्यादिविरुद्धत्वात् । नापि आकाशस्य निरवयवत्वम् 'हेतुमदनित्यमव्यापिसक्रियमनेकमाश्रितं लिङ्गम् । सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम्' इत्यादिनाऽहङ्कारादिना जायमानव्यक्तपदार्थमात्रस्य सावयवत्वकथनेन निरवयवत्वस्यासिद्धत्वात् । किञ्चाकाशस्य भूताद्यहङ्कारजन्यत्वस्य श्रुतियुक्त्यादिसिद्धतया कुतश्चिज्जायमानस्य घटादेर्यथा नित्यत्वं निरवयवत्वं न भवति किन्तु अनित्यत्वं सावयवत्वमेव, तथैवाहङ्कारजन्यतयाऽकाशस्यापि नित्यत्वनिरवयवत्वेनैव भवतोऽपि तु जन्यत्वसावयवत्वे एव । तस्मादाकाशस्य नित्यत्वनिरवयवत्वकथनं वैदिकसिद्धान्तविरुद्धम् । तथाकाशस्य विभूत्ववादोऽपि निरालम्वन एव । तथाहि-यद्याकाशसर्वथा व्यापको भवेत्तदा सर्वं कार्यं व्याप्नुयात्, परन्तु नैवं संभवति महत्वाहङ्कारादीनामव्यापनात् । अर्थात्-कार्यं कारणेन व्याप्तं भवतीति नियमो न तु कार्यं कदाचिदपि कारणं व्याप्नोति । तदिह आकाशस्याहङ्कारजन्यतया अहङ्कारो महत्तत्वादिकमाकाशस्य कारणमिति स्वकारणमहङ्कारं तत्कारणमहत्तत्वं चाकाशो न व्याप्नोति, तस्मात्सर्वान्तर्गतताहङ्काराव्यापित्वेनाकाशस्य सर्वव्यापित्वरूपव्यापकत्वविभुत्वमसिद्धमेव । तथा इन्द्रियाग्राह्यत्वरूपमप्रत्यक्षत्वमप्याकाशस्यानुपपन्नमेव, तथाहि यथा रूपस्पर्शादिमत्तया पृथिव्यादिकं चक्षुरादिना गृह्यमाणं प्रत्यक्षविषयतां नातिक्रामति । तथा आकाशस्यापि रूपस्पर्शादिमत्वेन प्रत्यक्षयोग्यतया प्रत्यक्षविषयत्वं भवत्येवेत्यप्रत्यक्षत्वकथनमसङ्गतम् । ननु रूपस्पर्शादिमत्तयानिणीर्तं पृथिव्यादिकमिति तस्य प्रत्यक्षत्वकथनं सयुक्तिकं परन्त्वाकाशे रूपादिमत्वं न दृश्यते । न च दूरे नीलं नभः इति प्रतीतिर्भवतीति वाच्यम् तादृशप्रतीतेर्भ्रान्तत्वात् । अन्यथा यथा दूरस्थाकाशे नैल्यप्रतीतिर्भवति तथा समीपस्थेऽप्याकाशे रूपादिकं गृहीतं स्यात् नत्वेवं कस्यापि भवति । तस्माद्रूपादिमत्वं न नभसः प्रत्यक्षविषयतेति चेदत्रोच्यते, सत्यं भवत्पक्षं यथाकथञ्चिदनुमन्यामहे, परन्तु शास्त्रे त्रिवृत्करणस्य पञ्चीकरणोपलक्षणतया पञ्चीकरणप्रक्रियया आकाशादावपि रूपादिमत्वश्रुत्या

प्रतिपादनेन श्रुतिप्रमाणकैराकाशेऽपिरूपादिमत्वस्वीकृत्याकाशस्य प्रत्यक्षविषयतां स्वीक्रियते । तस्मादाकाशो नाप्रत्यक्ष इति दिक् ।

卐 अथ वायुविमर्शः 卐

तत्र रूपरहितत्वे सति स्पर्शवत्वं, रूपरहितत्वविशिष्टस्पर्शवत्त्वं पवनस्य सर्वदेरणस्वभावस्य लक्षणम् । अत्र विशेषणस्यानुपादाने केवलविशेषस्य स्पर्शमात्रस्य पृथिव्यादित्रिष्वपि सद्भावेन लक्षणगमनादतिप्रसक्तिः विशेष्यस्यानुपादाने केवलरूपराहित्यलक्षणलक्षणस्य मुक्तादावपि गतत्वेन तत्रातिव्याप्तिरतो विशेष्यविशेषणयोरुभयोरप्युपादानम् । स्पर्शश्च वायवीयोऽनुष्णाशीत एव । स चायं वायुर्नित्यानित्यभेदेन द्विधा व्यवस्थितः । तत्र परमाणुलक्षणवायुं विहायद्व्यणुकादिमहावायुपर्यन्तोऽनित्यः । परमाणुरूपोनित्यः । शरीरान्तरसंचरणशीलो वायुः प्राणवायुः स च यावदायुर्धनञ्जयेन सह शरीरेऽवतिष्ठते । सचायं रूपाभावान्न प्रत्यक्षोऽपितु विलक्षणशब्दस्पर्शधृतिकम्पादिभिरनुमीयमानः प्राचीनमते बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षं प्रतिरूपस्यकारणत्वात् । न च यथा बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षं प्रतिरूपस्य कारणता तथैव स्पर्शस्यापिकारणत्वसम्भवेन स्पर्शद्वारा वायोरपि प्रत्यक्षता स्यादितिवाच्यम्, बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षं प्रति स्वातन्त्र्येण रूपस्पर्शयोः पार्थक्येन कारणता स्वीकारे गौरवात्, तस्मात् बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे लाघवादेकस्यैव रूपस्यकारणत्वम् । रूपविरहप्रयुक्तवायोर्नप्रत्यक्षत्वमपित्वनुमेयत्वमेवेति वैशेषिकमतं तन्न युक्तम् रूपादिबाह्यविषयग्राहकचक्षुराद्यनेकज्ञानेन्द्रियमध्ये यस्यकस्यापि ज्ञानेन्द्रियस्य विषयत्वसम्भवे-अर्थात् एकेनापि ज्ञानेन्द्रियेण त्वगाख्येन वायोः प्रत्यक्षसम्भवेन त्वगिन्द्रियेणज्ञानस्यापि वायोरप्रत्यक्षत्वकथनमयुक्तत्वात् । न च रूपाभावान्न प्रत्यक्षतेतिवाच्यम्-रूपस्पर्शोभययोरपि कारणत्वात् । अर्थात्-द्रव्यचाक्षुषं प्रतिरूपस्यद्रव्यस्पर्शनं प्रतिस्पर्शस्य पृथक् कारणत्वस्यावश्यकतया त्वगिन्द्रियेण वायोरपिप्रत्यक्षसम्भवात् । न च रूपकारणत्वे लाघवमितिवाच्यम् तदा उद्भूतस्पर्श एवलाघवेन कारणं भवतु । अर्थात् बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे लाघवादुद्भूतस्पर्शएव कारणं भवतु । न च तर्हि उद्भूतस्पर्शाभावात् प्रभायाः प्रत्यक्षता न स्यादितिवाच्यम्, इष्टत्वात् । तस्मात् प्रभां पश्यतीतिवद् वायुं स्पृशामीति प्रत्ययसम्भवेन



वायोस्त्वगिन्द्रियग्राह्यतया प्रत्यक्षत्वमेव ततश्च रूपाभावापराधमात्रेण वायोरप्रत्यक्षत्वकथनं न युक्तम् । किञ्च विशिष्टाद्वैतवेदान्तसिद्धान्ते पञ्चीकरणप्रक्रियास्वीकारेण सर्वभूतेषु सर्वभूतगुणस्य सद्भावान्नकोपि दोषः । न च सर्वत्र सर्वगुणे विद्यमाने इयं पृथिवी अयं वायुरयमाकाश इति तत्तत्प्राधान्येन तस्य तस्य व्यवहारः कथं स्यादितिवाच्यम्, 'पञ्चीकृतेषु भूतेषु यदर्धं तस्य नाम तत्' इति श्रौतप्रमेयचन्द्रिकोक्तदिशा यत्र यदंशस्याधिक्यं तत्र तद्व्यवहारः, विस्तरस्तु 'वैशेष्यात्तु तद्वादः (२।४२१) इतिसूत्रीयश्रीरघुवरीयवृत्तिविवरणे जगद्गुरु श्रीरामानन्दाचार्यश्रीरामप्रपन्नाचार्ययोगीन्द्रकृतेऽनुसन्धेय इतिदिक् ।

卐 अथ तेजो विमर्शः 卐

तेजसस्तु उष्णस्पर्शवत्वं लक्षणं तद्द्विविधम् । नित्यमनित्यम् । परमाणुरूपं नित्यं तदन्यदनित्यमवयवी च । तत्रानित्यं भौमदिव्यमौदर्याकारजभेदाच्चतुर्विधम् । अनेकविधमित्यर्थः । तत्र पार्थिवमात्रेन्धनकं तेजोभौमं यथा काष्ठादिस्थं प्रदीपादिकं च, अविन्धनं दिव्यं विद्युतादिसूर्यचन्द्रादिकञ्च । पार्थिवं जलेन्धन जनितमुदराश्रितं तेज औदर्यम् जाठराग्निः । निरिन्धनं तेज आकरजम् सुवर्णरत्नादिकम् । तेजस इन्द्रियं चक्षुस्तच्च रूपग्राहकं रूपवद्द्रव्यग्राहकं रूपसहकारात्संयोगविभागादिग्राहकञ्च, अथ सुवर्णरत्नादिद्रव्यस्य तैजसत्वं कथम् प्रत्युत गुरुत्वपीतादिरूपदर्शनेन पार्थिवत्वमेव काष्ठाद्याश्रितवैश्वानरादितिचेत्, इत्थम् । सुवर्णं तैजसम् । असति, प्रतिबन्धकेऽत्यन्तानलसंयोगेऽपि अनुच्छिद्यमानजन्य-द्रव्यत्वाज्जलमध्यस्थपीतपटवदित्यनुमानेन सुवर्णरत्नादिषु तैजसत्वं सिद्ध्यति । गुरुत्वपीतिमवर्णादिप्रतिभानं तु पृथिव्यादिद्रव्यान्तरसंपर्कादेवौपाधिकं न तु स्वाभाविकम् । चन्द्रादिषु तदन्तर्गतशीतस्पर्शेनाभिभवान्नौष्णत्वग्रहः । एवं च-क्षुस्तैजसं परकीयस्पर्शाद्यव्यञ्जकत्वे सति परकीयरूपव्यञ्जकत्वात् प्रदीपादिवत् । यथा प्रदीपदृष्टान्ते यथोक्तहेतु सत्वाद् यथोक्तं साध्यं तथा प्रकृतेऽपि । एतेषु तेजसु आदित्यचन्द्रादितेजः स्थिरमधिककालावस्थानात् । प्रदीपादितेजोऽस्थिरं सूर्यादितेजोपेक्षयाऽल्पकालभावित्वात् । अनित्यत्वं तु सर्वत्र समानमेव । तथा तेजसो रूपं रक्तः स्पर्शश्चौष्ण्यम्, जलस्य रूपं शुक्लं स्पर्शश्च शीतलक्षणकः । रसो मधुरमात्रम् । न च कालिन्दीजले नैल्यमुपलभ्यत इति वाच्यं तस्याश्र

योपाधिकत्वात्, अतएव विक्षेपे वियति शुक्लत्वस्यैवानुभवः । निदाघे जले उष्णता प्रतीतिरप्यौपाधिकी एव जले पाकाभावात् । यद्यपि नारिकेल जम्बीरादिरसे रसान्तरमप्युपलभ्यते तत्रापि औपाधिकत्वमेव स्वभावतस्तु मधुर एव । अतएव आम्लादिफलभक्षणानन्तरहरीतकिभक्षणानन्तरं वा जलपाने माधुर्यमेवानुभूयते तस्य । भूमौ सप्तविधम् रूपं षड्विधोरसः । स्पर्शस्तु पृथिव्या वायोश्चानुष्णाशीत एवेति । भूतेषु विशेषरूपेण ज्ञातव्योंऽशः प्रदर्शितोऽतिसमासेन प्रपञ्चस्तु तत्तदाकरग्रन्थतोऽनुसन्धेयः ।

एवं व्याससमासतोऽचिद्द्रव्यनिरूपणं कृत्वा संक्षेपेण तदुपसंह्रियते-तथा हि प्रथमतः ज्ञानरहितं विकारि अचिदित्यचितः सामान्यतो लक्षणं निरुच्य, तदनन्तरं शुद्धचिन्मिश्रादिभेदेन त्रिविधमिति भेदत्रयं दर्शयित्वा तत उद्देशक्रमेण प्रथमं शुद्धसत्वप्रकारं प्रदर्श्यानन्तरं मिश्रसत्वस्याचित्प्रकारं तस्य चतुर्विंशति भेदान् कथयित्वा, तत्र प्रथमतत्वं तस्यावस्थाविशेषान् ततस्तत्वान्तरोत्पत्तेः कारणं गुणानां वैषम्यं तेषां गुणानां स्वरूपलक्षणादिकं तदविनाभूतत्वं तदवस्थाभेदेनोद्भूतत्वानोद्भूतत्वे तेषां कार्यज्ञाप्यत्वं गुणवैषम्यप्रयुक्तं महदादि सर्गक्रमं च प्रदर्श्य तदनन्तरमुत्पन्नतत्वसमुदायकार्यब्रह्माण्डस्य । तस्मिन् पिण्डे समष्टिपुरुषस्वकार्यब्रह्मण उत्पत्तिं परमेश्वरस्य समष्टिव्यष्टिपदार्था सद्वारकाद्वारकसर्गप्रकारं च प्रदर्श्य-तदनन्तरं ब्रह्माण्डानामनेकत्वं तद्रचनाक्रमं तेषां परमेश्वरलीलोपकरणत्वं तदुत्पत्तिप्रकारञ्च प्रतिपाद्य तदनन्तरमाकाशादिभूतानां प्रत्येकविनियोग ज्ञानकर्मेन्द्रियाणां मनसश्च वृत्तिभेदमाकाशादीनां शब्दादिप्रतिनियतगुणवत्वं तत् मिश्रीकरणकारणगुणाधिक्यकारणं च प्रतिपाद्य मिश्रसत्वप्रकारविस्तरेणोपपाद्यानन्तरं तत्परिणामहेतुं गुणशून्याचिद्विशेषं कालं संग्रहेण प्रतिपाद्य एतत्पूर्वोक्ताचितो विनियोगप्रकारकमचित् त्रितयस्य परिणामान् प्रदर्श्य एतत् दर्शनैकदेशिनां कालविषयकविप्रतिपत्तिभेदं कथयित्वा तदनन्तरपूर्वोक्त विषये बौद्धादीनां विप्रतिपत्तिस्तस्यायुक्तत्वं च दर्शयित्वा भूतानां लक्षणञ्चोक्तवानिति ।

तदत्रानुसन्धेयाः श्लोकाः-

शुद्धाविशुद्धभिधया द्विविधञ्च सत्वं



कालो मतिर्गतमतेरचितः प्रभेदः ।<br>
साकेतनित्यपरधामपदाभिधेयं<br>
सत्त्वं विशुद्धमजडं प्रकृतेर्विभिन्नम् ॥४॥<br>
नित्याऽकृतिर्गुणवती प्रकृतिः परार्था<br>
तथ्या च मूलमहदादिकभेदभिन्ना ।<br>
भूतादिकव्यवहृते जनको हि कालो<br>
नित्यो विभुर्भुवननाथवपुर्जडश्च ॥५॥<br>
नित्या तथा सविसया जडताविहीना<br>
विभ्वी मतिर्मददया प्रभृतिस्वरूपा ।<br>
प्रामाण्यमत्र सुमतं स्वत एव चास्या<br>
याथार्थ्यकं विषयसत्यतया तथा च ॥६॥

( वेदान्तचिन्तामणौ जगद्गुरुश्रीमङ्गलाचार्यमुनीन्द्राः ) इति ॥६॥

तत्त्वविषयक श्रीसुरसुरानन्दाचार्यजी के प्रश्नों के उत्तर देने के लिये आचार्यप्रवर भगवान् श्रीरामानन्दाचार्यजी कहते हैं कि-हे सुरसुरानन्द ? तुमने जो तत्त्वादि विषयक दश प्रश्नों को पूछा है, उनमें से जो तुम्हारा प्रथम प्रश्न है अर्थात् तत्त्व क्या है ? इत्याकारक प्रश्न है, उसका उत्तर सुनो-तत्त्व को जाननेवाले श्री व्यास-पराशर बोधायन आदि महर्षियों ने ऐसा कहा है अर्थात् तत्त्व तीन प्रकार के होते हैं । अचित्-प्रकृति, चित्-चेतन बद्धादिक जीव समुदाय तथा सर्व जगत् के कारण सर्वशेषी परमेश्वर श्रीरामचन्द्रजी ये तीन प्रकार के तत्व शास्त्रों में श्रीपराशर श्रीव्यासादि के द्वारा प्रतिपादित हुये हैं । उनमें जो प्रथम अचित् पदार्थ है वह नाम भेद से अर्थात् वाचक पद के भेद से नित्य उत्पाद विनाशरहित कहलाती है । अर्थात् परमेश्वर का शेष होने से इसका नाश नहीं होता मात्र आविर्भाव तिरोभाव होता है, तथा इसको अज्ञा-ज्ञानभिन्न कहते हैं, अचेतना कहते हैं, अर्थात् ज्ञान का अधिकरण नहीं है जड़ है, यह प्रकृति पदवाच्य सबका उत्पादक है, अविकृति है विकारदोष रहित है अर्थात् उत्पन्न नहीं होती है, विश्वयोनि है सम्पूर्ण जड जगत् का कारण है, नाना वर्णवाली है अर्थात् शुक्लादिभेद से अनेक प्रकारक सरूप-विरूप कार्यों का उत्पादक है । अजा है जन्मरूपविकार वर्जित है । त्रिगुणसुनिलया-सत्वगुण रजस्तमो

गुण का निदिानस्थान है एवं अव्यक्त है चक्षुरादि इन्द्रियों से ग्राह्य होनेवाली नहीं है, निर्व्यापार है जड होने से स्वतः व्यापार रहित है, परार्थ है जीव के भोगापवर्गरूप कार्य का सम्पादन करनेवाली है। एवं महत्तत्व अहङ्कारादि लक्षण कार्य का सम्पादन करनेवाली है। इसप्रकार तत्त्व घटक प्रथम अचित् पदार्थ का निर्वचन प्राचीनाचार्यों ने किया है ॥६॥

卐 चित्स्वरूपजीवनिरूपणम् 卐

**नित्योऽज्ञश्चेतनोऽजः सततपरवशः सूक्ष्मतोऽत्यन्तसूक्ष्मो**
**भिन्नो बद्धादिभेदैः प्रतिकुणपमसौनैकधासूरिवर्यैः ।**
**श्रीशाक्रान्तालयस्थो निजकृतिफलभुक् तत्सहायोभिमानी'**
**जीवः संप्रोच्यते श्रीरघुपतिसुमते ! तत्त्वजिज्ञासुवेद्यः ॥७॥**

संसारासारतामाकलय्य संसारदुःखाद्विरक्तो-मोक्षकामश्रीसुरसुरानन्दाचार्यः सामान्यतस्तत्त्वज्ञानं मोक्षसाधनमित्युपाश्रुत्य तत्त्वज्ञानायभगवन्तं श्रीरामानन्दाचार्यसमीपमागत्य तस्मै 'किं तत्त्वमित्यादिकं' दशप्रश्नानपृच्छत्। ततो विनयादिपूर्वकसमागतं श्रीसुरसुरानन्दाचार्यं कृपया तत्त्वत्रयमचित् चिदीश्वरात्मकम-वोचत् षष्ठश्लोकेन। ततोऽनेनैवश्लोकेन तत्त्वघटकप्रथमाचित्पदार्थस्याव्यक्तस्य सर्वजडपदार्थकारणस्य संक्षेपविस्तारमवोचत् । अर्थात्-अचित्तत्त्वंनाम ज्ञानरहितसर्वविकारास्पदं यत्तदेव, तत् त्रिविधम् शुद्धमिश्रकालभेदात्। कालश्च सत्वादिगुणत्रयरहितो भगवतो लीलोपकरणरूपः । मिश्रसत्वं गुणवैषम्यप्रयुक्तम-हत्तत्त्वादारभ्यमहाभूतसर्वविकारस्य कारणम् । इत्यादिरूपेणसर्वस्याचित् पदार्थस्य निर्वचनमकरोत् । ततः परमुद्दिष्टावसरप्राप्तचित् पदार्थस्यार्थात् चेतनावतोजीवस्य बद्धमुक्तनित्यादिभेदभिन्नस्य स्वरूपलक्षणभेदादिकञ्चप्र-दर्शयितुम् भगवानानन्दभाष्यकार उपक्रमते-'नित्यो ज्ञश्चेनोऽजः' इत्यादि-

हे श्रीरघुपतिसुमते सुरसुरानन्द ! सूरिवर्यैः तत्त्वज्ञानिश्रेष्ठैः श्रीपराशरादिमुनिभिः, जीवः नित्य उत्पादविनाशरहितत्वात् सर्वदैकरूपः, ज्ञोऽज्ञोवा तत्र ज्ञः इत्यस्य ज्ञानात्मको गुणाधिकरण इत्यर्थः, अज्ञः इत्यस्य च परमेश्वरापेक्ष-याऽल्पज्ञानवान् असर्वज्ञः । चेतनो न न्यायमतवज्जडो जीवः किन्तु चेतनो



ज्ञानस्वरूपः । अजो न कदापि जायते, देवादिभेदेन बहुधाज्ञायमानोपि जन्ममरणादिभावविकारशून्यः । सततपरवशः, सर्वदा परमेश्वरश्रीरामाधीनः, यद्यपि पराधीनत्वं न सुखाय तथापि भगवत् पारतन्त्र्यं कैश्चिद् भाग्यवद्भिरेवप्राप्यते ।

**यत्सद्गुणावलिगृहीतहृदोऽतिधन्याः**
**स्वान्तः सुखाय भजनं परमं गृणानाः ।**
**नादित्सते पदममी खलु मुक्तभोग्यं**
**सोऽन्तः स्फुरत्वविरतं मम राघवाङ्घ्रिः ॥१०॥**
**ध्यानाय नो भवति योऽहतकिल्विषाणां**
**नाभ्यर्चनाय न च वन्दनसंविधायै ।**
**पुण्यात्मना तु सुलभः खलु यस्तदर्थं**
**सोऽन्तः स्फुरत्वविरतं मम राघवाङ्घ्रिः ॥२२॥**

इतिजगद्गुरुश्रीसदानन्दाचार्योक्तेः । सूक्ष्मतोऽत्यन्तसूक्ष्मः=सूक्ष्मेभ्यः सूक्ष्मत्वेनाभिमतश्यामाकाणुपरिमाणादिभ्योऽपि सूक्ष्मो जीवः अन्यथा पुत्तिकाशरीरादौ प्रवेशनिर्गमासंवात् । प्रतिकुणपं=प्रतिशरीरम्, असौ जीवः बद्धादिभेदैर्बद्धमुक्तनित्यमुक्तभेदैर्भिन्नः नैकधा=न एकप्रकारकोऽपित्वनेकोऽन्यथा जननमरणादिव्यवस्थाया विलोपात्। श्रीशाक्रान्तालयस्थः श्रीसीतानाथाक्रान्तषाट्कौशिकादिशरीरे सर्वदावर्तमानः अतएव निजकृतिफलभुक् स्वेनोपार्जितशुभाशुभकर्मफलस्यभोक्ताऽस्वादकः। तत्सहायः भगवतः श्रीसीतानाथस्य शेषत्वेन सहायोऽनुचरो दास इत्यर्थः। अभिमानी संसारदशायामज्ञानावृतत्वेन स्वतन्त्र इतरनिरपेक्ष एव शुभाशुभकर्मणां कर्ताऽहमेवास्मि नान्योमद्भिन्नस्तत्संपादयतीत्याकारकमिथ्याभिमानवान्। 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन् सर्वभूतानि यत्रारूढानि मायया' इतिवचनादीश्वरपरवशत्वश्रवणाज्जीवस्य स्वातन्त्र्यज्ञानं भ्रान्तमेवेतिज्ञेयम्। मोक्षदशायामीश्वराधीनत्वाभिमानवान् वा। तत्त्वजिज्ञासुवेद्यः चिदादिविशिष्टपरमेश्वरज्ञानजिज्ञासुभिर्ज्ञेयः एतादृशो जीवः श्रीव्यासबोधायनादिभिः सम्प्रोच्येते विविच्यते ।

तदत्र 'रघोः कुलेऽखिलंः, राति राजते यो महीस्थितः । स राम इति लोकेषु विद्वद्भिः प्रकटीकृतः ॥ इतिश्रुत्या 'रघुपतिमखिलजीवशरण्यम्' इति

श्रीशुकार्यमतदीपिकायां जगद्गुरुश्रीगङ्गाधराचार्योक्तदिशा सर्वजीवशरण्य सर्वशेषी श्रीरघुपतेश्चरणकमलयोः शोभनाऽनन्यभक्तिरूपामतिर्यस्य तत्सम्बोधने हे श्रीरघुपतिसुमते सुरसुरानन्द ? सूरिवर्य्यैः पण्डितप्रवरैः श्रीपरासरादिप्राचीनमुनिपुङ्गवैरालोडितवेदशास्त्रैः एवं वक्ष्यमाणगुणगणविशिष्टो बद्धमुक्तनित्य सूरिभेदभिन्नो जीव इति कथ्यते । कीदृशगुणगणविशिष्टस्तत्राह 'नित्यं' प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगिरूपः । अत्र विशेष्यमात्रोपादाने विनाशरहिताभावात्मकध्वंसेऽतिव्याप्तिर्यतोध्वंसस्यध्वंसाभावात् । ध्वंसस्यापिध्वंस स्वीकारे प्रतियोगिन उन्मज्जनापत्तेरतो ध्वंसे नित्यत्वापत्तिवारणाय प्रागभावाप्रतियोगित्वमिति विशेषणम् । ततश्च ध्वंसस्य ध्वंसासंभवेऽपि दण्डप्रहारादिना घटध्वंसस्योत्पत्तिमत्वेन प्रागभावप्रतियोगित्वमेवेतिप्रागभावाप्रतियोगित्वरूप विशेषणाभावेनध्वंसेऽतिव्याप्तेरभावात् । विशेषणमात्रस्य लक्षणत्वे प्रागभावेऽतिव्याप्तिर्यतः प्रागभावस्यानादित्वेन तस्य प्रागभावप्रतियोगित्वाभावात् । अतो विशेष्योपादानम् । ततश्चानादित्वेन प्रागभावस्य प्रागभावाप्रतियोत्वेऽपि ध्वंसप्रतोयोगित्वसत्वान्न तत्रातिव्याप्तिः । तत्र प्रागभावस्य भविष्यतीत्यादिप्रतीत्याऽनादित्वेनाजन्यत्वेऽपि प्रतियोग्युत्पत्त्यनन्तरं प्रतियोगिनैवविनाशात् । ततश्च प्रागभावो विनाशित्वादनित्यो ध्वंसस्तु जन्यत्वान्न नित्य इति तदुभयत्राप्यतिव्याप्तिवारकतया विशेषणविशेष्ययोर्ग्रहणमितिसारः । नित्यत्वलक्षणसमन्वयस्तु तत्रैव यत्र तु न जन्यत्वं न वा विनाशित्वं किन्तु सर्वदैकरूपत्वं सनातनत्वमादिमध्यावसानराहित्यं यथा जीवेशादाविति । एतादृशनित्यत्वलक्षण विशिष्टो जीवः सर्वदैकरूपः सनातनोऽनादिमध्यनिधन इत्यस्ति । तथोक्तम्-

'प्रकृतिं पुरुषं चैव विध्यनादी उभावपीति । (गी.१३।२० )

'नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः । (गी.२।२३ )
न जायने म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः ।
अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥ इति च ।

अर्तादत्रप्रथमश्लोकार्धेन प्रकृतिपुरुषयोरनादित्वकथनेन जन्यत्वप्रयुक्तानित्यत्वस्य प्रतिक्षेपः प्रतिपादितो भवति । नैनं छिन्दन्तीत्यादिछेदनं कर्तनं विनाश इति विनाशादिप्रयुक्तानित्यत्वस्य प्रतिक्षेपं दर्शयति । अर्थात् शस्त्रादिना छेदने शरीरावयवविनाशेऽपि निरवयवत्वादात्मविनाशो न भवति । पावकोऽग्निरपि जीवं न दहति यतः सावयववस्तुन एव दहनदर्शनात् । न हि निरवयवः कश्चिद् दह्यते, जलमपि सावयवमेव क्लेदयति नतु निरवयवम् । वायोरपि तथैव स्वभावः सर्वोपि स्व-स्व-स्वभावनियतः । एवं क्रमेणोत्पत्तिविनाशमूलकानित्यत्वमात्मनि प्रतिषिध्य मुखतोऽपि उत्पत्तिविनाशयोरभावं दर्शयति- 'न जायते म्रियते वेत्यादि, अत्र जननमरणयोरभावं प्रदर्श्य भवनानन्तरं पुनर्भवनं निराकरोत् । ततः शरीरविनाशेऽपि विनाशादिकं निषिध्याजादिशब्देन जीवस्य नित्यत्वमुदाहृतस्मृत्या प्रदर्शितम् । तथाहुः श्रीआनन्दभाष्यकाराः प्रकृतश्लोके- प्रकृतिमपरप्रकृतिपदबोध्यां क्षेत्ररूपां पुरुषं प्रकृतेरत्यन्तविलक्षणं परप्रकृतिपद वाच्यमिह क्षेत्रज्ञतयोपदिष्ठमिमावुभावप्यनादी एव विद्धि 'अजामेकां लोहित शुक्लकृष्णाम्' अजोह्येकः 'न जायते म्रियते वा विपश्चित्' इत्यादिश्रुतिभ्यः । ( आ.भा.१३।२० ) अयमात्मा न जायते न कदाचिदप्युत्पद्यते चार्थे वा शब्दो न म्रियते कदाचिदपि मरणं न प्राप्नोति यतो जननमरणे शरीरस्यैव भवतो न तु तदन्तरवस्थितस्यात्मनः नायं भूत्वा भविता वा न भूयोऽयमात्मा सृष्टेः प्राक्काले भूत्वा भूयः प्रलये च न भविता इति न किन्तु भवितैव । ब्रह्मादिशरीरेषु कल्पादाव्युत्पद्यमानेषु प्रलये च प्रनष्टेषु सत्स्वप्ययमात्माऽकृतस्वरूपवितिष्ठतीति एव तात्पर्यम् । तस्मादयमजो जन्मरहितो नित्यो विनाशरहितः शाश्वतो वृद्धिपरिणामविवर्जितः पुराणः सदैकरसः शरीरे हन्यमाने सति न हन्यते । अनेन षड्विकार राहित्यमस्यात्मनः सिद्धं भवतीति फलितम्' ( आ.भा. २।२० ) विस्तरस्त्वन्यत्रावधातव्य इतिदिक् ।

पुनः कीदृशोयं चित्पदार्थो जीवस्तत्राह-'अज्ञः' अल्पज्ञः 'यः सर्वज्ञः स सर्ववित्' इतिवचनसिद्धसर्वज्ञसर्वेश्वरापेक्षयाऽल्पज्ञानवान् । न च नञो निषेधार्थकतया अज्ञपदेन ज्ञानाभाववान् इत्यर्थ एव स्यान्नतु अल्पज्ञानवानित्यर्थ इतिवाच्यम् समासान्तर्गतनञ ईषदर्थबोधकत्वस्यापि दर्शनात् 'अनुदराकन्येतिवत्' अत्र नास्ति उदरं यस्या साऽनुदरा अल्पोदरवतीत्यर्थः सर्वसंमतः । अल्पार्थकत्वस्यापि नञर्थत्वात् तदुक्तं 'तत्सादृश्यमभावत्वं तदन्यत्वं तदल्पता ।

अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः ॥' तदयमर्थः सादृश्याभावान्यत्वाल्पत्वाप्राशस्त्यविरोधाः षट् नञर्था भवन्ति, तत्र न इक्षुरनिक्षुः सरः अत्र सादृश्यं नञोऽर्थः, तथा चेक्षुसदृशं सर इत्यर्थो भवति यत्र सरसि दीर्घत्वं मिष्टजलवत्वं च भवेत्तत्रेति । अघटवद्भूतलमित्यत्र समासान्तर्गतनञोऽत्यन्ताभाव एवार्थो घटाभाववद्भूतलमिति । तथा 'अघटः पट' इत्यत्र घटभिन्नः पटोऽयमर्थो भवति । तथा-'अलवणकं शाकम्' अनुदराकन्येत्यादौ अल्पलवणवत्वमल्पोदरवत्वं चार्थः प्रतीयते नञः । 'अब्राह्मणो वार्धुषिकः' इत्यत्राप्रशस्तो ब्राह्मणोऽब्राह्मणो न तु अत्यन्ताभावादितदनुपयोगात् । न सुरोऽसुर इत्यत्र न सुरभिन्नोऽर्थोऽसुरस्य तथात्वे मनुष्यादीनामप्यसुरत्वप्रसङ्गात्, किन्तु विरोध एव तथा सति राक्षसादेरेवासुरपदेन ग्रहणं भवतीत्यत्र विरोध एवार्थो नञः । तथाच 'अज्ञ' इत्यत्राल्पार्थकमेव नञपदम् । तेन सर्वज्ञसर्वेश्वरश्रीरामापेक्षया जीवोऽल्पज्ञानवा-नित्यर्थः संपद्यते ।

तत्र च श्रुतिरेव प्रमाणं तथा हि-'ज्ञाज्ञौद्वावजावीशानीशौ' ईश्वरजीवौ द्वावपि सर्वज्ञाल्पज्ञौ तौ द्वावपि अजौ उत्पादविनाशरहितौ तेन तौ द्वावपि नित्यौ सर्वदैकरूपौ, तत्रैकः परमेश्वर ईशः, सर्वशक्तिमत्वात्सर्वथासमर्थः स्वेच्छयैव सर्वकार्यं स्वशेषभूताचित् कालसहकारेण तत्तत्काले सर्वं संपादयतीति सर्वथा सर्वदा ईशः, अपरो जीवोऽनीशो न स्वेच्छया सर्वंकरोति कर्मपराधीनत्वात्, यावत्पर्यन्तं जीवः कर्मबन्धनबद्धो भवति तावत् स्वेच्छया न किमपि कर्तुं शक्नोति भगवत्कृपया तत्कृतकर्मबन्धनो यावतांऽशेन कर्मव्यपगतं भवति. तदंशे कर्मबन्धनरहितस्तत्तत्कार्यं भगवत्कृपयैव कुर्वन् अनीश एव सन्तिष्ठते । तदुक्तम्-'अनीशयाशोचति मुह्यमानः' ज्ञानप्रसादात्तु विशुद्धसत्वस्ततः पश्यते निष्कलं ध्यायमान इति । एतावता-परमेश्वरकृपयैव सर्वकार्यकारित्वं जीवस्य सिद्ध्यतीति ध्वनितम् । कुत्रचित् 'नित्योज्ञः' इत्येव पाठः । तत्र जीवो ज्ञः इतिच्छेदे जानातीति ज्ञः । अजडो जडप्रकृत्यादिभिर्भिन्नः । न तु प्रधानादिवत् स्वभाव जडः । एतावता न्यायमतं प्रतिक्षिप्तम् । न्यायमते-मनः संयोगजनितज्ञानवत्वात् जीवचेतन इति कथ्यते, चेतनावत्वाच्चेतन इति तद्व्युत्पत्तेः, न तु स्वरूपश्चेतनः स्वरूपतस्तु काष्ठकुड्यादिवज्जड एव । अतएव-ज्ञानादिनववि



शेषगुणानामत्यन्तोच्छेद एव मोक्ष' इतिमोक्षकाले जडत्वमेवाङ्गीकृतम् । त-दुक्तम्-'चितिमत्वाच्चेतनोऽयं ज्ञानानन्दस्वाभावकः' इति । तत्र अजडो जीव इति जीवेऽजडत्वविशेषणेन स्वभावजडो जीव इति मतं सर्वथा निराकृतमेवा चार्येणेति भाव्यम् । अज्ञ इति प्रथमपक्षे चेतन इत्यस्याजड इत्यर्थः । द्वितीये ज्ञ इति पक्षे तु अनेकभवपरम्परोपार्जितानेकशरीरानुभूतसुखदुःखादिविषयविषयकस्मृत्यादिज्ञानवानयमित्यर्थः चेतनेत्यत्रसंज्ञानार्थकश्चितीसंज्ञाने इति धातोर्नन्द्यादित्वात् ल्युप्रत्यये 'युवोरनाकौ' इति सूत्रेण यु इत्यस्यानादेशे चेतन इति जीव वोधकपदस्य साधुतेति ।

पुनः कीदृशो जीवस्तत्राह-'अजः' इति । न जायते इति अजः, देवादिशरीराणामुत्पादेऽपि स्वरूपतो जन्मविकारभावरहितः, जन्मात्मकभावविकारो मरणादिपञ्चभावविकारान्तराणामप्युपलक्षकस्तेन प्राथमिकजन्मप्रतिषेधे कृते तदन्यभावविकाराणामपि निराकरणं सूचितम् । ततश्च सर्वभावविकाररहितो जीव इत्यजविशेषणेनाभिव्यञ्जितम् । पुनश्च कीदृशो जीवस्तत्राह-'सतत पर-वशः' सदा सर्वथा परमेश्वराधीनो भवन् पराधीनः 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया' इति भगवद्वचनेन परमेश्वराधीनत्वं जीवस्येति दर्शितम् । अर्थात् सततमनवरतं प्रतिक्षणमविच्छेदेन परस्य सर्वजगदुपादानसर्वशेषिणः सर्वान्तर्यामिणः परमात्मनो वशः परमेश्वराधीनः पराधीनत्वादस्वतन्त्र इति यावत् । यदा जीवोनेकभवोपार्जितसुकृतपरिपाकवशाद्भगवद्दास्यं भगवत्पराधीनतां च लभते ततः सर्वकर्मपुञ्जान् मोक्षप्रतिबन्धकान् परमेश्वरकृपयानिरस्य साकेताख्यदिव्यश्रीरामधामं प्राप्यकृतकृत्यो भवतीति भगवद्दास्य तदधीनत्वयोर्माहात्म्यम् ।

यद्यपि पारतन्त्र्यं सर्वदुःखनिदानम् । तदुक्तम्-'सर्वं परवशं दुःखं सर्वमात्मवशं सुखम् । सेवाश्ववृत्तिराख्याता तस्मात्तां परिवर्जयेत्' इत्यादिना पराधीनत्वसेवयो निषेधदर्शनात् । तथापि 'सेवया धनमिच्छद्भिः सेवकैस्तस्य यत् कृतम् । स्वातन्त्र्यं यच्छरीरस्य मूढैस्तदपिहारितम्' इत्यादिना धनाद्यभिलाषया क्रियमाणपरमेश्वरातिरिक्तसेवाया एव निराकरणमितिध्येयम् । एवम्-'सेवाश्ववृत्तिराख्याता' इत्यादिवचनमपि, असेव्यसेवाभिप्रायकम् अर्थात् असेव्यस्यसे

वाश्ववृत्तिरिति सा परित्याज्या न तु भगवत्सेवा निरादरणीया भवन्ति । परमेश्वर श्रीसीतानाथसेवापराङ्मुखा वहवो दुःखभाजस्तत् सेवानुरक्तास्तु ऐहिकपारलौकिकविलक्षणसुखभाजोभवन्तीति शास्त्रमर्यादा 'करोमि सीतापतिपाददासतां नमामि सीतापतिपादपङ्कजम् । पठामि सीतापति काव्यसंततिं जपामि सीतापति मन्त्रभूपतिम् ॥ (अनन्यतावेदनम्) 'अपि चेत्सुदूराचारो भजते मामनन्यभाक् । साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥ क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति । कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति । (गीता ९-३०।३१) इत्याद्युक्तेः । प्रकृतशास्त्रतत्त्वन्तु महामहोपाध्याय जगद्गुरुश्रीरामानन्दाचार्यश्री रघुवराचार्यकृतार्थचन्द्रिकातोऽनुसन्धेयः । सर्वपदार्थचेतनवर्जितत्रिगुणात्मकतया यदेवैकत्र दुःखजनकं तदेव तदन्यस्य तस्यापि कालान्तरे सुखजनकं जायते, यथा कण्टकं मनुष्यस्य दुःखजनकं भवदपि तदेवोष्ट्रस्य सुखाय भवति, तथा मनुष्यादिपारतन्त्र्यं दुःखाय भवदपि परमेश्वरपारतन्त्र्यं जीवस्य कल्याणायैव भवतीत्याचार्यमतम् । तदाहुर्जगद्गुरवः श्रीदेवानन्दाचार्याः 'त्वदीया स्मृतिस्तारिका मृत्युसिन्धोस्तथा विस्मृतिः पातिका तत्र चैव । परं योगिनां हार्दमालम्बनं त्वां श्रये राघवं सच्चिदानन्दरूपम् (श्रीराघवाष्टकम्) यथा वा कज्जलं दोषाय भवदपि वनिता नेत्राञ्जितं मुखं भूषयति सुखयति च द्रष्टारं । तदुक्तम्-'किन्तु चक्षुर्मृगाक्षीणां कज्जलेनैव भूष्यते' इत्यादिकमन्यत्रानुसन्धेयम् ।

पुनश्च कीदृशो जीवस्तत्राह-'सूक्ष्मतोऽत्यन्तसूक्ष्मः सूक्ष्माः परमाणव इति लोके प्रसिद्धिः । अयं तु परमाण्वादिभ्यः सूक्ष्मतया प्रसिद्धेभ्योऽपि सूक्ष्मः अन्यथा सूक्ष्मतमपुत्तिकादिशरीरादौ प्रवेशानुपपत्तेः । अथैवं जीवस्याणुत्वस्वीकारे निदाघे जाह्नवीसलिलेऽतिशीते निमज्जतां सकलशरीरे एकदैव शैत्यानुभवो जायते तत्समर्थनं जीवस्याणुत्वे न संभवति ततो मध्यमपरिणामवान् व्यापको वा मन्तव्यो नाणुरिति चेन्मैवम्, चन्दनबिन्दुवदविरोधात्, यथा हि चन्दनबिन्दुः शरीरैकदेशे विद्यमानोपि सकलशरीरगतसुखादिकमनुभावयति । तस्मादणुरेव जीवो न तु मध्यमो व्यापको वा । जीवस्य मध्यमपरिणामस्वीकारे शरीरपरिमाण एव स्यात् तथा च हस्तिशरीरे प्रविष्टो हस्तिपरिमाणक इति प्रारब्धावसाने हस्तिशरीरं परित्यज्यमशकादिशरीरे प्रवेशं न प्राप्स्यति । बृहत्परि



माणकस्याल्पपरिमाणके शरीरे कार्त्स्न्येन प्रवेशासंभवात् । न च संकोचविकाशशालिनो जीवावयवाः महति शरीरे गच्छन् विकशेयुरल्पेगच्छन् संकुचिता भवेयुरिति न प्रवेशाद्यनुपपत्तिरितिवाच्यं, तथा सति जीवावयवस्य संकोचविकाशशालित्वे चर्मवत् स्वीक्रियमाणे चर्मवदेव जीवस्यानित्यत्वेन परलोकादिप्राप्त्यभावः प्रसज्येत । तस्मान्न जीवोमध्यमपरिमाणो न वा व्यापकपरिमाणः व्यापकत्व एकस्य जीवस्य सर्वशरीरेण सह युगपत् सम्बन्धे सर्वत्र सुखदुःखाद्यनुसन्धानोऽपरिहार्य एवस्यात् । एतत्पक्षेश्रुतिविरोधोप्यापद्यते । तथोक्तं श्रुत्या- 'बालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः स चानन्ताय कल्पते' अर्थात् केशस्य योऽग्रिमभागस्तस्य यः शतभागस्तस्यापि शतभागकल्पने यादृशः परिमाणः तादृशपरिमाणवान् जीवो विज्ञेयः । तथा 'एषो णुरात्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेश' एषो जीवात्माऽणुः स च न प्रमाणान्तरेण गृह्यते किन्तु चेतसा सुसंस्कृतान्तःकरणेनैव ज्ञातव्यो भवतीत्यर्थः । तथा च जीवस्यमध्यमपरिमाणवत्वे व्यापकपरिमाणवत्वे वा श्रुत्योर्विरोधः स्यात् तस्मात् जीवो न मध्यमो न वा व्यापकः किन्तु श्रुतियुक्त्यादिसिद्धत्वादणुपरिमाणवानेवेति । तदत्र जगद्गुरुश्रीअनुभवानन्दाचार्याः-'ननु शरीरव्यापिसुखदुःखाद्युपलब्धये सुदूरदेशेऽपि जीवादृष्टप्रयुक्तजीवभोग्यपदार्थोत्पत्तये जीवविभुत्वमेवाङ्गीकर्त्तव्यमिति चेन्न, तथात्वे जीवोत्क्रान्त्यादिप्रतिपादकश्रुतिव्याकोपप्रसङ्गात् । तथाचाहुर्ब्रह्मसूत्रकारा भगवन्तो बादरायणाः- 'उत्क्रान्तिगत्यागतीनाम्' (२।३।२१) व्याख्यातञ्चैतत्परमार्षं सूत्रञ्चैवमेवानन्दभाष्यकारैर्भगवद्भिः श्रीरामानन्दाचार्यैः श्रीसम्प्रदायप्रधानाचार्यैः स्वभाष्ये तथा हि-आत्मनः सर्वगतत्वं निराकरोति उत्क्रान्तीत्यादिना । ताभ्य इत्यनुवर्त्तते । नायमात्मा सर्वगतः किन्त्वणुरेव उत्क्रान्तिगत्यागतीनाम् । आत्मोत्क्रान्तितद्गतितया गतिश्रुतिभ्य इत्यर्थः । 'तेन प्रद्योतेनैष आत्मानिष्क्रामति' (बृ. ६।४।२) 'ये वै के चास्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति (कौ. १।२) 'तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे' (बृ. ६।४।२) इत्यादिगत्यागत्युत्क्रान्तिश्रुतिभ्य आत्मनः सर्वगतत्वं नोपपद्यते किन्त्वणुत्वमेव सर्वगतस्य विभोर्गतिश्चागतिश्च नोपपद्यते । तस्मादात्मनोऽणुत्वमेव' (आ.भा. २।३।२१) इति । विशेषस्तु श्रौ

तार्थसंग्रहे 'अविरोधश्चन्दनवत्' 'गुणाद्वा लोकवत्' इति सूत्रीयानन्दभाष्यश्रीरघुवरीयवृत्तिस्तद्विवरणतश्चानुसन्धेय इतिदिक् ।

पुनः कीदृशो जीवस्तत्राह-'प्रतिकुणपमसौ' इत्यादि । तत्र कुणपं षाट्कौशिकं शरीरम्, तत्र प्रतिशरीरं बद्धमुक्तनित्यसूरिभेदैर्न एकधा अर्थादनेक प्रकारकः सन् भिन्नो नाना अनेकः । ननु जीव एक एव न चैकत्वे सर्वस्य सर्वत्र सुखाद्यनुभव एकदैव स्यादितिवाच्यम् उपाधिभेदेन तत्समाधानात् इति चेत्सत्यम् उपाधिश्चात्र शरीरमेव ततश्च शरीरभेदात्सुखादीनां व्यवस्था कर्तव्या, सोयं शरीरभेदं स्वीकुर्वतां तदनुरोधेन जीवबहुत्वं मन्यमानानामस्माकं कोऽपराधः ?

सोयं जीवः प्रतिशरीरमेकोऽनेको वेति संशये पूर्वाचार्यसिद्धान्तं श्रुत्यादि संवलितमवकलय, तथा हि-श्रौतप्रमेयचन्द्रिकायां श्रीश्रियानन्दाचार्याः:-

'एककाले सुखी चैको दुःखी चान्योऽवलोक्यते ।
विज्ञैः परस्परं भेदश्चात्मनां मन्यते ततः ॥
सुखी दुःखीति भेदा नन्वन्तः करणभेदतः ।
मैवं कुतो यतश्चैवं सौभर्यादौ कथं न हि ॥
मुक्तामुक्तत्वभावश्च बोध्यबोधकता तथा ।
मृतामृतव्यवस्था च ह्यात्मैक्ये सम्भवेन्न हि ॥
नन्वात्मनामभेदोऽस्ति 'भोक्ता भोग्यमि'तिश्रुतेः ।
मैवं यतः प्रकारैक्याज्जीवानां च तथा श्रुतिः ॥' इति

तथा सिद्धान्तविंशतौ जगद्गुरवः श्रीहर्यानन्दाचार्याः:-

'बद्धमुक्तव्यवस्थातः सुखीदुःखीति भेदतः ।
जीवा नाना क्वचिच्चैक्यमुक्तं प्रकारसाम्यतः ॥' इति ।

एवमेव बोधनक्षत्रमालायां जगद्गुरवः श्रीपूर्णानन्दाचार्याः:-

'ईशाद्भिन्ना मिथोभिन्नाश्चाहं प्रत्ययगोचराः ।
जीवाद्वैतं क्वचित्प्रोक्तं प्रकाराद्वैतमेव तत् ॥' इति ।

तथैवानन्दभाष्येगीतायामाचार्यसुरेन्द्राजगद्गुरवः श्रीरामानन्दाचार्याः:- किञ्चात्मनां भेदाभावे गुरुशिष्यव्यवस्थाभङ्गोऽपि स्यात् । तदेवं शिष्यतया कञ्चनशिक्षणीयमुपलभ्यानुपलभ्यवोपदिशत्याचार्यः !आद्ये स्वस्माद्भिन्नमभिन्नं वा ?



प्रथमे सत्यमसत्यं वा ? नाद्योऽपसिद्धान्तात् । अन्त्ये तु तस्यमिथ्यात्वेनोपलम्भे तस्योपदेशासम्भवः । सत्यत्वेनोपलम्भे तु भ्रान्तत्वेनाचार्यत्वहानिराचार्यस्य । अभिन्नत्वपक्षे कथमुपदेशः । अनुपलभ्येति पक्षे तु कस्मावुपदिशति ! एवमात्मभेदानभ्युपगमे बद्धमुक्तव्यवस्थाभङ्गश्च भवेत् ।

ननु प्रतिकल्पं यद्येकस्यात्मनो मुक्तिः स्यात्तदाऽनन्तेष्वतीतेषु कल्पेषु सर्वेष्वात्मासु मुक्तेषु सत्स्वनन्तात्मवादेऽपि बद्धमुक्तव्यवस्था कथं भवेदितिचेन्न, नष्टेष्वप्यनन्तेषु घटेषु घटान्तरस्यावस्थितिरिवानन्तेषु जीवेषु मुक्तेषु सत्स्वपि जीवानामानन्त्यातिशयाज्जीवान्तरबन्धस्योपपत्तेः किञ्चैकात्मवादिनाऽपि वक्तव्यमितः पूर्वं मोक्षाभावेको हेतुरिति ! हेतोरनागमनेमेवेति चेत्तदेवानेकात्मवादेऽप्यवशिष्टानामात्मनां मोक्षाभावे हेतुतयाऽङ्गीकृतत्वेनोक्तदोषप्रसङ्गः कुतः ! मुक्तौ हेतुस्तु भक्त्यपरपर्यायं तैलाधारावदविच्छिन्नभगवत्स्मृतिसन्तानमेव । उक्तञ्च साधनदीपिकायामाचार्यवर्यैर्जगद्गुरुश्रीगङ्गाधराचार्यैः:-

'रामस्य ब्रह्मणोऽनन्यभक्त्यैव मुक्तिराप्यते
भक्तिर्ध्रुवास्मृतिः सा च विवेकादिकसप्तकात्' इति ।

उचुश्च तथैव भगवन्तः श्रीदेवानन्दाचार्यचरणा अपि-

त्वदीया स्मृतिस्तारिका मृत्युसिन्धो-
स्तथा विस्मृतिः पातिका तत्र चैव ।
परं योगिनां हार्दमालम्बनं त्वां
श्रये राघवं सच्चिदानन्दरूपम् ॥' इति गी. २।१२।

तथा च श्रुतिसिद्धान्तभास्करे जगद्गुरुश्रीअनन्तानन्दाचार्याः

'एकस्य सुखकाले हि दुःखी चान्योऽवलोक्यते ।
प्रतिदेहं ततो जीवा भिन्ना एव मता बुधैः' इति ।

तथैव श्रीवैष्णवधर्मपीयूषे जगद्गुरवः श्रीलाहारामाचार्याः:-

'आत्मेशस्य नियाम्यश्च धार्यः शेषस्तथाऽजडः ।
भिन्नाः परस्परं जीवा नित्या भिन्नास्तथेश्वरात्' इति ।

समुद्धृतप्रकृतग्रन्थश्लोकानामाशयस्तु तत्तत्प्रबन्धव्याख्यानावसरेस्फुटीभविष्यतीति नात्रप्रपञ्च्यते प्रबन्धविस्तारभयात् । तदत्रान्येऽपि ।

'जननमरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च ।
पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव' इति ।

योयं विज्ञानाधिकरणविज्ञानवांश्च जीवः संप्रत्येकाऽनेकसंशयमापन्नः स्वरूपशरीरादिभेदेनानेकविधेत्याह जननमरणकरणेत्यादि । तत्र जननंनाम निकायविशिष्टाभिर्देहेन्द्रियमनोबुद्धिवेदनादिभिः सह पुरुषस्याभिसम्बन्धो विलक्षण संयोगस्तदिदं विलक्षणसम्बन्धकजननमेकस्मिन् पुरुषे जीवे स्वीक्रियमाणे नोपपद्येत तत्, तथा हि यदि एक एव जीवस्तदैकस्मिन्नेकत्रोत्पद्यमाने सर्वेऽपि सर्वत्र जायेरन्, तथा मरणंनाम सम्प्राप्तषाट्कौशिकशरीरस्य विनाशः, तत्श्चैकस्मिन् पुरुषे एकत्र म्रियमाणे सर्वेऽपि म्रियेरन्, नत्वेवं दृश्यते, किन्तु पृथग् जीवनमरणयोर्व्यवस्था दृश्यते, तस्मात्पुरुषः प्रतिदेहं नैकः किन्तु विभिन्न एव, तथा करणानां चक्षुरादीनां प्रतिनियमात् प्रतिनियमो व्यवस्था । तथा च यदि एक एव जीवो भवेत्तदैकस्मिन्नन्धे जाते सर्वेप्यन्धा भवेयुः, एकस्मिन् बधिरे जाते सर्वे बधिरा भवेयुः परन्तु नैवं दृश्यते किन्तु प्रतिनियमो दृश्यते' सोयं प्रतिनियमः प्रतिशरीरं जीवभेदसत्येव संपद्यते तस्मात्प्रतिशरीरं जीवो भिन्न एव । किञ्च त्रैगुण्यविपर्ययादपि जीवबहुत्वमेव, त्रिगुणानां सत्वरजस्तमसांविपर्ययोऽन्यथाभावः यया केचनसत्वबहुला देवाः सुखभाजो भवन्तो दृश्यन्ते, केचनरजोबहुला मनुष्या दुःखभाजो भवन्ति । केचनतमो बहुलाः पशवो नारकाश्च मोहभाजः । सोयं त्रैगुण्यविपर्ययाच्च क्षेत्रभेदेन पुरुषभेदमन्तरेणान्यथाऽनुपपद्यमानः प्रतिक्षेत्रं नानैव नत्वेकः । श्रुतिरपि पुरुषबहुत्वं पुष्णाति- 'योनिमन्ये प्रपद्यन्ते शरीरत्वायदेहिनः । स्थाणुमन्येऽनुसज्जन्ति यथा कर्म यथा श्रुतमिति । तदयमर्थः-केचनजीवाः स्वकृतकर्मपराधीनाः कर्मफलोपभोगाय शरीरत्वाय शरीरग्रहणाय अर्थात् मातापितृजस्थूलशरीरप्राप्तये स्थूलशरीरग्रहण मन्तरेण भोगानुपपन्नः । योनिमनुष्यदेवादियोनिमुत्पत्तिनिदानं स्थानं सम्प्रपद्यन्ते प्राप्नुवन्ति ।

अन्ये-ततोऽधमकर्मवन्तः फलोपभोगायस्थाणुं वनस्पत्यादिकमनु-सज्जन्ति प्राप्नुवन्ति । वृक्षादीनामपि भोगाधिष्ठानत्वात् । अर्थात् वृक्षादिशरीरमास्थाय तदवच्छेदेन पुण्यपापफले सुखदुःखेऽनुभवन्ति । तदुक्तम्-'गुरुं



हुङ्कृत्य तुङ्कृत्य विप्रान् निर्जित्यवादतः । श्मशाने जायते वृक्षोगृध्रकङ्कोपसेवितः' 'नर्मदातीरसञ्जाताः सरलार्जुनपादपाः । नर्मदाजलसंयोगात्तेऽपि यान्ति पराङ्गतिम्' इत्यादिना वृक्षादिशरीरस्थस्यापि पापफलभोगप्रतिपादनात् । तत्र हेतुमाह यथा कर्म यथा श्रुतमिति । अर्थात् यस्य यादृशं कर्म यादृशं बोपासनम् तदनुसारेण तत्तद् योनिमाप्नुवन्तीति । एतावता जीवबहुत्वमेव श्रुत्या दर्शितम्, नेयं श्रुतिर्जीवैकत्वे संगच्छते । तस्माज्जीवबहुत्वमेव श्रुतिसिद्धान्तादिसिद्धमिति दिक् । पुनश्च कीदृशो जीवस्तत्राह-'श्रीशाक्रान्तालयस्थः' आसमन्ताल्लीयतेऽस्मिन्नित्यालयं स्थूलशरीरम्, श्रियः श्रीसीतायाः ईशः स्वामी परमात्मा सर्वेश्वरश्रीरामचन्द्रः, तेनाक्रान्तमधिष्ठितं यदालयं स्थूलं शरीरं तादृशशरीरे तिष्ठतीति सः । अर्थात् परमात्मनाऽधिष्ठितं यत् शरीरं षाट्कौशिकं तत्र निवसनशील इति ।

पुनः कीदृशो जीवस्तत्राह-'निजकृतिफलभुक्' स्वप्रयाससंपादितशुभाशुभकर्मफलभोक्ता । अर्थात् अस्मिन् मनुष्यादिस्थूलशरीरे परमात्मापि तिष्ठति सर्वान्तर्यामित्वात् तथा जीवोऽपि तत्र कर्मानधीनः परमेश्वरस्तत्रवसन्नपि कर्मफलं न भुनक्ति जीवस्तु कर्मपराधीन ईश्वरप्रेरितः स्वकीयकर्मफलं भुञ्जान एवास्ते इति भावः । तथोक्तम् श्रुत्या-

'द्वासुपर्णा सयुजा सखाया समानं वृक्षं परिषष्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्ति-अनश्नन्नन्योऽभिचाकशीति ॥'

अयमर्थः-द्वौ द्वित्वसंख्याविशिष्टौ सुपर्णौशोभनवर्णवन्तौ, सयुजा-सयुजौ सह निवसन्तौ' सखाया-सखायौ एकत्रनिवासकरणात् मित्रभावमुपगतौ तौ समानं वृक्षं शरीररूपवृक्षं समास्थाय तिष्ठतः, तयोर्द्वयोर्जीवपरमेश्वरयोर्मध्ये' एकोजीवः पिप्पलं स्वकृतकर्मफलं शुभमशुभं वा स्वादु-समीचीनमत्ति, अर्थात् जीव एव तत्र वसन् कर्मफलस्यास्वादको भवति, अन्यो जीवव्यतिरिक्तः परमात्मा अनश्नन् कर्मफलमभुञ्जानोऽभिचकास्ति शरीरे तिष्ठति, प्रकाशमान एव । यद्यपि अभुञ्जानस्य प्रकाशनमन्यत्र न दृष्टं तथापि सर्वशक्तिकपरमेश्वरश्रीरामस्य सर्वसंभवेनादोषात् । एतावता जीवेशयोर्जीवानां च परस्परं भेदः श्रुत्यैव प्रतिपादितः एवं 'ज्ञाज्ञौ द्वावजावीशानीशौ' समानवृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः 'पृथगात्मानं प्रेरितारं च मत्वा' इत्यादिश्रुतयः स्मृतयश्चापि

भेदानुवादिन्योऽनुसन्धेय इति संक्षेपः । विस्तरस्तु प्रकृतश्रुतेरानन्दभाष्यविवरणे । पुनश्च कीदृशो जीवस्तत्राह-'तत्सहायः' स सर्वजगन्निदानः परमात्मा श्रीसीतानाथः सहायः साहाय्य प्रदातोपकारको यस्य जीवराशेः स तत्सहायः । अर्थात् यत्कार्यं यदा करोति यत्र तत्र सर्वत्र सर्वदा परमात्मनः साहाय्यमालंव्यैव करोतीति जीवस्य स्वभावः अतो जीवः परमात्मसहाय इति । तदाहुराचार्याः-

'सहायो जराजन्मनाशे न यज्ञो निधानं न विद्या बलं चापि नाथ ? ।
न दारा न वा दारको मे ततस्त्वां श्रये राघवं सच्चिदानन्दरूपम् ॥
त्वमेवासि वित्तं च विद्यात्वमेव त्वमेवासि माता पिताऽपि त्वमेव
त्वमेवासि हे नाथ ! सर्वं मम त्वां श्रये राघवं सच्चिदानन्दरूपम् ॥'

पुनश्च जीवः कीदृ शस्तत्राह-'अभिमानी' अहं ममाभिमानवान्, अज्ञानबलाज्जीवः शरीरदावेवाहमित्यभिमन्यते, गेहकलत्रपुत्रमित्रादौ ममैतत्सर्वं गेहादिकमित्यभिमन्यते, यद्वा ऐहिकपारलौकिककार्येऽहं कर्ताऽहमेतस्य फलस्य भोक्ता इत्याकारकोऽभिमानो यस्य सः । यावत्पर्यन्तं पुत्रैषणालोकैषणावित्तेषणारूपैषणात्रयविमुक्तो भूत्वा संसारभयनिवर्तकभगवच्चरणानुरागिभवन् भगवन्तं श्रीरामं नोपास्ते तावत् कालं जीवस्य शरीरगेहादिविषयकोऽभिमानो न निवर्तते अतस्तावत्कालमभिमानी एव, यदा तु निवृत्तैषणो भूत्वा सर्वशरण्यं श्रीरामं भजति तदा निरभिमानी भवति मोक्षकाले संसारदशायां तु सर्वदा अभिमानवानेवेत्यतः 'अभिमानीति' ।

पुनश्च कीदृशो जीवस्तत्राह-'तत्वजिज्ञासुवेद्यः' तत्र तत्त्वं चिदचिदीश्वररूपम्, तादृशतत्त्वं ज्ञातुमिच्छन्ति ये ते तत्त्वजिज्ञासवः तादृशतत्त्वजिज्ञासुभिर्ज्ञातुं योग्यः । यो हि अधिकारी तत्त्वं चिदचिदीश्वरात्मकं ज्ञातुमीहते तेन ज्ञातुं योग्य इत्यर्थः । इत्थञ्चाणुत्वपारतन्त्र्यादिविशिष्टः सर्वदैकरूपनित्योऽनेकोऽनेकप्रकारकस्वकृतकर्मफलानां भोक्ता देहफलाद्यभिमानवान् परमेश्वरसहायो जीव इति समुदितार्थः । तदत्रानुसन्धेयो जगद्गुरुश्रीमङ्गलाचार्यप्रसादितो वेदान्तचिन्तामणिः प्रबन्धः-

'शेषस्तनु रघुपतेरणुचेतनोंऽश
श्चान्यो मतेर्हि करणाद् वपुषोऽप्यसुभ्यः ।



नित्योऽजडः परवशः कृतभुक्तिशाली,
भिन्नोऽसुभृत्प्रतिवपुः सुखबुद्धिरूपः ॥
मुक्ताविमुक्तविधया द्विविधत्वमाप्ता,
जीवा मिथो जनकजापतितोऽपि भिन्ना ।
मुक्ता अनन्तभजनाज्जनिमृत्युमुक्ता,
बद्धास्त्वनन्तजनिकर्मसु बन्धबद्धाः ॥' इत्यादिकः ।

ननु शरीरव्यतिरिक्तो जीवो नोपलभ्यते किन्तु 'अहं गच्छामि अहं करोमीत्यादिप्रतीत्या शरीरस्यैवात्मत्वमुपलभ्यते नतु शरीरादिव्यतिरिक्तो जीव इति चेन्न शरीरस्य चैतन्ये मृतकशरीरे व्यभिचारात् न तस्य चैतन्यं किन्तु तदतिरिक्तस्यैव तथात्वम् । अन्यथा शरीरस्य चैतन्ये बाल्ये विलोकितस्य स्थाविरे स्मरणानुपपत्तेः, भवति च प्रतीतिः, 'योहं बाल्ये पितरानन्वभूवं स एव स्थाविरे प्रणप्तृननुभवामि' तत्र बालस्थविरयोः परस्परं भेदेन बाल्यदेहानुभूतस्य वस्तुनः स्थविरदेहेन स्मरणं न स्यात् 'नान्यं दृष्टं स्मरत्यन्यः' इति । न च तदुभयशरीरयोरेकत्वं प्रत्यक्षबाधात् । न च पूर्वदेहानुभूतस्य संस्कार उत्तरोत्तरदेहे संक्रामतीतिवाच्यम् कल्पनागौरवात् । येषु व्यावर्तमानेष्वपि यदनुवर्तते तत्तेभ्यो भिन्नं भवति । यथा कुसुमेभ्यस्सूत्रम् कुसुमेषु व्यावर्तमानेष्वपि सूत्रबुद्धिर्मालायामनुवर्तते इति कुसुमेभ्यः सूत्रं भिन्नं भवति, तथा बालादिशरीरेषु व्यवर्तमानेष्वहं बुद्धिः सर्वत्रानुवर्तते इति अहमालम्वनो जीवः शरीरेभ्यो भिन्न एव । अपि च स्वप्ने देवशरीरमास्थाय देवोचितभोगान् भुञ्जान एव प्रतिबुद्धो मनुष्यशरीरं पश्यति, तत्र देवशरीरे बाधितेऽपि मनुष्यदेहेऽहं बुद्धिरनुवर्तते एव ततो देहभिन्न एव जीवः ।

किञ्च यः योगकर्मणा व्याघ्रतां गतः स शरीरभेदं पश्यन्नपि तदुभयशरीरेऽभिन्नमेकमेवात्मानं पश्यति तस्मान्न शरीरं जीवः किन्तु शरीराद् भिन्नोहमालम्बनमेव । अपि च शरीरस्य चैतन्ये जातमात्रस्य बालस्य दुग्धपाने प्रवृत्तिर्न स्यात् । यतः प्रवृत्तौ इष्टसाधनताज्ञानस्य कारणत्वेन जातमात्रस्य तदानीमिष्टसाधनता स्मारकाभावात् । शरीरव्यतिरिक्तात्मस्वीकारे तु जन्मान्तरे दुग्धपानस्येष्टत्वमनुभूतमिति जन्मान्तरीयतत्स्मरणं जायते । इष्टसाधनतास्मरणादेव जातमात्रो

बालः स्तन्यपाने प्रवर्तते इत्यर्थः । न च तर्हि जन्मान्तरानुभूतमन्यत्स्त्रीपुत्रादिकमपि स्मर्यतामिति वाच्यम् तदुद्बोधकाभावात् । प्रकृते तु जीवनादृष्टमेवोद्बोधकत्वम् । यदि न स्मरेत् तदा जीवनमेव न स्यादिति जीवनादृष्टमेव स्वेष्टसाधनतां स्मारयित्वा दुग्धपानादौ प्रवर्तयतीति न शरीरमात्मा किन्तु तदतिरिक्त एव । यथा पृथिव्यादिसमुदायात्मकविलक्षणसङ्घातरूपमापन्नमर्थात् शरीराकारपरिणतं नात्मा शरीरभेदे स्मरणाद्यनुपपत्तेस्तथैव चक्षुरादिकानि बाह्येन्द्रियाण्यपि नात्मा, अर्थाच्चैतन्याधिकरणमपि न भवति, तथा सति चक्षुर्विलोपे चक्षुषानुभूतस्य पश्चादनुसन्धानं न स्यात् भवति च तस्याऽभावेपि-योहं चक्षुषाऽपश्यं घटादिकं चक्षुषोऽभावेऽपि घटादिकं त्वचा स्पृशामीति, तदेतत्स्मरणं चक्षुराद्यभावेऽपि जायते । इतीन्द्रियेभ्यो व्यतिरिक्तमात्मानं साधयति, यथा कश्चिद्बालको गृहे तिष्ठन् शुक्लकाचावृतगवाक्षेन बाह्यं पदार्थं शुक्लं पश्यति, कृष्णेन कृष्णं पश्यति कर्णाभ्यां शब्दं शृणोति, तत्र कर्ता बालक एकः करणं चक्षुरादिकं न कर्तृ, तथा प्रकृते इन्द्रियादिकं तत्तज्ज्ञानं करणं कर्ता तु तदतिरिक्तः कश्चित् न तु करणमेव कर्ता भवति । न च यथा सर्पस्वात्मानं स्वात्मनैव बध्नाति, अत्रैक एव कर्ता करणमपि तथैव चक्षुरादिस्थलेऽपि संभवेदितिवाच्यम् । वस्तुस्वभावबलेन सर्पस्थले तत्संभवात् । प्रेक्षणादिषु न तथात्वमिति नेन्द्रियाण्यनित्यानि कर्ता इति किन्तु इन्द्रियातिरिक्तो वक्ष्यमाण गुणको जीव एव ।

ननु शरीरमिन्द्रियं चानित्यमिति शरीरादिविनाशे तदनुभूतं तदन्येन स्मरणादिकं न स्यादतः शरीरादिव्यतिरिक्त आत्मेति कथञ्चिद् भवतु । किन्तु मनस्तु नित्यं तस्य विनाशो न कदापि स्यादिति तस्यैवात्मत्वं भवतु इति चेन्न, मनसोऽणुत्वेन प्रत्यक्षे च महत्वकारणस्वीकारेण मनः स्थितज्ञानसुखादेः प्रत्यक्षत्वं न स्यात्, भवति च प्रतीतिरहं जानेऽहं सुखीति । तस्मात्सुखादिप्रत्यक्षानुत्पत्त्या मनोऽतिरिक्त एवात्मा । किं च मनो ज्ञानसुखाद्युपलब्धौ करणं तन्मनस्तस्यामेव क्रियायां कर्तृकथं स्यात् । नहि देवदत्तो गच्छतीत्यत्र कर्तुरेव करणत्वं भवतीति दृश्यते । अथैवमपि न भवतु जडत्वादिन्द्रियं मनो वा ज्ञानक्रियादौ कर्ता परन्तु विज्ञानं तु स्वप्रकाशरूपत्वात् कर्ता भवति । तस्य स्वप्रकाश-रूपत्वाच्चेतनत्वम् । ज्ञानसुखादिकं तु तादृशविज्ञानस्यैवाकारविशेषः । तद्वि



ज्ञानं भावरूपत्वात् क्षणिकं । यत् सत् तत् क्षणिकं यथा मेघमालादिकं सत्वात्तदपि क्षणिकमेव । तद्विज्ञानं द्विविधं प्रवृत्तिविज्ञानालयविज्ञानभेदेन । तत्र घटादिबाह्यवस्तु विषयकं ज्ञानं प्रवृत्तिविज्ञानम् । आत्मसुखादिविषयकम्, अहमस्मि, अहं सुखीति ज्ञानमालयविज्ञानम् । अयमेवात्मा आलयविज्ञानरूपः । तादृशालयविज्ञानात्मकं जीवे संस्कारादृष्टादयो भवन्ति । तदुक्तम्-'तत्तस्यालयविज्ञानं यद्भवेदहमास्पदम् । तस्मात् प्रवृत्तिविज्ञानं यन्नीलादिकमुल्लिखेत्' इति । न चालयविज्ञानस्यात्मरूपस्यापि क्षणिकत्वेपूर्वविज्ञानानुभूतपदार्थस्य तदग्रिमविज्ञानेन स्मरणं न स्यादनुभवितुः पूर्वस्य क्षणिकत्वेन विनष्टत्वादग्रिमस्य चानुभवाभावादितिवाच्यम् मृगमदवासनावासितवसन इव पूर्वपूर्वविज्ञानजनितसंस्कारस्योत्ततोत्तरविज्ञाने संचारणान्न स्मरणानुपपत्तिरिति चेदत्रोच्यते, विज्ञानस्य सविषयकत्वनियमेन, यदिदमालयविज्ञानं तत् यत्किञ्चिद्विषयकं सर्वविषयकं वा ? प्रथमपक्षे घटादिवत् किञ्चिद्विषयकत्वे विनिगमना विरहात् । सर्वविषयकत्वपक्षे आलयविज्ञानस्य सर्वविषयकतया सर्वोपि सर्वज्ञः स्यात् । न चैतदनुभूयते । परमेश्वरातिरिक्तस्य सर्वज्ञत्वाभावात् । किं चालयविज्ञानस्यापि सविषयकत्वे जाग्रद्वत् सुषुप्तावपि विषयावभाससंभवेन सुषुप्तेरेवासंभवप्रसङ्गात् । न चेष्टापत्तिः, इन्द्रियजन्यज्ञानं जागरणं, मनोमात्रजन्यज्ञानावस्था स्वप्नः । एतज्ज्ञानद्वयावस्थेतरावस्थासुषुप्तिरित्यादिविभागस्य लोकशास्त्रसिद्धस्य निर्विषयत्वप्रसङ्गात् । तस्माद्विज्ञानं गुणात्मकं नात्मा किन्तु तेभ्योऽतिरिक्तः कश्चनात्मा ।

अथ यदुक्तं पूर्वविज्ञानस्य वासनाया उत्तरोत्तरविज्ञाने संचरणात् कालान्तरे स्मरणानुपपत्तिर्नैव स्यादपितु स्यादेवेति तदपि न समीचीनं तथा सति मात्रानुभूतवस्तुविषयकसंस्कारस्य तदुदरस्थपुत्रविज्ञाने संक्रमान् मात्रानुभूतस्य पुत्रेणापिस्मरणप्रसङ्गात् । न च यत्रोपादानोपादेयभावस्तत्रैव वासनासंक्रमो न सर्वत्रेति नियमः । माता तु पुत्रस्य नोपादानमपितु निमित्तम् । पूर्वविज्ञानमुत्तरविज्ञानस्योपादानमेव ततश्च प्रथमविज्ञानस्थवासनादीनामुत्तरविज्ञाने संक्रमो जायते न तु मातृस्थितवासनायाः पुत्रविज्ञाने संक्रम इति वाच्यम् वासनायाः संक्रमाभावात् । अयमाशयः-संक्रमो नाम चलनं चलनात्मिका क्रिया, क्रिया च द्रव्यसमवेता, द्रव्यं विहायनान्यत्र भवति, ततश्च भवदभिमतविज्ञानस्य गुणत्वेन

तत्र च क्रियाभावात् कथं नाम विज्ञानात्मके गुणे गुणरूपवासनायाः संभवः कथं वा वासनात्मकगुणे संचरणरूपक्रियायाः संभव इति । न च न संचरणं क्रियारूपं येनेयमापत्तिः स्यादपि तु पूर्वापेक्षयोन्तरभिन्न उत्पत्तिरेव संक्रमः, उत्पत्तिस्तु द्रव्यगुणकर्मणां सर्वेषां भवतीत्युत्पत्तिरूपसंक्रमो न विरुद्ध्यते इति वाच्यम् तदुत्पादकाभावात् । अर्थात् पूर्वविज्ञानस्य क्षणिकत्वेन क्षणमात्रे एव विनष्टत्वात् क उत्पादकः स्यात् । वासनोत्पत्तिसमयं यावत् पूर्वविज्ञानस्य स्थायित्वेनोत्पत्तिस्वीकारे स्थैर्यमेवापतेत् तावत्कालं स्थिरं चैनं कः पश्चान्नाशयिष्यतीति बौद्धसूक्तेः । न च क्षणिकविज्ञानेऽतिशयविशेषः कल्प्यते इति वाच्यम् तादृशकल्पनायां प्रमाणाभावात् । न च कार्योत्पादककुर्वद्रूपत्वं बीजादिवत् कल्प्यते इति वाच्यम् बीजादावपि सहकारिसमवधानासमवधानाभ्यामेवोपपत्तेः कुर्वद्रूपत्वशक्तिकल्पने प्रमाणाभावादिति न क्षणिकविज्ञानमात्मा किन्तु तदतिरिक्त एवेति ज्ञेयम् ।

ननु तर्हि क्षणिकविज्ञानस्यानित्यत्वेन तत्वं न भवतु परन्तु नित्यविज्ञानस्यैवात्मत्वं स्वीक्रियताम् । तदाह-

'सत्यं ज्ञानमानन्द' मितिश्रुतेरिति, तदपि न मनोरमं केवलाद्वैतमतम् ।

यत इहापि ज्ञानस्यैवात्मत्वस्वीकारेण तस्य यत् किञ्चिद्विषयत्वे विनिगमनाविरहः सर्वविषयकत्वे सर्वस्य सार्वज्ञत्वप्रसङ्गात् । सत्यं ज्ञानमानन्दमित्यादि श्रुतिवाक्यं न जीवस्वरूपनिरूपणपरकमपि तु परमेश्वरस्वरूपप्रतिपादनपरकमेव । न च तत्वमसीत्यादिभ्यो जीवपरेशयोरेकत्वप्रतिपादनेन जीवस्वरूपमीश्वराभिन्नमेव प्रतीयते इति वाच्यम् ज्ञानित्वाज्ञानित्वसुखित्वदुःखित्वबद्धमुक्तादि भेदेन जीवानां परस्परं भेदसिद्धेरीश्वरभेदस्य सुतरामेव सिद्धत्वात् । यदि जीवेषु परस्परं भेदोनाभ्युपेतस्तदा बन्धमोक्षादिव्यवस्था नोपपादिता स्यात्, तस्माज्जीवानां परस्परं भेद एवेति, यदा तु जीवभेदः सिद्धो भवति तदा जीवेशयोर्भेदः सुतरामेवोपपद्यते । जीव ईश्वराद्भिन्नोऽल्पज्ञत्वात् परमेश्वरो जीवाद् भिद्यते सर्वज्ञत्वाज्जगदुपादानत्वाच्च । तथा-'द्वासुपर्णासयुजा' 'ज्ञाज्ञावीशानीशौ' इत्यादि श्रुत्यनुमानाभ्यां जीवेश्वरयोर्भेद एवेति ईश्वरज्ञानरूपताप्रतिपादकप्रमाणेन जीवस्यापि तद्वज्ज्ञानरूपत्वं नैव सिद्ध्यतीति न जीव ईश्वरवन्नित्यविज्ञानरूप इति



किन्तु ततो व्यतिरिक्त एव । यदप्युक्तं मोक्षदशायां जीवेश्वरमध्यस्थाज्ञाननिवृत्तावभेदजीवेशयोर्जायते अर्थात्-परमेश्वरस्वरूपाच्छादकजीवगताज्ञानस्य परमेश्वरस्वरूपसाक्षात्कारान्तरं तयोर्भेदापगमे जीवेश्वरयोरैक्यं भवतीति, तदप्ययुक्तम्-प्रत्यक्षानुमानादिप्रमाणैर्भेदस्य नित्यत्वावगमेन भेदनाशासंभवात् । कदाचिद् भेदागमेऽपिव्यक्तिद्वयस्यावश्यं भावात् । न वा मोक्षे जीवस्यानन्दरूपत्व दुःखाभावे एवानन्दस्योपचारात् भाराद्यपगमे सुखीसंवृत्तोहमितिवत् । यथा 'भाराक्रान्तो वाहीको भारापगमे अहं सुखी संजात' इति प्रत्येति न तु तत्र दुःखाभावातिरिक्तं सुखादिकं भवति तथैव कर्मभाराक्रान्तो जीवो यावत्संसारे दुःखी भवति कर्मनिवृत्तिपूर्वकसंसारनिवृत्त्यन्तरं सुखीवत् भवति न तु सुखरूपतामापद्यते, तस्मान्मोक्षेऽपि जीवस्येश्वरवन्नानन्दरूपता । मुक्तौ जीवः सुखीभवतीति प्रवादस्तु 'संपदाधिक्ये पुरोहितोऽयं राजा संवृत्तः 'इतिवज्ज्ञेयः तस्माज्जीवो न नित्यविज्ञानरूपः । न वा प्रकृतिरेव कर्त्री पुरुषस्तु ज्ञानरूपोऽतिरिक्त इति प्रकृतिवादोपि संगतः, कृतिज्ञानयोः सामानाधिकरणदर्शनेन यत्राधिकरणे कृतिस्तस्मिन्नेवाधिकरणे ज्ञानमपि । न च प्रकृतौ प्रकृतिकार्यबुद्धौ वा ज्ञानं जडत्वात् किन्तु जडभिन्नं ज्ञानं कृतिरपि इति न प्रकृतेश्चैतन्यं किन्तु तदतिरिक्त एव जीवः । इत्येवं शरीरेन्द्रियमनोविषयक्षणिकविज्ञाननित्यविज्ञानप्रकृत्यादिरूपो न जीवः किन्तु तदतिरिक्तः ।

इत्थं देहादिविलक्षणत्वमात्मनः 'मम शरीरम्' इति प्रतीतौ शरीरादिपार्थक्येनात्मन उपलंभात् । शरीरादेश्च 'इदं देहादिक' मित्युपलंभात् । आत्मनः 'अहमि' त्याकारेणोपलम्भः । तस्माद्देहविलक्षणः । एवमिन्द्रियादीनां विनाशेऽपि योहं चक्षुषाऽपश्यम् स एवाहं त्वचा स्पृशामीति प्रत्ययादिन्द्रियभिन्नः । एवं युक्तिबलेन श्रुतिबलेन अन्ययाऽनुपपत्या च देहादिविलक्षणः सिद्ध्यति जीवः । तथाऽयं जीवोऽजडः अर्थात्-ज्ञानमन्तरेणवृत्तिज्ञानं विनैव स्वयं प्रकाशमानः अर्थात् अनन्याधीनप्रकाशत्वमेव स्वप्रकाशत्वम् । यथा स्वयं प्रकाशरूपप्रदीपस्य प्रदीपान्तरनिरपेक्षस्वव्यवहारकारणत्वं तथैवात्मनो ज्ञानान्तरानधीनस्वव्यवहारहेतुत्वमेवस्वप्रकाशत्वम् । घटादिजडपदार्थस्तु स्वेतरप्रदीपादिसापेक्ष स्वयं स्वव्यवहारजनक इति न घटादिः स्वयं प्रकाशः 'हृद्यन्तर्ज्योतिः पुरुषः'

तथा स्वप्नावस्थामधिकृत्योक्तम् 'अत्रायं पुरुषः स्वयं ज्योतिर्भवति विज्ञानमयः' 'आत्मज्ञानमयोऽमलः' 'तच्च ज्ञानमयं व्यापि' स्वसंवेद्यम् इत्यादिश्रुत्या स्वयं प्रकाशत्वम् । अन्यथा आत्मनोप्यस्वप्रकाशत्वे तदन्यस्य जडत्वेन प्रकाशकत्वं नास्ति तादृशस्थिता आत्मनोऽपि स्वप्रकाशता न स्यात्तदा जगदान्ध्यप्रसङ्ग आ पद्येत । तस्मादात्मा स्वयंप्रकाशः । तथा आनन्दरूपत्वं सुखस्वरूपत्वमप्यात्म नः । सुप्तोत्थितस्य 'सुखमहमस्वाप्सं न किञ्चिदवेदिष' मिति स्मरणदर्शनात् । सुखरूपत्वमन्तरेण यथोक्तस्मरणस्यासंभवात् । अर्थात्-यस्य विषयस्यानुभवो जायते तदनन्तं तज्जनितसंस्कारेण कालान्तरेस्मरणं जायते इति स्थितिः ततश्च सुप्तप्रबुद्धस्य सुखविषयकं स्मरणं भवतीति तदन्यथाऽनुपपत्त्या पूर्वमवश्य मनुभवो मन्तव्य इति सुषुप्तिकाले जायमानोऽनुभवविषयको जीवस्य सुखरूपत्वं साधयतीति सुखानन्दरूप आत्मा । आनन्दरूपत्वञ्च स्वत एवेष्टत्वरूपं तच्च स्वभावत एवानुकूलत्वम्, तदुक्तम्-'अनुकूलं सुखं दुःखं प्रतिकूलमिति स्थि तेः' । एवं सर्वस्यात्मस्वरूपं सुखमेव । तत्र 'सुखमहमस्वाप्सं न किञ्चिदवेदिष' मित्यात्मविषयकपूर्वप्रदर्शितप्रत्यभिज्ञैव प्रमाणम्, तादृशसुखस्मरणस्य तादृशसु खानुभवमन्तरेणानुपपद्यमानत्वात् । यतः सुषुप्तिकाले बाह्यार्थविषयकानुभवस्य बाधितत्वेनान्तरजीवात्मरूपसुखस्यैवानुभवस्ततस्तस्यस्मरणमिति स्मरणेन सुख रूपत्वसिद्धेः ।

एवं शरीरादिव्यतिरिक्तो जीवो नित्यः सर्वकाले वर्तमानस्थितिकः । न च यदि जीवः सर्वकाले वर्तमानस्वभावकस्तदा 'प्रजापतिः प्रजा असृजत' सन्मूलाः सोम्येमाः सर्वा प्रजाः' 'यतो वा इमानि भूतानि जायन्ते' 'यतः प्रसूता जगतः प्रसूतिस्तोयेन जीवान् विससर्ज भूम्याम्' इत्यादिश्रुतिस्मृतिवाक्यशतैरात्मनो जन्ममरणादिकं प्रतिपादितं तत्सङ्गतिः कथं स्यादिति वाच्यम् ? जन्ममरणादेर्देह संबन्धित्वात् तदाहुराचार्याः-

'जन्ममृत्यू कथं स्यातां जीवे नित्ये मते ननु ?
मैवं मृत्युर्यतस्त्यागः संयोगो जन्म वर्ष्मणः ।' (श्रौतप्रमेयचन्द्रिका-७)

अर्थात् 'विशिष्टे विधीयमानौ विधिनिषेधौ सति विशेष्ये बाधे विशेष णमेवोपसंक्रामतः' इति न्यायेन केवलजीवस्यजन्ममरणादेरभावेन देहात्मक



विशेषणयुक्तस्य तौ भवतः । यथा जीवत्येव देवदत्ते शिखाविनाशमूलकः शिखीध्वस्त इति प्रयोगो भवति, तत्र विनाशस्यशिखायामेवान्वयो भवति न तु देवदत्ते, तत्र देवदत्ते जीवित्वप्रमाणसिद्धत्वात् तथैव प्रकृते देवदत्तस्य जन्म इत्यस्य देवदत्तजीवस्य तदीयदेहेन सह संबन्ध एव देवदत्तजीवस्य जन्मकर्मव शात्प्राप्तदेहस्य विनाश एव मरणमिति तत्र देहस्यैवोत्पादविनाशौ भवतो न तु देहिनस्तौ भवत इति न प्रदर्शितश्रुतेनुपपत्तिः प्रत्युत 'अजो नित्यः शाश्वतः' इत्यादिना जीवनित्यत्वप्रतिपादनेन त्रिकालवृत्तीजीवो नित्यः ।

न च जीवस्य यदि नित्यत्वं तदा प्रलयकाले जीवानामेकत्वावधारणं कथमुपपन्नं स्यादिति वाच्यम्, एकत्वस्य नामरूपविभागाभावरूपत्वेनानुपपत्ते रभावात् तदाहुरर्थचन्द्रिकायां जगद्गुरवः श्रीरघुवराचार्याः-'हे कौन्तेय ? कल्प क्षये ब्रह्मायुषोऽवसाने ब्रह्मादिस्थावरान्तानि सर्वाणिभूतानि मामिकां मत्तनुभूतां प्रकृतिं यान्ति प्राप्नुवन्ति नामरूपविभागानर्हावस्थाविशिष्टतमःशब्दाभिधेया प्रकृतिरत्र बोध्या सुवालश्रुत्या पृथिव्यप्सु प्रलीयते इत्यारभ्याक्षरं तमसि विलीय ते तमः परे देव एकीभवतीत्यन्तयाऽस्य विषयस्य स्पष्टं प्रतिपादितत्वात् कल्पादौ ब्रह्मण उत्पत्तिसमये सर्गारम्भकाले वा पुनस्तान्येव सर्वभूतानि यथापूर्वमासन् तथैवाहं विसृजामि धाता यथापूर्वमकल्पयत्-इतिश्रुतिरिति मच्छरीरभूताद् ब्रह्म णोऽपि सृष्टिर्मत्कारणिकैवेति भावः । ( ९।७ )

प्रलयकाले आत्मनोऽभावे परमेश्वरस्य तदुपादानत्वासंभवोऽकृताभ्यागम कृतप्रणाशादिदोषप्रसङ्गश्चस्यादत आत्मनित्यत्वमेवमन्तव्यम् । 'न जायते म्रियते वा विपश्चित्' ज्ञाज्ञौद्वावजावीशानीशौ' 'नित्योनित्यानाम्' प्रकृतिं पुरुषं चैव- विद्ध्यनादी उभावपि' इत्यादिश्रुतय आत्मनित्यत्वप्रतिपादकाः सन्तीत्यतो जीवो नित्य एव नत्वनित्य इति ।

एवं सोऽणुपरिमाणक एव न मध्यमो नापि व्यापकः । अन्यथा हृदयप्रदे शादुत्क्रमणगमनागमनादयः शास्त्रप्रतिपादितावाधिता भवेयुः । अयमाशयः- 'हृदिह्येवायमात्मा' इत्यादिश्रुत्या हृदये एव जीवस्यावस्थानं दर्शितम् । तथा- 'तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुतो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरदे शेभ्यः' इत्यादिना शरीरादुत्क्रमणं प्रतिपादितम् 'ये वै केचनास्माल्लोकात् प्रयान्ति

चन्द्रमसमेव ते सर्वेगच्छन्ति' इत्यादिना गमनम् । 'तस्माल्लोकान्पुरेत्यस्मैकोकाय कर्मणे' इत्यादिना सर्वदोषरहितशास्त्रेण प्रतिपादनादणुत्वमेव जीवस्य । मध्य मत्वे मरणसमये शरीराद्बहिर्गच्छतो जीवस्य बिलान्निस्सरतो विलेशयस्य दर्शन वद्दर्शनं कुर्यात् कश्चिन्नत्वेवं भवति । नवा व्यापकत्वं व्यापकत्वे आकाशवद्ग मनादिकं न स्यात्तस्मादणुः । अयमर्थः 'उत्क्रान्ति गत्यागतीनाम्' । 'वालाग्रशत भागस्य शतधाकल्पितस्य च ।' आराग्रमात्रो ह्यवरोपि दृष्टः' 'स्वरूपमणुमात्रं स्याज्ज्ञानानन्दैकलक्षणम्, त्रसरेणुप्रमाणास्तेरश्मिको विभूषिताः' इत्यादिना जीवाणुत्वमेव समर्थितं तस्मादणुजीव इति सूत्रश्रुतिस्थानन्दभाष्यादौ श्रीरघु वरीयवृत्तिविवरणे च प्रपञ्चित इति विशेषार्थिभिस्तत एवानुसन्धेयः ।

न नु जीवस्याणुत्वेऽणुत्वाद् हृदयमात्रेऽवस्थितस्य 'शिरसि मे वेदना पादे मे सुखादिकम्' इतिप्रतीतिसिद्धसकलशरीरगतसुखदुःखानुभवः कथमुपपद्येत ? न च जीवस्याऽणुत्वेऽपि तद्गुणधर्मभूतज्ञानस्य सकलशरीरव्यापनेन सुखाद्य नुभवः समर्थितः स्यादिति वाच्यम् गुणस्य गुणिदेशे एवावस्थाननियमेन हृदया तिरिक्ते ज्ञानगुणस्यानुपपत्तेरितिचेन्मैवम्, प्रदीपप्रभावत् तत्संभवात् । यथा प्रदी पादेगृहैककोणेऽवस्थितस्यापि तदीयप्रभासर्वत्रव्याप्ता संपूर्णगृहं प्रकाशयति, तथैव हृदयाद्येकदेशे स्थितस्यापि जीवस्य धर्मभूतज्ञानगुणः सर्वत्रव्याप्यस्थितः शिरः पादाद्यवच्छेदेन सुखंदुःखंचानुभावयति । न च गुणोगुणिदेशं विहाय नान्यत्रगच्छतीति नियमस्ततो ज्ञानस्य नान्यत्रगमनमिति वाच्यम् गन्धवदुपपत्ति संभवात् । यथा कुसुमे वर्तमानो गन्धोऽन्यत्रापि सुगन्धिं जनयति तथैवात्रापि । तदुक्तम्-'आदायवकुलगन्धानन्धीकुर्वन् पदे पदे भ्रमरान् । अयमेति मन्दः मन्दः कावेरीवारिपावनः पवनः ।' इति ।

न च तत्र कुसुमत्रसरेणुमादाय तत् स्थितगन्धमन्यत्राप्यनुभावयतीति वाच्यम् तथा सति कुसुमात् त्रसरेणोरपगमेकुसुमस्यसच्छिद्रत्वापातात् । यथा मणिसूर्यप्रदीपादीनामेकत्रावस्थितानामपि प्रभा सर्वत्र व्याप्ता भवन्ती सर्वानव भासयति, तथा जीवस्य हृदयप्रदेशेऽवस्थितस्यापि जैवीयधर्मभूतं ज्ञानं सर्वत्र देहे व्याप्ताभवतीति सर्वत्रशरीरे सुखदुःखाद्युपभोगस्य न कापि क्षतिरित्यर्थः । अयमर्थः-'गुणाद्वालोकवदिति ब्रह्मसूत्रे सूत्रकारेणानन्दभाष्यकारेण च प्रदर्शि



तः । यथैकदेशस्थितानां मणिप्रदीपप्रभृतीनामालोकोऽनेकदेशव्याप्तो दृष्टस्तथैव हृदये स्थितस्य जीवस्य ज्ञानं सकलशरीरं व्याप्यवर्तते, ज्ञातुर्जीवस्य प्रभास्थानी यज्ञानस्य स्वाश्रयादन्यत्रवर्तनं प्रदीपसूर्यादिप्रभावदेव संपद्यते इति । अत्रैदंपर्यं श्री रघुवरीयवृत्तिविवरणे जगद्गुरुश्रीरामानन्दाचार्यश्रीरामप्रपन्नाचार्यकृतेऽनुसन्धा तव्यम् । अनेनैव क्रमेण ज्ञानव्याप्त्या सर्वं भुङ्क्ते । अयमर्थो बृहदारण्यकेऽति विस्तरेण प्रतिपादितः । तथाहि-'प्रज्ञयावाचं समारुह्य वाचा सर्वाणि ना-मान्याप्नोति, प्रज्ञया घ्राणं समारुह्य घ्राणेन सर्वान् गन्धानाप्नोति 'प्रज्ञयाचक्षुः समारुह्य चक्षुषासर्वाणिरूपाण्याप्नोति' इत्यारभ्य 'प्रज्ञयाधियं सधारुह्यधिया वि ज्ञानं काममाप्नोति, इत्यादिप्रकरणेन । अर्थात्-यथा एकदेशेऽवस्थितानामपि प्रदीपादीनां प्रभा सर्वत्रव्याप्ताभवति तथैवैकत्रावस्थितस्य जीवस्य ज्ञानं सर्वत्र व्याप्तं भवतीति शरीरावच्छेदेन सुखाद्युपभोगे न कोपि बाधको भवति ।

तथाऽयं जीवोऽव्यक्तः । एतावताजडभिन्नत्वं कथितम् । यथा घटादिकं रूपस्पर्शादिमत्तया ज्ञायमानरूपादिग्राहकचक्षुरादिप्रमाणेन ग्राह्यं भवद् व्यक्त मिति न तथाऽयं जीवो घटादिपदार्थग्राहकचक्षुरादिप्रमाणेन गृहीतो भव-तीत्यव्यक्त इतिकथ्यते । न तु प्रमणागम्यत्वमव्यक्तत्वं तथासति गगनकुसुमकूर्म रोमादिवत् तुच्छत्वप्रसङ्गादपितु घटादिग्राहकेणागम्यत्वं तत्वम् । न चेष्टापत्तिः ? 'मनोमात्रस्यगोचरः' दृश्यते त्वग्र्ययाबुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः' 'ऐषोणुरात्मा चेतसावेदिव्यो यस्मिन् प्राणः पञ्चधा संविवेश' 'मनसैवेदमाप्तव्यम्' इत्यादिश्रुति विरोधप्रसङ्गात् । तस्माद् घटादिग्राहकबाह्येन्द्रियाग्राह्यत्वात् 'अव्यक्तोऽयंजी वः' । अव्यक्तोऽयमचिन्त्योऽय' मित्यादिस्मृत्याऽव्यक्तत्वस्य जीवे सिद्धेरतोघट-पटादिग्राहिचक्षुराद्यगम्यत्वमेवाव्यक्तमिति स्थितम् । तथाचानन्दभाष्यकाराः-'अ यमात्माऽव्यक्तो बाह्येन्द्रियागोचरोऽयमचिन्त्योऽचित्साजात्येनचिन्तयितुमयोग्यो ऽयमविकार्यश्चविकारानर्हश्च श्रुतिस्मृतिषूच्यते' इत्यादि (गी. २।२५) विस्त रस्तुभाष्यार्थचन्द्रिकातोऽनुसन्धेयः ।

यथायं जीवोऽव्यक्तस्तथैवाचिन्त्योऽपि । यद्यपि सर्वथा चिन्ताऽविषयत्व रूपाचिन्त्यत्वकथने, आत्मस्वरूपविषयकश्रवणमननोपासनादीनां शास्त्रोक्तानां वैयर्थ्यं स्यात् तथापि यतोऽयमचिद् विसजातीयस्ततएव सर्ववस्तुविसजाती

यत्वेन तत्तत्स्वभावयुक्ततया चिन्तयितुमयोग्यः । अर्थात्-अचित् सजातीयतया चिन्तयितुमयोग्यत्वमेवाचिन्त्यत्वम्, नतु सर्वथाऽचिन्त्यत्वं पूर्वोक्तदोषादर्थाच्छ्रवणादीनामनर्थकत्वप्रसङ्गात् ।

यथा जीवोऽव्यक्तोऽचिन्त्यश्च तथा निरवयवोऽपि, तत्रनिरवयवत्वमवयव समुदायानात्मकत्वम् 'विज्ञानमयो विज्ञानम्' 'विज्ञानघन' इत्यादिश्रुत्या जीवस्य ज्ञानानेकारतायाः प्रतिपादनावयवसमुदायात्मकोऽचिद्वन्नभति । अत एव निर्विकारः सर्वदा विकाररहितः । तत्र निर्विकारत्वमचिद्विकारमन्तरेणैकरूप तयाऽवस्थानरूपमेव 'अमृताक्षरंहरः' 'आत्माशुद्धोऽक्षरः' इत्यादिना अक्षर शब्दवस्तुत्वकथनेन क्षरणस्वभावकाचिद्वत् विकारित्वमन्तरेणैवैकरूपतयाऽवस्थानमिति ।

यतोऽयं जीवोयुक्तिशास्त्राभ्यामव्यक्ताचिन्त्यनिरवयवत्वाचिद् विसजातीयनिर्विकारित्वादिगुणकस्ततोव्यक्तचिन्त्यसावयवत्वसविकारित्वाभावात्' शस्त्रवह्निजलवायुग्रीष्मादिभिश्छेदनदहनक्लेदनशोषणादिमान् न भवति। व्यक्तत्वादिधर्मवतामेवान्यत्र छेदनादिक्रियान्वयित्वदर्शनेन तेषामेव छेदनभेदनादिको विकारो भवति, किन्तु विकारादिवर्जितजीवे ते छेदनादिका न पदमा दधतीति । शरीरेस्थितस्यापि जीवस्य छेदनादिक्रिया न भवन्तीति कथमित्थं चेदत्रक्रमः शस्त्राग्निजलादिका यदा छेदनदहनादिकं कुर्वन्ति तदा छेद्यादि तत्तद्वस्तूनि व्याप्य कुर्वन्ति, जीवात्मनः सर्वाचित्पदार्थव्यापकतया विकारिजडपदार्थापेक्षयाऽत्यन्तसूक्ष्मत्वात्, तेषां स्थूलानां व्याप्यानां व्यापकं सूक्ष्मात्मवस्तुं व्याप्य विकारयितुमयोग्यत्वात् । शस्त्राग्निजलादिप्रयुक्तछेदनाद्यर्होनैव भवतीति भावः । गीतायामपि यदस्यछेदनाद्ययोग्यत्वम्-

'नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥
अच्छेद्योऽयमदाहयोयमक्लेद्योऽशोष्य एव च ।
नित्यः सर्वगतः स्थाणुरचलोयं सनातनः' इति ॥

अथ यथोक्तगुणको जीवो मध्यमपरिमाणोव्यापकपरिमाणोऽणुपरिमाणो वेति संशये श्वेताम्बरा जैना आहुर्यदयं जीवोमध्यमपरिमाणोऽर्थात् शरीर



परिमाण एव कर्मवशात् यदा यादृशमल्पं वा बृहद् वा शरीरमाप्नोति तत्रात्मावयवानां संकोचविकाशवत्तया तत्तच्छरीरं प्रविशत् तत्तुल्यपरिमाणको भवति । न चैवं जीवस्य सावयवत्वे तस्यानित्यत्वेन शरीरान्तरेण भोगमोक्षादिको न स्यादितिवाच्यम् पर्यायरूपेणानित्यत्वेपिद्रव्यरूपेण नित्यतया समुदीरितदोषाणामनवकाशात् । यत् सावयवं तदनित्यमिति व्याप्तेरनभ्युपगमात् । प्रदीपादारभ्याकाशादिसर्ववस्तुनि द्रव्यपर्यायाभ्यां नित्यत्वानित्यत्वस्वीकर्तृ अनेकान्तवादे सर्व सामञ्जस्येनादोषात् । तदुक्तं स्याद्वादमञ्जर्याम्-

'आदीपमाव्योमसमस्वभावं स्याद्वादमुद्रानतिभेदिवस्तु । तन्नित्यमेवैकमनित्यमन्यदितित्वदाज्ञा द्विषतां प्रलापाः ॥' इति । अर्थात् जैना हि 'पादे मे वेदाना शिरसि सुखमित्यादिक्रमेण पादादारभ्य शिरोन्तशरीरे युगपज्जायमानः सुखाद्यनुभवो देहपरिमाणमन्तरेण नसंभवति, तस्मादात्मा स्वकर्मानुकूल्येन संप्राप्तगजाश्वपुत्तिकादिदेहानां परिमाणानुरूपं परिणम्य तत्तद्देहपरिमाणो भवतीति । तस्मान्मध्यमदेहपरिमाण एव न व्यापको नवाव्यापक इति जैनमताशयः । तन्न युक्तम् 'क्षरं प्रधानममृताक्षरो हरः' इतिजीवात्मनो निर्विकारत्वप्रतिपादकश्रुतिविरोधात् । तस्मात् शरीरपरिमाणो जीव इति पक्षो जीव निर्विकारत्वप्रतिपादकश्रुतिविरोधेन सर्वथैव त्याज्यम् । अर्थात् देहपरिमाणत्वे सविकारत्वेन निर्विकारता प्रतिपादकश्रुतिविरोधोभवत्येवेति न किन्तु 'एषोणुरात्मा चेतसावेदितव्यः' बालाग्रशतभागस्य शतधा कल्पितस्य चेत्यादिकाणुपरिमाणत्वप्रतिपादकश्रुत्यन्तरविरोधोऽपि तन्मतेऽस्ति । एतन्मते विशेष दोष दर्शनेच्छुभिर्ब्रह्मसूत्रीयैकस्मिन्नसम्भवाधिधरणस्थस्यानन्दभाष्यमनुसंधेयमत्र ग्रन्थगौरवभयान्न प्रपञ्चितः ।

एतादृशजीवेज्ञानाश्रयत्वम् । तदाहुराचार्या 'एष द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्त्ता विज्ञानात्मापुरुषः' इति श्रुतिप्रामाण्याज्ज्ञानाश्रमोऽपि जीवःसिद्धान्ते ज्ञानरूपतयाऽङ्गीकृतोऽत एव स ईश्वरवत्प्रत्यक्यदवाच्यः' (श्रौतार्थसङ्ग्रहः) ज्ञानाश्रयत्वंनाम ज्ञानास्याधारत्वम् । अर्थात् ज्ञाननिष्ठाधेयता निरूपिताधिकरणतावत्वमेव । ज्ञानंनाम स्वकीयसत्तामात्रेण स्वाश्रयस्य स्वपर व्यवहारासाधारणकारणात्मधर्मः, स्वपरव्यवसायिज्ञानमितिलक्षणान्तरं ज्ञानस्ये

ति । जीवस्य ज्ञानाधारत्वं कुण्डवदरवन्नाधाराधेयत्वं किन्तु यथा प्रदीपतदीय प्रभयोर्द्वयोस्तेजो द्रव्यत्वेऽपि (निविडतेजोद्रव्यं प्रदीपः, प्रविरलतेजो द्रव्यं प्रभा) तयोर्द्वयोः द्रव्यत्वेन समानत्वेपि प्रदीपस्य सूर्यस्यैव प्रभाश्रयत्वं तथैव जीवस्य ज्ञानरूपत्वेपि धर्मभूतज्ञानस्य पृथक्सिद्ध्यर्हत्वमेवाधारत्वम् । जीवो हि ज्ञानरूपः स च धर्मीभूतःज्ञानं तु तस्य धर्मः, ततश्च जीवाज्ज्ञानरूपाद्धर्मभूत ज्ञानस्यपार्थक्येन स्थित्युपलंभौ न स्याताम्, तथा तदाधारत्वमेव ज्ञानाश्रयत्वं जीवस्येति ।

'अथ यो वेदेदं जिघ्राणीति स आत्मा' अर्थात् गन्धविषयकघ्राणकरण कज्ञानवानहमिति यो वेद विजानाति स आत्मा जीवो ज्ञाता अत्र घ्राणादिकरणेन जायमानमात्मसमवेतं गन्धप्रकाशकं ज्ञानं वृत्तिज्ञानापरपर्यायं तत्धर्मभूतज्ञानम्, एतादृशघ्राणजादिज्ञानस्याश्रयो द्रव्यं धर्मिभूतज्ञानम् अस्य धर्मभूतज्ञानस्य जीव व्यतिरेकेण स्थितिर्वा उपलंभो वा न संभवति, किन्तु यदास्थित्युपलंभौ अत्र तदा धर्मितज्ज्ञानस्यसत्वमवश्यमेव, अतः प्रदीपतदीयप्रभयोरिव पृथक् स्थित्यु पलंभौ न भवत इति । अवधेयमत्र जीवःस्वार्थस्वयंप्रकाशद्रव्यो धर्मभूतज्ञानं तु परार्थस्वयंप्रकाशद्रव्यस्ततश्च परस्परभिन्नावेव । तदादुराचार्याः-

अणुज्ञानस्वरूपात्मा ज्ञानाश्रयमतःश्रुतौ ।
धर्मभूतं विभुज्ञानं जीवभिन्नं ततो मतम् ॥२६॥ इति॥

एवं 'मनसैवैतान् कामान् पश्यन्रमते' न पश्यो मृत्युं पश्यति' विज्ञातारमयं केन विजानीयात् 'एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मापुरुषः' 'एवमेवास्य परिद्रष्टुरिमाः षोडशकलाः पुरुषायणः' इत्यादिना जीवस्य ज्ञातृत्वं सिद्ध्यतीति ।

अयं ज्ञानरूपो जीवो ज्ञानमात्रस्वरूपो न तु ज्ञानस्याश्रयः, तस्य ज्ञान स्वरूपतामात्रस्वीकारादैहिकपारलौकिकलौकिकवैदिकसर्वव्यवारोपपत्तौ ज्ञाना श्रयत्वकल्पनानुपपत्तेः । अर्थाज्जीवातिरिक्तं धर्मभूतज्ञानमन्यत् धर्मिभूतज्ञानं च तदन्यमिति तयोराश्रयाश्रयिभावो भवतीति कल्पनं मुधैवेति बोद्धादिमतं तन्न युक्तियुक्तम् । तथाहि-यद्यात्माज्ञानमात्ररूपः स्यान्नतु ज्ञानाश्रयस्तदा 'अहंज्ञान मिति' सर्वोपि विजानीयात्, न तु 'ज्ञानवानहम्' इतिकोपिप्रतीयेत ।अर्थात् यदि



आत्मा ज्ञानाश्रयत्वमन्तरेण शुद्धज्ञानस्वरूप एव भवेत्तदा' अहं ज्ञानमित्येव-मात्मानं जानीयात् न तु अहं घटादिकं जानामीति ज्ञातृत्वेन विजानीयात्, विजानाति च सर्वोपिज्ञातृतयैव । तत्र घटादिकमहं जानामीति कथिते घटादिविषयक ज्ञानस्यास्ति कश्चिदाश्रय इति ज्ञायते । अहं जानामीति बुद्धौ वस्तुत्रयं भासते, कर्ता कर्म तथाज्ञानरूपो न च क्रियाकर्तारमन्तरेणावस्थातुं शक्नोतीत्यवश्यं ज्ञानस्याश्रयः कश्चिदस्तीति प्रतीयते, इति तत्र ज्ञातृत्वं प्रत्यक्षप्रमाणेनाहं सुखादिकं विजानामीत्यादिना सिद्ध्यति । एवमात्मनो ज्ञातृत्वकथनेन ज्ञानक्रियांप्रति आश्रयत्वकर्तृत्वकथनेनार्थतः क्रियामात्रंप्रति कर्तृत्वं तथाभोगक्रियांप्रति-कर्तृत्वरूपं भोक्तृत्वमपिसमर्थितमर्थाद्यो जीवो ज्ञाता स कर्ताभोक्ताऽपि भवति आत्मनः कर्तृत्वभोक्तृत्वानभ्युपगमे 'स्वर्गकामोयजेत' इत्यादिविधिनिषेध-शास्त्राणामानर्थक्यं स्यात्, तस्य कर्तृत्वानभ्युपगमे यागादौ कः स्वर्गादिफलभोगेच्छया प्रवृत्तिंकुर्यात् प्रयत्नस्यात्ममात्रसमवेतत्वात्, नहि चेतनव्यतिरिक्ते कृतेः प्रवृत्तेर्वा संभवस्तस्माज्जीवः कर्ता भोक्ता चापि ज्ञातेवभवतीतिभावः ।

अत्राह सांख्यः, आत्मनः कर्तृत्वमित्युपश्रुत्य । एतन्मतेसत्वादिगुणानां साम्यावस्थैव प्रकृतिः । तस्या एव कर्तृत्वं नात्मनः । तथा च काठकीयप्रकरणे कथितम्-

'न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न बभूव कश्चित् । अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे' इत्यादिना प्रकरणेन ज्ञानादि क्रियासु जीवस्य कर्तृत्वनिषेधात् । तथा 'नान्यं गुणेभ्यः कर्तारं यदाद्रष्टानुपष्यति' कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते 'पुरुषः सुखदुःखानां भोक्तृत्वे हेतुः रुच्यते' इत्यादिना भगवता श्रीकृष्णेन स्वयमेव प्रतिपादितम् । ततश्चाध्यात्मशास्त्रेषु जीवभोक्तृत्वप्रकृतिकर्तृत्वकथनात्, कर्तृत्वं प्रकृतेरेव जीवस्य नेति तन्न युक्तम्-यतो यदि गुणानामेव कर्तृत्वं न त्वात्मनस्तदा जीवस्य विधिनिषेधशास्त्राधिकारितया शास्त्रविहितकर्मणामनुष्ठानेन तज्जनितसुखादिफलमोक्तृत्वं जीवस्य न स्यात् । यदि कदाचिच्चेतनः कर्ता न स्यात्तदाशास्त्रवैयर्थ्यमापतेत् । तदुक्तम्-ब्रह्मसूत्रे 'कर्ता शास्त्रार्थवत्वा (२।३।३४)' दिति । विवेचितं च प्रकृतसूत्रं जगद्गुरुश्रीरामानन्दाचार्यश्रीरघुवराचार्यमहाभागेन 'आत्मनः कर्तृत्वमस्ति न वेति

शंसयः 'अहङ्कारविमूढात्मा कर्ताहमितिमन्यते (गी.३।२७) 'नान्यं गुणेभ्यः कर्तारम्' इत्यादिवचनैः कर्तृत्वं नास्तीतिपूर्वः पक्षः । अत्राभिधीयते-यजेत' 'उपासीत' इत्यादिशास्त्राणामर्थवत्वादात्मा कर्त्तैव । नात्मभिन्नानां गुणानां तत्सम्भवत्यचेतनत्वात्' इति । 'स्वर्गकामो यजेत' 'मुमुक्षुरुपासीत' इति स्वर्गमोक्षादिफलानां भोक्ता हि कर्तृत्वेन शास्त्रद्वारानियुज्यते, ततः यो हि फल भोक्ता स एव कर्ता इति । यदि कदाचिदचेतनायाः प्रकृतेरेव कर्तृत्वं भवेत्तदा अचेतनं लक्ष्यीकृत्य विधिशास्त्रप्रवृत्तिर्न संभवेत् । शासनादेव शास्त्रं शासनं च प्रवर्तनं तच्च बोधोत्पादनद्वारेण, ततश्चाचेतनस्य बोधोत्पादनं न भवत्यचेत नत्वादेव । अतः 'स्वर्गकामो यजेत' इत्यादिशास्त्राणामर्थवत्वाय भोक्तुश्चेत नस्यैव कर्तृत्वं भवति न त्वचेतनायाः प्रकृतेः, तस्मात् सांख्यमतम् न समीचीन मिति साम्प्रदायिकाः । तदिदं कर्तृत्वं जीवस्य सांसारिकप्रवृत्तिषु न स्वरूपप्रयुक्तं किन्तु सत्वरजस्तमसां संसर्गेण जायमानमौपाधिकमेव । तदुक्तम् 'प्रकृतेः क्रियमाणानि गुणैः कर्माणिसर्वशः । अहंकारविमुढात्मा कर्ताहमिति मन्यते' इति । अत्रत्यं तत्वं कर्ताशास्त्रार्थवत्वादिति सूत्रे आनन्दभाष्यकारोविस्तारपूर्वकम कथयत् । एवं सांख्यमतं प्रतिक्षिप्य जीवात्मनः कर्तृत्वादिकमसाधयदिति तत्रैवानुसन्धेयो जीवस्यैतादृशं कर्तृत्वं कार्यमात्रंप्रति स्वाधीनं पराधीनं वेति संशये न स्वाधीनमपितु परमेश्वराधीनमेव । 'परात्तु तच्छुतेः' इतिसूत्रेणात्मनः कर्तृत्वं पराधीनमिति समर्थनात् 'तस्माज्जीमकर्तृत्वं परपुरुषायत्तमेव' इतिभाष्यकारेणानुमोदनाच्च । तथा शास्त्रार्थवत्वादयं कर्तृत्वमात्मधर्म इत्यवश्यंमन्तव्यम् । तस्य धर्मभूतानां ज्ञानेच्छाकृतीनां परमेश्वराधीनत्वात् तेषां ज्ञानादिप्रयत्नान्तानां परमेश्वरज्ञानमन्तरेण क्रियाजनकत्वासंभवेन जीवस्य कर्तृत्वमीश्वराधीनम् । ननु यदि जीवस्य कर्तृत्वं परमेश्वराधीनं तदा स्वर्गकामोयजेत' ' न कलञ्जं भक्षयेत्' इत्यादिविधिनिषेधवचनानि निरर्थकान्येवभवेयुरितिचेन्न जीवकृतपुण्यपापम-पेक्ष्य परमेश्वरः कारयतीति स्वीकारेणादोषात् । तदाहुराचार्याः-

'विकरञ्जारामोदयाब्धिस्तथात्वे दयाशून्यतां पक्षपातञ्च नैति ।
प्रकारे विकारस्तथा चित्रसृष्टौ च हेतुर्यतः प्रणिनां प्राच्यकर्म ॥'

(श्रौतसिद्धान्तबिन्दुः)



एतत्तत्वं 'कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः' (२।३।४२) इतिसूत्रे विस्तरेण प्रतिपादितमानन्दाभाष्यकारेण । अयंभावः-विधिनिषेध-वाक्यानां वैयर्थ्यं मा भवतु तदर्थं चेतनजीवकृतप्रथमं प्रयत्नमपेक्ष्यैव परमेश्वरो जीवं प्रवर्तयति। तदित्थम्-सामान्यतश्चेतनजीवानां ज्ञातृत्वकर्तृत्वं स्वभावत्वेन सामान्य रूपेणप्रवृत्तिनिवृत्तियोग्यताविद्यते एव, जीवस्यैतादृशस्वरूपनिर्वाहाय परमेश्वरो जीवस्यान्तरात्मरूपेणावतिष्ठते, ततश्च परमेश्वरप्रदत्तस्वरूपशक्तिश्चेतनो जीव स्तत्तत्पदार्थेषु समुत्पन्नज्ञानचिकीर्षाप्रयत्नो भवति, तत्रमध्यस्थत्वादुदासीन इव विद्यमानः परमात्मा श्रीसीतानाथस्तेषांपूर्वकालिकवासनानुरूपं विधिनिषेधप्र-वृत्तावनुमत्यनादराभ्यां युक्तविहितेष्वनुग्रहं निषिद्धकर्मसु च निग्रहं कुर्वन्, अनुग्रहरूपपुण्यस्यफलं सुखात्मकं निग्रहलक्षणाशुभपापस्य च फलं दुःखं तत्तज्जीवेभ्यः प्रयच्छतीति । अथैवं 'एष एव साधुकर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषति एष एवासाधुकर्मकारयति तं यमधो निनीषति' इत्यादि नायमूर्ध्वं नेतुमिच्छति तं साधुकर्मकारयति, एवमसाधुकर्मकारयति यमधोनेतु मिच्छति तत्कथमुपपद्यते इति चेदत्रोच्यते भावानवबोधात्, अयंभावः-नेदं श्रुति वचनं सर्वसाधारणम्, किन्तु योऽधिकारिविशेषः परमेश्वरश्रीसीतानाथविष-येऽत्यानुकूल्ये व्यवस्थितो भवन्प्रवर्वते तत्तत्कार्ये तादृशाधिकारिविशेषस्य पुरुषस्य परमेश्वरः स्वयमेव स्वकीयप्राप्तिसाधनेऽतिकल्याणमयकर्मसु अभिरुचि मुत्पादयति । यस्तु भगवतः प्रातिकूल्ये व्यवस्थितः सन् प्रवर्तते तस्य परमेश्वर प्रतिकूलाचारवतः स्वप्राप्तिविरोधिन्यधोसाधननिन्दितकर्मणि आसक्तिं जनयति, तेन सोऽधोगतिं प्राप्नोतीति श्रुतेरभिप्रायः । अमुं श्रुत्यर्थं स्वयं भगवाननुमो-दयामास-

अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते ।
इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥
तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥
तेषामेवानुकंपार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेनभास्वता ॥

इत्यारभ्य 'मामात्मपरदेहेषु प्रद्विषन्तोऽनसूयका' इतिप्रकरणेन विपरीत कारिणां प्रतिकूलत्वातिशयं कथयित्वा-'तानहं द्विषतः क्रूरान्संसारेषु नराधमान्। क्षिपाम्यजस्रमशुभामासुरीष्वेवयोनिषु ॥' इत्यन्त प्रकरणेनाशुभकारिणा मधोगतिमुक्तवान् । अतो भगवतः परमेश्वरस्यानुमोदकत्वं सर्वसाधारणप्रयोज कत्वं न सर्वसाधारणमपितु विशेषविषयकत्वम् । एतत्सर्वं 'कृतप्रयत्नापेक्षस्तु ' इत्यादिब्रह्मसूत्रव्याख्यानावसरे आनन्दभाष्यकारेण प्रपञ्चितमितिदिक् ।

अथैवं यदि जीवात्मा ज्ञानाश्रयो ज्ञानगुणकोऽहं जानामीत्यादिप्रतीत्यन्य थाऽनुपपत्त्यास्वीक्रियते तदा 'यो विज्ञाने तिष्ठन्' 'विज्ञानमयः' विज्ञानं यज्ञं तनुते कर्माणि कुरुतेपि च 'विज्ञानघनः ज्ञानानन्दमयोऽमलः' ज्ञानस्वरूपमत्यन्त निर्मलं परमार्थतः ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः ।' विज्ञानं परमार्थो हि द्वैतिनोऽतथ्यदर्शिनः' इत्याद्यनेकस्थले जीवस्य ज्ञानरूपत्वकथनं कथं सङ्गच्छेत इति चेदत्रोच्यते, यथा ज्ञानस्य स्वाश्रयंप्रतिस्वप्रकाशत्वं तथात्मनोपि स्वं प्रति स्वप्रकाशत्वं ज्ञाननिरपेक्षमेव, ज्ञानस्य ज्ञानाश्रयसारभूतत्वेन प्रधानगुणतया स्वरूपानुबन्धित्वेन स्वरूपनिरूपकधर्मत्वात्तथाव्यपदेशः । अयमर्थ-यथा ज्ञानं ज्ञानान्तरनिरपेक्षमेव प्रकाशते तथाऽत्मापि ज्ञाननिरपेक्षतयैव प्रतिभासते ज्ञान रूपत्वात् । आत्मा संविद्रूपः संवित्कर्मतामन्तरेण प्रकाशमानत्वात्संवेदनवदित्य नुनानेनात्मनः संविद्रूपत्वं सिद्ध्यति । तथा 'अत्रायं पुरुषः स्वयं प्रकाशते' इत्या दिश्रुत्यापि तस्य तथात्वं सिद्ध्यति । ज्ञानस्यात्मस्वरूपनिरूपकधर्मत्वेन, तेन ज्ञानेन विनाऽत्मनिरूपणासंभवेन ज्ञानाश्रयत्वकथनम् । अयमर्थः-'तद्गुणसा रत्वात्तुतद्व्यपदेशः प्राज्ञवत् (२।३।३०)' यावदात्मभावित्वाच्च न दोषस्तथा दर्शना' (२।३।३१) दित्यादिसूत्रेभाष्यकारेणस्पष्टीकृतः ।

यथा प्रदीपादिकं ज्ञानं च प्रदीपान्तरेणैव प्रथमानः स्वयं प्रकाश इति ज्ञानप्रकाशे ज्ञानान्तरापेक्षा न भवतीति ज्ञानं स्वप्रकाशमित्येवं जीवात्मापि स्वप्र काशे स्वेतरज्ञानान्तरमन्तरेणैव प्रकाशमानत्वात्स्वयं प्रकाशः । ज्ञानमात्मनः स्व रूपनिरूपणधर्मोऽर्थात् प्रधानगुणस्तेन निरूपिता भवतीत्यतः ज्ञानाश्रयोपि । विशेषविवरणमन्यत्रद्रष्टव्यम् । एवमयं जीवात्मा परमेश्वरनियाम्यः । 'य आत्मनि तिष्ठन् य आत्मानमन्तरो यमयति स ते आत्माऽन्तर्यामि अमृतः' अर्थात् य



सर्वशक्तिमान् सर्वेश्वरः, आत्मनि जीवे तिष्ठन् विद्यमान आत्मानं जीवमन्तरो यमयति तदुपरि नियन्त्रणं नियमनं करोति तादृशः सर्वस्यान्तर्यामी परमेश्वरोऽमृत स्वरूपतेजो वात्मेति । इत्यादिश्रुत्या नियमनक्रियायाः कर्तृत्वं परमेश्वरे सिद्ध्यति तथा नियमनक्रियाकर्मत्वस्य जीवादौ सत्वेन जीवो नियाम्य इति कथ्यते । तत्र नियाम्यत्वं परमेश्वरबुद्ध्यधीनसकलव्यापारवत्वरूपमेव । ईश्वरः शरीरी जीवश्च शरीरमिमि यथा जडदेवदत्तादिशरीरे या काचनक्रिया भवन्ति ताः सर्वा अपि जीवबुद्ध्यधीना न तु शरीराधीनाः, कुतः शरीरस्य जडत्वात् जडे च स्वातन्त्र्येण प्रवृत्त्यादेरभावात् तथैव शरीररूपजीवे याः काचित् क्रिया भवन्ति सर्वाऽपि शरीरीरूपपरमेश्वरबुद्ध्यधीनैवेति क्रमेण जीवे नियाम्यत्वं परमेश्वरेसर्वनियामकत्वञ्च सिद्ध्यतीति ज्ञेयम् ।

'एष सेतुर्विधरणः' 'तत्सर्वं प्रतिष्ठितम्' एकमेवचास्मिन्नात्मनि सर्वाणि भूतानि सर्वे एवात्मानः समर्पिताः' एतस्य वा अक्षरस्य प्रशासने गार्गि ? सूर्या चन्द्रमसौ विधृतौतिष्ठतः' इत्यादिवेदान्तेषु तत्तत्स्थले परमेश्वरस्य धारकत्वं तदन्यस्य चेतनाचेतनस्य च धार्यत्वं कथितम् । तत्र धारणं सर्वेषां परमेश्वरे णार्थात् धारकक्रियायाः कर्ता परमेश्वरः तथा तादृशक्रियायाः कर्मीभूतं वस्तुमात्रं धार्यमिति कथितम् । तत्र परमेश्वरस्वरूपसङ्कल्पाभावप्रयुक्तस्वसत्ताव्यतिरेक (अभाव) योग्यत्वमेव धार्यत्वमित्यवधार्यलक्षणम् । तत्र केचनेत्थं लक्षणं लक्ष्ये संगमयन्ति । तथाहि-एष सेतुर्विधरणम्' इत्यारभ्य 'सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' इत्यत्रकथितप्रकरणेन परमेश्वरस्य सकलचेतनानामपिधारकत्वात्, एतदात्मवस्तुनोऽचेतनचेतनानां धार्यत्वात्, स्वस्य नियमेनधारकस्य सत्ताहेतोस्त स्य दिव्यात्मस्वरूपस्य एतत्स्वरूपाश्रत्वस्य सत्तानुवृत्तिरूपस्थितेश्चहेतोस्तस्य नित्येच्छाकार्यस्य नित्यसङ्कल्पस्य च व्यतिरेके (अभावे) स्वकीयसत्ताहानिसंभ वार्हत्वमिति । अर्थात्, यदीयस्वरूपसंकल्पाभावे यस्यसत्वहानिस्तद्धार्य्यमिति फलितोर्थः, यथा जीवस्यस्वरूपसङ्कल्पयोरभावे जैवीयशरीरस्य सत्वमेव निवृत्तं भवति, इति जीवो धारकः शरीरस्य धार्यञ्च शरीरम्, अर्थात् यदभावप्रयुक्तयद भावस्तद्धार्यम्, यथा द्रव्यस्वरूपाभावे तदीयगुणक्रिययोरभाव एव जायते साश्रयस्याश्रयमन्तरेणावस्थानासंभवात्' इति तत्र यथागुणादिकं धार्यम्, द्रव्यं

च धारकम्, तथैव प्रकृतपरमेश्वरसंकल्पादिमन्तरेण चेतनाचेतनपदार्थानामवस्थानासंभवात् पृथिव्यादिकं सर्वं चेतनाचेतनधार्यम्, परमेश्वरश्च धारक इत्येवं प्रकरणेन श्रुत्यनुमोदितं धार्यत्वं विवेचितं-

'सर्वस्याधारभूतौ च त्वावामेव हि मारुते ।
स्वे महिम्नि स्थितावावामन्याधारो न चावयोः' ॥१४॥

( वशिष्ठसंहिता ) इत्यादिरूपेण सर्वेश्वरी श्रीसीतापोदिष्टप्रकारेण । एवमेवान्यत्रापि-

द्यौः सचन्द्रार्कनक्षत्रा खं दिशो भूर्महोदधिः ।
वासुदेवस्य वीर्येण विधृतानि महात्मनः ॥'

इत्यादिना विस्तरेण प्रतिपादितम् विस्तरभयान्नात्र विविच्यते विशेषजिघृक्षुभिः स्वयमेव विवेचनीयमितिदिक् ।

卐 अथशेषशेषित्वनिरूपणम् 卐

तत्रान्तर्यामिप्रकरणप्रतिपादितपृथिव्यादिकसलचेतनाचेतनपदार्थानां परमेश्वरशरीरतया शेषत्वम्, तथा सर्वशरीरपरमेश्वरः शेषीति यथा देवादिशरीरं देवशरीरावच्छिन्नचेतनस्य शरीरं भवत् तादृशचेतनस्य शेषरूपं तादृशदेवचेतनं जीवः शरीरी शेषी भवति, तथा सर्वशरीरकस्य भगवतः श्रीरामस्य शरीररूपत्वेन चेतनाचेतनपदार्था भगवतः शरीररूपत्वात्, शेषा भगवांश्च शेषीति । अनुगतलक्षणं तु यस्य वस्तुनः परगतातिशयाधानेच्छयैवोपादेयत्वस्वरूपं भवेत्स शेषः तथा यदर्थमुपादेयता स शेषीति 'स्वामीन् ते शेषभूतोऽहं भोग्यस्ते रक्ष्य एव च । अकिञ्चनोऽनन्योपायस्त्वत्कैङ्कर्यैकभोग्यकः ॥ इतिश्रीरामप्रपत्तौ जगद्गुरुश्रीअग्रदेवाचार्यास्तथा 'शेषभूतं जगद्यस्य चेतनाचेतनात्मकम् । ब्रह्मणस्तस्य रामस्य ध्यानं कल्पतरुर्नृणाम्, इति च ध्यानकल्पतरौ जगद्गुरुश्रीयोगानन्दाचार्यप्रभृति पूर्वाचार्यैः प्रतिपादितम् । अर्थात् शेषत्वं नाम स्रक् चन्दनवनिताकुसुमादयादिवत्, इष्टविनियोगार्हत्वमेव । तत्र स्रगादिपदार्थानां स्वार्थता न भवति जडत्वात् किन्तु चन्दनादिलेपं कुर्वतामेवोपयोगो भवति चेतनत्वात्, स्वार्थं चन्दनादीनामुपयोगं कुर्वतः स्वाभिमतेभ्योपि ददातीति चन्दनादीनां यथेष्टविनियोगार्हता भवत्येव । तथा जीवस्य चेतनत्वेपि स्वकीयप्रयोजनं न भवति,



किन्तु स्वस्य स्वरूपस्वभाववैलक्षण्यादिभिः सर्वैरपि शेषिण एवेश्वरस्यातिशयकरत्वं भवति, इतिशेषिणंप्रति यथेष्टविनियोगार्हत्वरूपं शेषत्वम् । तदत्राभियुक्ताः-

'यथेष्टं विनियोगार्हः शेषः शब्देन कथ्यते ।
ईश्वरेण जगत्सर्वं यथेष्टं विनियुज्जते ॥'

इत्यादि । एवमीश्वरविषये चेतनाचेतनस्य शेषत्वविषये

'परवानस्मि काकुत्स्थ त्वयि वर्षशतं स्थिते ।
दासभूताः स्वतः सर्वे ह्यात्मनः परमात्मनः ॥
नान्यथा लक्षणं तेषां बन्धे मोक्षे तथैव च ।
आत्मदास्यं हरेः स्वाम्यं स्वभावं च सदास्मर ॥'

इत्यादिश्रुतिस्मृत्यादिवचनैः शेषशेषिलक्षणं प्रतिपादितं यत्र तत्रेति । अयंभावः-क्वचित्कस्यचित्कश्चिज्जडपदार्थोपि शेषो भवति गृहारामादिः, क्वचिज्जीवोऽपि शेषो भवति परमेश्वरस्य । परन्तु अनयोरेतावान् भेदो यत् प्राथमिकशेषो भवन् पृथक् सिद्ध्यर्हो भवति, अर्थात् सहोपलंभनियममन्तरेण स्वातंत्र्येण गृहीतो भवति, जीवस्तु परमेश्वरान्न पार्थक्येन गृहीतो भवति, अर्थात् पृथक् सिद्ध्यनर्ह एव भवन् परमेश्वरस्य शेषो भवति । यद्यपि द्वयोरपि शेषत्वं तथाप्येकस्य पृथक् सिद्ध्यर्हत्वमपरस्य तु पृथक् सिद्ध्यनर्हत्वमिति विशेषतोऽत्र सांप्रदायिकपूर्वाचार्यादिप्रबन्धेभ्योद्रष्ठव्यः विस्तरभयात् संक्षेपः प्रकृते कृत इति शम् ।

ज्ञातृज्ञानगुणकभगवच्छेषरूपमात्मस्वरूपं त्रिविधं बद्धमुक्तनित्यभेदात् 'एतेन जीवानां बद्धमुक्तनित्यभेदेन त्रैविध्यमपि दर्शितं भवति' ( श्रीरामानन्दभाष्यम् १।१।१४ ) इत्याचार्योक्तेः । तत्र तिलतैलवद् वह्नि-अयोगोलकवत् अविविक्तसत्वादिगुणत्रयरूपानादिकालिकपरमेश्वरमाययातिरस्कृतस्वरूपा अनादिकालिकाविद्योपार्जितशुभाशुभरूपकप्रतिबद्धस्वरूपस्तत्पुण्यपापलक्षणतत्तत्कर्मानुकूलानेकविलक्षणदेव-मनुष्य-तिर्यक् स्थावरशरीरविशेषे कृतप्रवेशास्तादृशतादृशशरीरे विशेषेष्वनादिकालात्कृताहंबुद्धयस्तथादेहसंबन्धि-इन्द्रियप्राणमनः प्रभृतिकान्तरवस्तुषु तथा पुत्रकलत्रधनधान्यपशुप्रभृतिषु संपा

दितममत्वज्ञानाः, अज्ञानवलेनैहिकामुष्मिककर्मकृत्वा तत्तत्कर्मणां विपाककाले सुखदुःखादिफलमास्वादयन्तो वर्तमाना जीवाः सांसारिका बद्धा इति कथ्यन्ते। पुनश्च पूर्वकृतकर्मणः फलभोगकाले शरीरवाङ्मनोभिः शुभं वाऽशुभं वा कर्म कृत्वा तद्देहावसाने तत्तद्देहकृतकर्मणः फलोपभोगाय शरीराच्छरीरान्तरं प्राप्नुवन्तः संसारचक्रं नातिवर्तन्ते नदीस्रोतवत् सर्वदैव-

'कुर्वते कर्मभोगाय कर्म कर्तुञ्च भुञ्जते।

नद्याः कीटा इवावर्तादावर्तान्तरमाशु ते॥

व्रजन्तो जन्मनो जन्म लभन्ते नैव निर्वृतिम्'

एवं प्रकारेण संसारचक्रे परिभ्रमन्तो जीवराशिबद्धा जीवा इति कथ्यन्ते। तावदेवैतेषामेतादृशं बन्धनम् यावद् भगवत्कृपा तेषामुपरि न जायते संजात परमेश्वरकृपाः झटिति संसारं परित्यज्य स्वस्थाः कृतकृत्याः साकेतमधिगत्य भगवत् कैङ्कर्य्यं कुर्वन्तोऽवतिष्ठन्ते। अर्थात् कर्मफलमुपभुञ्जाना यावत् कर्म संसारे वसन्तो जीवा बद्धाः संसारिणः कथ्यन्ते इतिप्रथमजीवप्रकारः। 'तत्रानादिकालीनस्वनियामकपुण्यपापात्मककर्मानुगुणजनिनिधनत्वादिधर्ममापन्ना आब्रह्मकीटादयो जीवा बद्धाः' (श्रौतार्थसङ्ग्रहः) इत्याचार्योक्तेः।

मुक्तजीवास्तु ते ये सांसारिकविषयस्यानित्यतां क्षणिकतां चागमोपपत्तिभ्यां विचार्य्य निवृत्तैषणाः भगवतः श्रीसीतानाथस्य चरणसेवामेव-बहुमन्यमानाः फलानभिसन्धानपूर्वकस्वाश्रमवर्णोचितकर्मणा मोक्षप्रतिबन्धा शुभकर्मविनाश्यसञ्जाततत्वज्ञानाः भक्तिप्रपत्तिभ्यां संप्राप्तभगवत् कृपास्तदनुकम्पया संसारं सांसारिकतापं च विधूय संप्राप्तसाकेताः कृतकृत्या भगवत्कैङ्कर्य्यं कुर्वाणा विमुक्तबन्धना मुक्ता इति कथ्यन्ते। तदाहुर्जगद्गुरुश्रीटीलाचार्याःश्रीरामानन्दवेदान्तसारे-

'रामब्रह्मनुकम्पातः पुण्यात्सतामनुग्रहात्।

मुमुक्षाजायते भव्या जीवस्य हृदये शुचौ।

तदा सत्सङ्गतिं कुर्वन् गुरुंचासौ प्रपद्यते।

रामपादप्रपन्नोऽसौ ततो गुरुश्रितो भवेत्।

श्रीमद्रामप्रपत्या च छिन्नमायान्वयस्ततः।



ततोऽर्चिरादिमार्गञ्च याति हार्दानुकम्पया।

ततश्च विरजास्नानाद्दिव्यदेहो भवेद्धि सः।

साकेते च समाप्नोति रामं ब्रह्मपरात्परम्।

स्वं रूपं तत्र संप्राप्य रामं चानुभवत्यपि।

भोगसाम्यमवाप्नोति रामस्य ब्रह्मणस्तदा।

ततो नावर्त्तते मुक्तो मृत्युलोकेऽथ कर्हिचित्।

मामुपेत्य तु कौन्त्येय पुनर्जन्म न विद्यते।

इत्येतद्भवद्वाक्यं प्रमाणं तत्र विद्यते।

सर्वलोकगतौ शक्तो मुक्तः सृष्ट्यादिवर्जितः।' इति।

ये तु पुरुषधौरेया कदापि संसारं नाप्तवन्तो न वा कदापि संसारं प्राप्स्यन्ति ते नित्या जीवा इति कथ्यन्ते' अर्थात् संसारमप्राप्ता जीवा नित्यजीवा इति। अत्र अप्राप्तसंसारा इति कथनेन मुक्तजीवानां व्यावृत्तिर्भवति, यतो मुक्ताः पूर्वप्राप्त संसाराः नित्यास्तु अप्राप्तसंसारसम्बन्धाः। तथोक्तम् 'अहतसहजदास्याः सूरिणः स्रस्तगन्धा विमलचरमदेहा' इति। तथा 'नित्योनित्यानाम्' ज्ञाज्ञौ द्वावजावीशानीशौ इत्यादि। तत्र बद्धजीवाः संसारिणः मुक्तजीवास्ते ये संसारमपहायकृत श्रीसाकेतनिवासाः। नित्याः कदाचिदपि संसारमप्राप्ताः हनुमत्प्रभृतयः। 'यत्र पूर्वे साध्याः सन्तिदेवा' इत्यादिश्रुतिप्रतिपादिता श्रीहनुमदादयोनित्यमुक्तास्तु' भगवत्प्रतिकूलाचरणाभावात्कदाचिदपि संसारं नाप्नुवन्ति' इत्याचार्योक्तेः। तदेवं जीवत्रैविध्यं प्रदर्शितं भवति विशेषजिघृक्षुभिराकरग्रन्थाश्रयो ग्राह्यः।

अथैवमपि स्वभावत एव सर्वतोऽचित्पदार्थादितो विलक्षणस्वभाववतः सर्वथादोषरहितस्य ज्ञानानन्दामलस्वभावकस्य देवमनुष्यादिबद्धमुक्तादिभेदः सुखित्वदुःखित्वादिभेदश्च किं मूलक इति चेत्? अचिदात्मकगुणत्रयसम्बन्धे नाविद्यादिकर्मवासनादिकरुचयो भवन्तीति स्वस्वकर्ममूलक इति गृहाण। 'प्रकारे विकारस्तथाचित्रसृष्टौ च हेतुर्यतः प्राणिनां प्राच्यकर्म' (श्रौतसिद्धान्त बिन्दुः) इत्याचार्योक्तेः। अयमाशयः-यथा स्वभावतः शीतस्वभावस्य निर्मलस्य च जलादेः वह्निसंबन्धेनागन्तुकमौष्ण्यं रजःकणसंपर्केण चाविलत्वं संजायये, यथा वा स्वभावतो निर्मलस्यैकस्य व्यापकाकाशस्य पार्थिकरजःकण

सम्बन्धेन घटादिसम्बन्धेन च मलिनत्वे 'मलिनं नभ' इति व्यवहारस्तथैव घटाकाशो मठाकाश इत्यादिव्याप्यानेकव्यवहारो भवति, तत् कस्य हेतोः ? उपाधिसंबन्धात्, तथैव स्वभावतो ज्ञानानन्दामलस्वभावस्य जीवस्य देवमनुष्यादिभेदः सुखित्वदुःखित्वादिभेदः स्वकर्मफलभोगाय गुणत्रयात्मकाचित्संबन्धादेव तिरस्कृतरूपत्त्वं दुःखादिमत्वं चौपाधिकमुपाधिसंबन्धादेव भवति । नहि आगन्तुको धर्मः स्वाभाविकस्वभावं तिरस्करोति । नहि संबन्धो जलस्य स्वाभाविकत्वं विहन्ति, यदि विहन्येत तदौपाधिविगमे तत्र न पुनर्दृश्येत । केवलमुपाधिः स्वसत्तायां स्वाभाविकमभिभवति, यथा सूर्यप्रकाशः स्वकाले नाक्षत्रंतेजोऽभिभवति । तथैव प्रकृतेऽभिभवमात्रं मलिनकर्मवासनया जीवस्वरूपस्य न तु तस्य सर्वथा विनाशो जायते । उपाधिविनाशे प्रादुर्भवति मोक्षदशायां तत्स्वरूपम् । अर्थात् यथा स्वभावादेव कृतशीतस्वभावकजलस्य स्थाल्यादिपरम्परया वह्नितापतप्तस्यौष्ण्यं शब्दादिश्च तत्र जायते, तथैव स्वभावतो ज्ञानानन्दामलस्वभावस्य चित्पदार्थजीवस्य ततो विलक्षणस्वभावसत्वरजस्तमो रूपगुणत्रयचित्पदार्थसंबन्धेनाज्ञानकर्मवासनासु रुचयः प्रादुर्भवन्ति । तदुक्तं विष्णुपुराणे-

'निर्वाणमय एवात्मा ज्ञानानन्दमयोऽमलः ।
दुःखज्ञानमलाधर्माः प्रकृतेस्ते न चात्मनः ॥
जलस्येवाग्निसंसृष्टस्थालीसंगात्तथापि हि ।
शब्दोद्रेकादिकान् धर्मान् तत्करोति यथा मुने ॥
तथात्मा प्रकृतेः संगात् अहं मानादिदूषितः ।
भजते प्राकृतान् धर्मानन्यस्तेभ्योपि सोऽव्ययः ॥' इति ।

अत्र श्लोके अविद्यापदेनाज्ञानस्य ज्ञानाभावसंशयविपर्ययादेश्चग्रहणं भवति, न तु केवलाद्वैतिसंमत 'सदसद्भ्यामनिर्वचनीयस्य भावरूपस्य ग्रहणम्, अभावत्वेन संमतस्यानिर्वचनीयत्वभावत्वयोरसंभवात् । तदाहुर्जगद्गुरुश्रीरानन्दाचार्याः स्वगीतानन्दभाष्ये-किञ्च सप्तविधानां दुरुद्धराणामाश्रयतिरोधानस्वरूपानिर्वचनीयत्वप्रमाणनिवर्त्तकनिवृत्त्यनुपपत्तीनां सम्भवादद्वैतवादिभिरङ्गीकृताऽविद्योपपादयितुमशक्या ।

तथाहि-भ्रमजनयित्र्या अविद्याया आश्रयःकः ? न तावद् जीवोऽस्याश्र



योऽन्योन्याश्रयात् । ब्रह्म तु ज्ञानवाध्याविद्याविरोधिस्वयंप्रकाशज्ञानरूपत्वादिति न तदाश्रयः । ज्ञानस्वरूपमपि ब्रह्माविद्याश्रयश्चेन्नसा ज्ञानवाध्या । स्वरूपादतिरिक्तं स्वरूपविषयकं ज्ञानमेवाविद्याविरोधि न स्वरूपभूतं ज्ञानमिति वक्तुम शक्यं जडत्वप्रसङ्गात्, अनुभूतिस्वरूपस्य ब्रह्मणोरद्वैतिनां मतेऽनुभूत्यन्तरविषयत्वानङ्गीकारात् । प्रपञ्चमिथ्यात्वज्ञानन्वतद्विषयकत्वेन ब्रह्मयाथात्म्याज्ञानस्यापि न विरोधि किन्तु प्रपञ्चसत्यत्वज्ञानस्यैव ज्ञानाज्ञानयोरेकविषयतयैव विरोधस्य सर्वसम्मतत्वात् ।

किञ्च ब्रह्मस्वरूपतिरोधायिकाऽद्वैत्यभिमताऽविद्या किं प्रकाशविरोधिनी न वा ? नाद्यस्तदा तयाऽधिष्ठानप्रकाशेऽध्यासानुपपत्तेः स्वरूपनाशप्रसङ्गाच्च । न द्वितीयः प्रकाशाविरोधे तस्यास्तिरोधायकत्वाभावेन तत्कल्पना वैय्यर्थ्यात् । किञ्च साऽविद्या परमार्थभूता न वा? नाद्योऽद्वैतहानेः । नान्त्यो विकल्पासहत्वात्, तथाहि-अपरमार्थरूपा साऽविद्या दृशिरूपाद्रष्टीदृश्यरूपा वा ? आद्येऽनवच्छिन्नावच्छिन्ना वा ? प्रथमपक्ष आश्रयदृश्यपेक्षयाभिन्नाऽभिन्ना वा ? नादिमो दृशिद्वयापत्तेः । नापिचरम आश्रयदृशेः परमार्थत्वेन तदभिन्नाया अस्या दृशेरपारमार्थ्यानापत्तेः । आश्रयदृशेरप्यपरमार्थत्वे तु शून्यवादप्रसङ्गात् । द्वितीयपक्षोऽपि न सावच्छिन्नाया अस्या दृशौकल्पिततत्वेन मूलदोषापेक्षयाऽनवस्थापत्तेः । द्वितीये तृतीये त्वस्याः कल्पिततत्वेनानवस्थादोषप्रसङ्गः ।

किञ्चास्या अविद्यायाः सदसद्विलक्षणत्वात्मकमनिर्वचनीयत्वमद्वैतिभिरङ्गीकृतं न युक्तं कस्यचिदपि पदार्थस्य सदसद्भिन्नत्वेन प्रतीतेरभावात् । सत्वासत्वान्यतररूपेणैवसर्वेषां पदार्थानां प्रतीयमानत्वादितिभावः । सर्वस्मिन्नपि वस्तुनि कालभेदेन देशभेदेन प्रकारभेदेन चास्तिनास्तीति प्रतीत्योर्मिथोविरोधे मानाभावादितियावत् । सद्विलक्षणं किन्तुनासदेवमसद्विलक्षणं किन्तु न सदिति कथने व्याघात एवेत्यनुपपन्नमेवाविद्याया अनिर्वचनीयत्वम् । अविद्यायां प्रमाणानुपपत्तिस्तु 'यदपिचाज्ञानमनादिभावरूपं पदार्थान्तरमागमप्रत्यक्षानुमानबलेन प्रसाध्य तच्छवलितस्य ब्रह्मणो जगदुपादानत्वमितिकथनं तदपि महाम्भसि निमज्जतः कुशकाशावलम्बनमनुकरोति' इत्यादिना 'अथातो ब्रह्मजिज्ञासा' (ब्र.सू १।१।१) इतिप्रथमसूत्रस्यानन्दभाष्येविस्तरेणास्माभिः प्रपञ्चितातत्रैवावलोक

नीयाः । किञ्चास्या अविद्याया निवर्त्तकं किम् ? ज्ञानमितिचेत्तत्स्वरूपभूतं ब्रह्मै वान्यद् वा ? नाद्यस्तस्य सार्वदिकत्वेनाविद्याया एवासम्भवस्य श्रवणादिवै यर्थ्यस्य च प्रसङ्गात् । द्वितीये ब्रह्मात्मैक्यविषयकमेवान्यविषशकं वा तज्ज्ञा नम् ? अन्त्ये ब्रह्मैक्यज्ञानशून्यानां घटादिमात्रज्ञानवतां मुक्तिप्रसङ्गः । आद्ये तत्सत्यमुतमिथ्या ? सत्यत्वेऽद्वैतहानिः मिथ्यात्वे निवर्त्तकान्तरापेक्षणादनवस्था । नन्वविद्यां नाशयत् तत्स्वयमेव विनश्यति जलमलनाशककतकरजांसीवेतिचेन्न, तादृशानां कतकरजसां जलाधः स्थान एवावस्थानाद् दृष्टान्तासङ्गतेः । किञ्चायम विद्यानिवर्त्तकज्ञानविनाशः सत्योऽसत्योवा ? सत्यत्वेऽद्वैतहानिः । असत्यत्वे तदु पादानाविद्याऽवस्थानप्रसङ्गः ।

एवमविद्यानिवृत्तिरप्युपपादयितुमशक्या विकल्पासहत्वात् । तथाहि- अविद्यानिवृत्तिः सत्या किं वा मिथ्या ? आद्ये ब्रह्मरूपा तदन्या वा ? न प्रथ मोऽनादेर्ब्रह्मस्वरूपस्य साध्यत्वासम्भवात् । नापि चरमो भिन्नसत्ताकत्वेन विरो धाभावादनिर्मोक्षप्रसङ्गाद्द्वैतहानेश्च । अविद्यानिवृत्तेर्मिथ्यात्वपक्षे निवृत्त्युपादान भूताया अविद्याया निवृत्त्या सहावस्थितेरावश्यकतयाऽनिर्मोक्षप्रसङ्गात् ।।' (गीतानन्दभाष्यम् २।१२) इति । किन्त्वज्ञानरूपमेवाविद्या, तच्चाज्ञानं ज्ञाना नुदय, अन्यथाज्ञानविपरीतज्ञानरूपभेदेनानेकप्रकारकं भवति । तत्र ज्ञानानुदयो ज्ञानाप्रागभावादिरूपः । कर्ममनो वाक् कायेति करणत्रयसंपादितः शुभाशुभ पुण्यपापरूपः क्रियाविशेषरूप एव । तत्र शुभं कर्मपुण्यमैहिकामुष्मिकानेक प्रकारकसुखदुःखानुभवरूपभोगसाधकतयाऽनेकप्रकारकम्, पापमपि शास्त्रा विहितकर्मणः करणं, शास्त्रविहितस्य च कर्मणोऽकरणम् परमेश्वरापराधादि भेदेनानेकप्रकारकम् । वासना संस्काररूपा, सा च विषयभेदेनानेकधाभिद्यते ।

ज्ञानानन्दस्वभावोऽमलो जीवात्मा गुणत्रयात्मकाचित् पदार्थसंपर्कात्, तत्कार्याविद्याकर्मवासनादिभिः संबद्धः औपाधिकधर्मविशेषमादायानवरतं संसारचक्रे भ्रमति तावद् यावन्नोदेति भगवत्कृपयातत्वज्ञानभक्तिप्रपत्तिरुदि तायां भगवत्प्रपत्तौ मुच्यते, इत्यवगतम्, परन्तु औपाधिकाविद्याकर्मादीनां निवृत्तिः कदा स्यादिति चेत्, गुणत्रयात्मकाचित्पदार्थसंसर्गनिवृत्त्यन्तरम- विद्याकर्मवासनादयः स्वत एव निवृत्ता भवन्तीत्यभ्युपगमेनादोषाद् । अयमा



शयः-यत्कारणं तत्कार्यापेक्षयाव्यापकं कार्यं च व्याप्यं भवति, यत्र कारणं भवति तत्रैव कार्यं भवति, यथा यत्र चक्रमृदादीनां समवधानं तत्रैव घटोत्प त्तिर्नान्यत्र, मृदादीनां कारणानामभावे कार्यस्य घटादेरभावस्याप्यानुभवि- कत्वात्, तदिहाविद्या कर्मवासनादीनां कारणं गुणत्रयात्मकाचित् पदार्थः तत्सं योगे एवाविद्यादीनां सद्भावात् । यदा तु अचित्पदार्थसंयोगो जीवस्य निवर्तते तदा तत्कार्याविद्याकर्मादीनामपि संयोगः प्रतिनिवर्त्तते । यथा वा यत्र वह्निर्न भवति न भवति तत्र धूम इति वह्निरूपव्यापकस्याभावे व्याप्यस्य धूमस्याप्यभा वो जायते, व्यापकाभावस्य व्याप्यत्वात् व्याप्याभावस्य व्यापकत्वात्, तदुक्तं- 'व्याप्यव्यापकभावो हि भावयोर्यादृशोमतः । तयोरभावयोस्तस्माद्विपरीतः प्रती यये । अन्वये साधनं व्याप्यं साध्यं व्यापकमिष्यते' इति ।

अल्पदेशवृत्तिसाधनम्, यथा धूमो वह्न्यपेक्षयाऽल्पदेशेमहानसादावेव वर्तते, अधिकदेशे वृत्तित्वाद्वह्निर्व्यापको महानसादौ सन्नेव धूमानधिकरणेऽयो गोलके विद्यमानत्वात्, उभयोरभावे व्यत्ययो जायते, यथा धूमाभावः महानस चत्वरपर्वतगोष्ठेषु न भवति किन्तु अयोगोलके जलादौ च भवति, वह्न्यभावस्तु पर्वतगोष्ठमहानसचत्वरायोगोलकेषु न भवति केवलजलादावेवेति धूमाभावा पेक्षयाऽल्पदेशवृत्तितया वह्न्यभावो व्याप्यो व्यापकश्च धूमाभावः । इत्येवम् अ चित्संसर्गाभावो व्याप्योऽविद्यादीनामभावश्च व्यापक इति व्याप्याचित्संसर्गाभावे जातेऽविद्यादीनामभावः सुतरामेव सिद्धो भवतीति शास्त्रज्ञा विवेचयन्ति ।

उपर्युक्तप्रकारेण बद्धादिजीवात्मस्वरूपं बद्धमुक्तनित्यभेदेन त्रिविध- मिति निरूपितम् । तत्तेषामात्मनां संख्याया इयत्ताऽस्तिनवेति संशयानस्योत्तरं ददाति, यदिमे त्रिभेदभिन्ना आत्मनः प्रतिवर्गमनन्ताः । अर्थात् ये बद्धजीवराश यस्तेऽनन्ताः । मुक्तराशयश्च ये तेप्यनन्तास्तथा नित्यजीवराशयोऽप्यनन्ता एव । तत्रानन्ता इति अपरिसंख्येया इत्यर्थः । एतेषामियती संख्या विद्यते इति सर्व ज्ञकल्पेनापि निर्द्धारयितुमशक्या एव । अन्यथा संख्यानैयत्ये बद्धान्तर्गतजीवानां कालक्रमेणमुक्तत्वे कदाचित् जीवरहितं सर्वं जगत् स्यादिति, न चैतदिष्टम्, संसारचक्रस्यानाद्यनन्तत्वात्, कालस्यानन्तत्वेन तत् चक्रान्तर्गतजीवादेरपि परि मातुमशक्यत्वात् । सादिसान्तस्यैव वस्तुनः परिमाणस्य परिच्छेदः कदाचित्सं

भवत्यपि परन्तु अनाद्यनन्तपदार्थसंख्यायाः परिच्छेदाभावादिति ते अनन्ता एव ।

त्रिवर्गभेदभिन्ना आत्मानोऽनन्तास्तेषां संख्याया निर्धारणासंभवेन ते अपरिसंख्येया इत्युपश्रुत्य ब्रह्माद्वैतवादिनः प्रत्यवतिष्ठन्ति, नात्मबहुत्वम्, किन्तु आत्मैकत्वमेव । 'एकमेवाद्वितीयं ब्रह्म' इत्याद्येकत्वप्रतिपादकश्रुत्या सजातीयविजातीयस्वगतभेदत्रयनिराकरणेनात्माद्वैतस्यैव प्रतिपादनात् । तत्कथमात्मभेद इह प्रतिपाद्यते ? न चात्मैकत्वे, एकः संसारी अन्यो मुक्तः एको जातो विनष्टश्छान्य इत्यादिव्यावहारिकप्रतीत्यात्मभेद एव सिद्ध्यतीतिवाच्यम् आकाशभेदवत्तदुपपत्तेः । अर्थात् यथा आकाश एकोपि, घटाद्युपाधिभेदाद् घटाकाशः पटाकाश इत्यादिव्यवहारस्समुपपद्यते तथैव प्रकृतेरन्तः करणरूपोपाधिभेदेन सुखित्वदुःखित्वादिव्यावहारिकव्यवस्थायाः समाधातुं शक्यत्वात् । 'नेहनानास्ति किंचन' इह ब्रह्मणि नाना किंचन वस्तु-नास्तीत्यर्थः 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' एतस्मिन्नन्तरमुदरं करोति अथ तस्य भयं भवति' 'अस्थूलमनणु' 'तत्वमसि' 'एकमेवाद्वितीयम्' इत्याद्यनेकश्रुतिभिरात्मैकत्वस्यैव प्रतिपादनेनात्मबहुत्वप्रतिपादनं श्रुतिस्मृतिविरुद्धं युक्त्यादिविरुद्धश्चेति चेन्नैवम् । यदि आत्मभेदो न मन्यते किन्तु आत्मैकवाद इष्यते तदा देवदत्तस्य 'अहं सुखीति ज्ञानोत्तरकाले तदन्यस्य कस्यचित् पुरुषस्याहं दुःखीति दुःखातुरत्वं दृश्यते इति सुखदुःखयोर्या प्रतिनियतव्यवस्था सा नोपपद्येत, दृश्यते च व्यवस्था । यदि सुखदुःखयोरेकमेवाधिकरणं भवेत्तदा सुखदुःखयोः प्रतिसन्धानमेकस्यैव पुरुषस्य स्यात् परन्तु नैवं संभवति, आत्मविशेषगुणानां युगपदनुभवस्यायोग्यत्वात् । तस्मादात्मभेद एव मन्तव्यो न त्वात्मैकत्वम् ।

न च देहान्तः करणादिलक्षणौपाधिभेदात् सुखदुःखयोर्नियमतो व्यवस्थोपपादिता स्यादितिवाच्यम्, यद्येवं तर्हिसौभरिप्रभृतिकमहापुरुषाणामनेकदेहवतामपि सुखादिव्यवस्था दृश्येत न तु दृश्यते, तस्मान्न शरीरभेदेन सुखदुःखयोर्व्यवस्था स्यादिति आत्मभेद आवश्यक एव । न च यदि शरीरभेदस्य सुखदुःखनियामकत्वं न मन्येत-तदा जन्मान्तरानुभूतस्य जन्मान्तरे स्मरणं कथं न स्यादिति वाच्यम् संस्कारानुद्भवात् तन्नासाद्वा, अर्थात् जन्मातरानुभवजनित संस्कारस्य कालाद्विनाशो जात इति परजन्मनि स्मरणं न भवति । न च तर्हि



सुखदुःखादीनां स्मृत्यभावोपि संस्कारानुद्भवात्संस्कारविनाशाद्वा भवतीति वाच्यं तथा सति एकस्मिन् शरीरेपि सुखदुःखादीनां स्मरणं न स्यात्, तस्मात् शरीरात्मकौपाधिभेदान्नसुखादीनां व्यवस्था संपादयितुं शक्यते किन्तु शरीरावच्छिन्नात्मभेदादेव सुखादीनां व्यवस्थास्यादिति आत्मभेद आवश्यक एवेति मत्वाऽत्मभेद आचार्येण प्रतिपादितः ।

किं च एकात्मवादे केवलं सुखदुःखादिव्यवस्थानुपपत्तिरेव भवति-इति न, अपितु संसारमोक्षव्यवस्था, गुरुशिष्यादिव्यवस्थानुपपत्तिरपि भवति, तथा देवनारकादिविषमसृष्टिरपिनोपपद्येत, तथा आत्मभेदप्रतिपादकश्रुतिविरोधोपि समापतति ।

अयमाशयः-अनेकभवपरंपरयासमुपार्जितकर्मजालावृतकश्चिज्जीव-विशेषः संसारचक्रे भ्रमन् कर्मणावृतः पुनः पुनरपि संसरति, 'अनेकजन्मसाहस्त्री संसारपदवीं भजन् । मोहश्रमं प्रयातोऽसौ वासनारेणुगुंठितः ।' इत्युक्तप्रकारेण कश्चित्संसरति । तत्रैव भगवत्कृपया जातवैराग्याः संसारवासनां परित्यज्य मुक्ता भवन्ति, यथा श्रीवामदेवप्रभृतिकाः । सेयं व्यवस्था जीवैकत्वे न संभवेत, तस्मादात्मबहुत्वमेवाभिमतम् । तथा कश्चित् संसारासारतां पश्यन् ब्रह्मविज्ञानेच्छुर्गुरुमुपसीदति 'परीक्ष्य लोकान् कर्मचितान् ब्राह्मणोनिर्वेदमायान्नास्त्यकृतः कृतेन तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रीयम् ब्रह्मनिष्ठम्' इत्युक्तप्रकारेण कश्चिदात्मज्ञानाय गुरुसमीपं गच्छति । ततः समागताय शमादियुक्ताय तत्वमुपदिशति । तथोक्तम्-

'तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्वतो ब्रह्मविद्याम्' इत्यादिश्रुतिप्रतिपादितप्रकारेण समुपजातवैराग्यः कश्चिज्जिज्ञासुः शिष्यो भवति, तथा संजातब्रह्मज्ञान उपदेशक्षमो गुरुर्भवति, सेयं गुरुशिष्यभावव्यवस्था आत्मैकत्वे कथमपि संगता न स्यात्, यद्येक एवात्मा तदा सर्वोपि गुरुरेव भवेत्, अथवा शिष्य एव भवेत्, परन्तु कश्चिदेवपुण्यशीलो जीवादितत्त्वत्रयज्ञानाय प्रयतते, कश्चिदेवशिष्यजिज्ञासोपसमाय समर्थो भवति । तदुक्तम्-'मनुष्याणां सहस्त्रेषु कश्चिद् यतति सिद्धये' तथा 'आश्चर्योऽस्य ज्ञाता कुशलानुशिष्टः' ततश्च कश्चित् शिष्यो भूत्वा गच्छति

गुरुसमीपम् उपदिशति च कश्चित्तत्त्वज्ञानाय समागताय कमपि सोयं नियम आत्मैकत्वेऽनुपपद्यमानो बहुत्वमेवात्मनः प्रसाधयति । अनुपपत्तिप्रमाणञ्च सर्व प्रमाणापेक्षया बलवानीतिव्यवहारस्तदुक्तम्-

अन्यथाऽनुपपत्तिश्चेदस्ति वस्तुप्रसाधिका ।
पिनष्टि दृष्टवैमत्यं सैव सर्वबलाधिका ॥ इति ॥

किं च यथा बन्धमोक्षव्यवस्था गुरुशिष्यव्यवस्था चात्मैकत्वेऽनुपपद्यमाना आत्मनो बहुत्वं प्रसाधयति बलात् तथैव येयं विसमा जीवसृष्टिः सापि बहुत्वमेवात्मनः साधयति । तथाहि कश्चिद्देवसर्गः शुद्धसत्वाज्जायमानः सुखबहुलः कश्चिन्नारको रजोबहुलत्वाज्जायमानो दुःखबहुलःमिश्रसत्वाज्जायमानो मनुष्यसर्गः सुखदुःखाभ्यां समवचितः अर्थात् देवाः सुखबहुला दुःखबहुलाः तिर्यक् प्रभृतयः सुखदुःखसमवचितो मनुष्यसर्गः, सोयं जीवानां जायमानो विषमविलक्षणसर्ग आत्मबहुत्वं साधयति, यदि भवदनुरोधेन कश्चिदेकात्मवादं स्वीकुर्यात्तदा यथा देवाः सदा सुखीन एव भवन्तीति प्रसिद्धिस्तथा मनुष्या नारकाः पशवश्चेति सर्वे एकान्तः सुखीन एव देववद् भवेयुः । अथवा यथा नारका एकान्तदुःखभाजस्तथैवान्येपि भवेयुरथवा मनुष्यवत् मिश्रसुखदुःखभाजो भवेयुर्नुतु लोके पदार्थानां वैषम्येण योयं परमेश्वरस्य सर्गोऽनेकविधो भवति स न स्यात् । भवति च विसमः सर्गः सोऽन्यथाऽनुपपद्यमान आत्मनो बहुत्वमेव साधयति नत्वात्मैकत्वमिति, परमेश्वरस्य विशमसर्गे देवमनुष्यादिरूपे देवमनुष्यादिजीवभेदस्तथा जैवीयकर्मणां न्यूनाधिकभाव एव कारणं भवति देवमनुष्यविसमसर्गे देवमनुष्यजीवानां भेदात् । सर्गोऽपि तदीयो विसम एव न तु समः । देवेष्वपि एकस्य कस्यचिद्देवविशेषस्य कर्मपुण्यात्मकमत्यधिकं स्यात्तदाऽधिकपुण्यवानधिकसुखी च भवति न्यूनकर्मवान् तदपेक्षयाऽल्पपुण्यभाक् अल्पसुखवानितिविवेकः । एवञ्च पूर्वप्रदर्शितानेकयुक्तिभिः जीवभेदो व्यवस्थापितः ।

तत्र न केवलं युक्तिवलादेवात्मबहुत्वं सिद्ध्यति किन्तु श्रुतिभ्यामपि जीवात्मभेदः, जीवेश्वरभेदश्च सिद्ध्यति, तथाहि-'नित्यो नित्यानां चेतनश्चेतनानामेको बहुनां यो विदधाति कामान्' 'द्वा सुपर्णा सयुजासखाया समानं वृक्षं



परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्ति-अनश्नन्नन्योऽभिचाकशीति' 'योनिमन्ये प्रपद्यन्ते शरीरत्वायदेहिनः । स्थाणुमन्येऽनुसज्जन्ति यथाकर्म यथा श्रुतम्' यस्य यादृशमुपासनं शुभाशुभं कर्म वा, तेष्वेकः स्वकीयकर्मबलात् मनुष्यादि शरीरलाभाय प्रेत्ययोनिं प्रपद्यन्ते, अर्थात् मनुष्यदेवादियोनिं प्राप्नुवन्ति, तदन्ये तदपेक्षया हीनकर्माणः स्थाणुस्थावरयोनिं वृक्षवनस्पत्यादिजीवा उत्पत्तिस्थानं प्राप्यसमुत्पन्ना भवन्तीत्यर्थः । तथा-

'नत्वेवाहं जातुनाशं न त्वं नेमे जनाधिपाः ।
न चैव न भविष्यामः सर्वे वयमतः परम् ॥

नाहं कदाचिदपि विनष्टः स्याम्, न त्वं विनाशमुपयास्यसि, न वा इमे जनाधिपा विनाशं प्राप्स्यन्ति, किन्तु एते वयम्, अतः परम् अस्मात् शरीर पातादनन्तरमपि भविष्याम एवेत्यर्थः । इत्यादि-अनेकश्रुतिस्मृतिशतैरात्मभेदः समर्थितो भवति स नान्यथाकर्तुं शक्य इत्यात्मभेदोऽवश्यमेव मन्तव्य इत्याचार्यव्याख्यानतो ज्ञायते । तथाहि-'एवमज्ञानमोहितस्याज्ञानमपसारयितुं तात्विकात्मनित्यत्वोपदेशावसरे स्वस्याहमिति प्रत्यक्तयाऽर्जुनप्रभृतिनाञ्च त्वमिति स्वाभितुखचेतनान्तरतयेम इतिस्वपराङ्मुखानेकचेतनतया सर्वे, इत्येकोपाधिसंगृहीतानेकव्यक्तितया वयमिति स्वेनसार्धमात्मरूपेणैकवर्गीकृतानन्तव्यक्तितयाऽभिधानाज्जीवानांस्वस्मात्परस्परञ्च 'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्, इत्यादिश्रुतिसम्मतं स्वाभाविकमेव भेदमानन्त्यञ्चाभिहितवाननन्तकारुणिको भगवान् वासुदेवः ( गीतानन्दभाष्यम् २।१२ ) इति ।

ननु के सन्ति एकात्मवादिनः ? ये स्वमतं श्रुतियुक्त्यादिभिः स्थापयन्ति खण्डयन्त्यपरमिति चेदत्राह सिद्धान्तीजीवस्याद्वैतप्रतिपादका सन्ति कुदृष्टयः केवलाद्वैतवादिनस्त एवैकात्मवादं समीहन्ते । तत्र ब्रह्माद्वैतं जीवाद्वैतमित्यनेन क्रमेण शास्त्रे प्रतिपाद्यमानमद्वैतम् द्विप्रकारकमर्थात् वेदान्ते प्रतिपाद्यमानं तत्तत्स्थलेऽद्वैतं द्विविधम्, क्वचित् ब्रह्माद्वैतं प्रतिपादितं भवति क्वचिज्जीवानामद्वैतम् । तत्र प्रकारिअद्वैतं ब्रह्माद्वैतमिति भाष्यते, प्रकाराद्वैतं च जीवाद्वैतमिति कथ्यते । तत्र परमात्मप्रकरणेषु 'सर्वं खल्विदं ब्रह्म ऐतदात्म्यमिदं सर्वम्' पुरुष एवेदं सर्वम्' इत्यादिस्थले सामानाधिकरण्येन ब्रह्माद्वैतस्य प्रतिपादनात् सामाना

धिकरण्यञ्च प्रकारभेदसहितप्रकारि-**एकपदकम्** 'एकः सन् बहुधा विचचार' इत्यादौ प्रकारबहुत्वस्य प्रतिपादनात् । **आत्मनां** ज्ञानवत्वेन साम्यत्वप्रतिपादनेन प्रकाराद्वैतं तदेव जीवाद्वैतम् । न तु स्वरूपतो जीवानामैक्यं, जीवाद्वैतस्यार्थः । तथा सजातीयविजातीयस्वगतभेदराहित्यं न ब्रह्माद्वैतार्थः । तमिममाशयमजानन्तस्ते कुदृष्टयो जाता इति ते एव जीवानां भेदं निषेधयन्ति, तेषां निराकरणमाचार्यसार्वभौमाः 'एवञ्चाखिलश्रुतिस्मृतीतिहासपुराणसामञ्जस्यादुपपत्तिबलाच्च विशिष्टाद्वैतमेवास्य ब्रह्ममीमांसाशास्त्रस्य विषयोन तु केवलाद्वैतम् । तथा हि-चिदचिद्वस्तुनोः शरीरतयाऽपृथक्सिद्धत्वेनप्रकारत्वम् तद्विशिष्टस्य ब्रह्मणश्च शरीरित्वेन प्रकारित्वंशाश्वतिकमेव काश्चनश्रुतयोऽभिदधते-'पृथगात्मानं प्रेरितारं च मत्वा' इत्यतः-एवञ्चभवदभिमताभेदे दृष्टान्त एव नास्तीति सिद्धम् । तस्मात् सत्यकामत्वसत्यसङ्कल्पत्वादिदिव्यकल्याणगुणविशिष्टस्य सविशेषब्रह्मण एवात्र शारिरकमीमांसाशास्त्रे जिज्ञासाऽभिमता सूत्रकृतामिति' (आनन्दभाष्यम् १।१।१) इत्यादिरूपेण महताटोपेन कृतवन्तः ।

न च 'द्वा सुपर्णा सयुजा' इत्यादिकाः श्रुतय औपाधिकमर्थात् व्यावहारिकभेदं प्रतिपादयन्ति । देवमनुष्यादिभेदः कामक्रोधसुखादिभेदश्चौपाधिको भेदस्तादृशभेदं प्रतिपादयन्ति न तु पारमार्थिकभेदमन्यथा भेदप्रतिपादकश्रुतीनां वैयर्थ्यमापतेदिति वाच्यम् । मोक्षदशायामपिभेदप्रतिपादनात् । अर्थादयं जीवपरयोर्जीवानां च परस्परं भेदः 'सदा पश्यन्ति सूरयः' तादृशपरमपुरुषं श्रीरामं सूरयो नित्यमुक्ताः सदैव पश्यन्ति-इत्यर्थः । एतावता मोक्षकालेऽपि भेदस्य स्थितिर्ज्ञायते इत्यर्थतो व्यवहारसमयेऽपिभेदः सिद्ध इति भेदः पारमार्थिको नत्वौपाधिकः । तथा 'मम साधर्म्यमागताः' मुक्तानां परमा गतिः 'सायुज्यं प्रतिपन्नाये' यस्मिन् पदे विराजन्ते मुक्ताः संसारबन्धनैः' इतिमोक्षदशायां श्रुतिस्मृतिप्रतिपादितस्यात्मभेदस्य विद्यमानत्वेन भेद अनौपाधिकः किन्तु स्वाभाविक एव यतो मोक्षदशा सर्वोपाधिरहितदशेति तत्रापि आत्मभेदस्यसिद्धत्वेन 'नित्योनित्यानाम्' 'द्वा सुपर्णा' इत्यादयः श्रुतयो व्यवहारे मोक्षे च सर्वत्राप्यात्मभेदमेव समर्थयन्तीति ध्येयम् । ननु आत्मभेदप्रतिपादकौपाधिकमनुष्यादिभेदानामवसानेतदात्मनां स्वरूपस्यात्यन्तं सदृशतया तत्र केनापि प्रकारेणात्मनां परस्परभेदकथनं न युक्त-



मिति चेन्न । सत्यम् अत्यन्तंसर्वात्मस्वरूपं भेदानर्हं तथापि परिमाणगुरुत्वाकाराणांकेनापि प्रकारेण भेदकथनायोग्येऽपि वर्णाकारादिभिरतिसदृशानां कपोतानां सौवर्णपात्ररत्नानां यथा परस्परं स्वरूपभेदो गृह्यते तथैव आत्मत्वेन ज्ञानाधिकरणत्वादिना च सर्वात्मनां भेदकथनाशक्यत्वेऽपि स्वरूपभेदस्य गृहीतुं शक्यत्वात् । अर्थात् यथा परिमाणगुरुत्वाकारादीनामति समानतया ब्रीहिरत्नानां भेदकस्य विजातीयधर्मस्याभावे परस्परं भेदोऽनुभूयते तथैव मुक्तात्मनां भेदकधर्मानवभासेऽपि स्वरूपभेदकृतभेदो भवत्येव । तत्रान्यभावात्मकभेदस्य विजातीयधर्माक्रान्तत्वेन पृथगत्वात्मकभेदस्याप्रतिभासेऽपि स्वरूपभेदस्य गृहीतुं शक्यत्वेन मोक्षदशायामप्यात्मभेदस्यात्मसंवन्धिनो गृहीतुं शक्यत्वात् । तस्मात् युक्त्यनुमोदितश्रुतिप्रतिपादितपारमार्थिकभेद एवात्मनां परस्परं मन्तव्यो नत्वौपाधिको भेदः । तथा सति पूर्वप्रदर्शितश्रुत्यादिभिः सह विरोधस्याशक्यसमाधेयतैव स्यादिति भावः ।

एतावता प्रकरणेनात्मभेदो निरूपितोऽर्थात् जीवस्त्रिविधो बद्धमुक्तो नित्यश्च, तेषाञ्च परस्परं सत्यपिसाधर्म्ये स्वरूपभेदसत्त्वेन भेदः प्रतिपादितः । अतःपरं तेषामनुगतलक्षणं शेषत्वे सति ज्ञातृत्वमेव । असाधारणधर्मो लक्षणं भवति यथा पृथिव्या गन्धवत्वम् अर्थात् अव्याप्त्यतिव्याप्त्यसंभवदोषरहितं यत् तदेव तस्य लक्षणम् । नीलरूपवत्वस्य गोर्लक्षणत्वे श्वेतगविअव्याप्तेर्न तल्लक्षणम् । श्रृंगित्वस्य गोर्लक्षणत्वे महिषादावतिव्याप्तिरिति तदपि न तल्लक्षणम् एकशफवत्वस्य गोमात्रेऽसंभवादश्वादावेव सत्वादसंभव इति तदपि न तल्लक्षणमपितु दोषत्रयरहितसास्नावत्वमेव गोर्लक्षणम् । तथैव प्रकृते शेषत्वे सति ज्ञातृत्वमेव सकलजीवसाधारणं दोषत्रयरहितं सत् आत्मलक्षणम् । अर्थात् शेषत्वविशिष्टज्ञानादिकरणत्वमेव लक्षणम् । 'शेषत्वे सति' इत्यत्र सति सप्तम्या विशिष्टार्थकतया यथोक्तलक्षणं पर्यवस्यति । तत्र शेषत्वमात्रं यदि लक्षणं क्रियेत तदा परमेश्वरशेषरूपेऽचित् पदार्थेऽपि शेषत्वस्य सत्वेन लक्षणेऽतिव्याप्तिदोषः प्रसज्येत अतो ज्ञातृत्वविशेष्योपादानं कृतम् तथा सति अचिति जडपदार्थे शेषत्वसत्वेपि ज्ञानाधिकरणत्वज्ञानरूपत्वरूपज्ञातृत्वाभावेन नातिव्याप्तिः, तथा ज्ञातृत्वलक्षणविशेष्यमात्रस्य लक्षणत्वेऽचित्पदार्थेऽतिव्याप्त्यभावेपि परमेश्वरेऽतिव्या-

प्तिः स्याद् यतः परमेश्वरस्य 'यः सर्वज्ञः स सर्ववित्' इतिश्रुत्यनुरोधेन ज्ञानाधिकरणत्वलक्षणज्ञातृत्वसत्वादतः शेषत्वे सतीति विशेषणोपादानम् । तथा च सर्वशेषिणि भगवति शेषत्वाभावान्नातिव्याप्तिः । अतः शेषत्वे सति ज्ञातृत्वमिति निर्दुष्टं लघुलक्षणं त्रिविधभेदभिन्नानां जीवानामितिसारः ।

यद्यपि 'अचिद्विलक्षणत्वमजडत्वमानन्दरूपत्वमव्यक्तत्वचिन्त्यत्वं निरवयवत्वं ज्ञानाश्रयत्वमित्येतानि लक्षणानिजीवेश्वरसाधारणानि संभवन्ति, तथा नियाम्यत्वं धार्यत्वं शेषत्वमित्येतत् त्रितयं जडचेतनसाधारणमर्थादचिज्जीवसाधारणलक्षणमपि संभवति, तथा 'अणुत्वमचित्परमाणुसाधारणं संभवति, परन्तु मिलितानामेतेषां सर्वेषामचित्परमेश्वरव्यावर्तकत्वाज्जीवलक्षणं सम्भवति' तथापि संभवति लघौगुरौ तदभावादिति नियमेनातिलघुलक्षणं प्रदर्शितं न तु गुरुलक्षणं विहीतम् । तदत्रानुसन्धेयाः-पण्डितसम्राट् स्वामीश्रीवैष्णवाचार्याभिनववाचस्पतिकृताः-

'पारतन्त्र्यविशिष्टो हि चेतनो जीव उच्यते ।
भिन्नश्चाचेतनेभ्योऽयं कर्तृत्वादिकधर्मतः ॥
आधेयत्वाद्विधेयत्वाच्छेषत्वाच्छेशतोऽपि च ।'

(प्रमेयपरिशोधिनी ३२।३३) इत्यादिकाः श्लोकाः ।

अथैवं जीवानां यदिदं धर्मभूतज्ञानं येन जीवो ज्ञातेति कथितो भवति तज्ज्ञानं गुणरूपं नैयायिकवदनित्यं परप्रकाश्यमनानन्दरूपम्, अथवा नित्यं द्रव्यं जडमानन्दरूपं वेति सन्देहे यथा जीवस्वरूपं नित्यं द्रव्यमजडमानन्दरूपं तथैव तदीयज्ञाने नित्यत्वद्रव्यत्वस्वप्रकाशानन्दत्वादिकमिति विभावय । अर्थात् यथा जीवो नित्यो द्रव्यरूपोऽजडो आनन्दरूपस्तथैव जैवीयधर्मानपि नित्यद्रव्याऽजडानन्दरूपाण्येव भवन्ति ।

'विद्वद्भिः सम्मतं चात्र ज्ञानमर्थप्रकाशकम् ।
धर्मधर्मिस्वरूपं च ज्ञानं हि द्विविधं मतम् ॥४०॥
ज्ञानं धर्मिस्वरूपं हि जीवस्तथाऽखिलेश्वरः ।
ज्ञानं धर्मस्वरूपं हि नित्यं प्रज्ञाऽभिधं विभु ॥४१॥

(अनन्ततत्वपीयूषे) जगद्गुरुश्रीनरहर्यानन्दाचार्योक्तेः ।



अथैवं यदि ज्ञानजीवयोरुभयोरपि नित्यत्वद्रव्यत्वादिकरूपं परस्परं तुल्यमेव तदा धर्मज्ञानधर्मीभूतजीवयोर्ज्ञानाश्रययोः को भेदः, अयं जीव इदं ज्ञानमिति परस्परं वैलक्षण्यप्रतिभासः किं कृतः इति चेदत्रोच्यते यद्यपि ज्ञानजीवयोर्नित्यत्वादिना समानतया वैलक्षण्यं न प्रतिभासतेऽर्थात्तयोर्भेदप्रयोदको धर्मो न प्रतिभासते तथापि जीवस्वरूपं धर्मिसंकोचविकाशायोग्यं स्वव्यतिरिक्तस्य (स्वभिन्नस्य) प्रकाशकं स्वस्मै स्वप्रकाशकमणु च । अर्थात् धर्मित्वं संकोचविकाशायोग्यत्वमात्मव्यतिरिक्तार्थप्रकाशकत्वं स्वस्मै स्वप्रकाशकत्वमणुत्वञ्चैतानि जीवस्वरूपस्य विशेषा इत्यर्थः । तथा धर्मभूतज्ञानं धर्मिणो जीवस्य धर्मः संकोचविकाशयोग्यं स्वव्यतिरिक्तार्थप्रकाशकं स्वस्मै स्वाप्रकाशम्, आत्मने प्रकाशकं व्यापकं च । अर्थात् धर्मत्वं संकोचविकाशयोग्यत्वं स्वभिन्नं (स्वव्यतिरिक्तम्) अर्थप्रकाशकत्वं स्वस्मै स्वप्रकाशरहितत्वं स्वाश्रयस्य स्वयं प्रकाशत्वं व्यापकत्वं विभुत्वं विषयप्रकाशकत्वमित्येतानि ज्ञानस्य विशेषा भवन्तीत्यर्थः । तत्र विभुत्वं ज्ञानस्य स्वाभाविको धर्मः कथितः । अत्रानुसन्धेयाः-

'अणुज्ञानस्वरूपात्मा ज्ञानाश्रयो मतः श्रुतौ ।
धर्मभूतं विभुज्ञानं जीवभिन्नं ततो मतम् ॥२६॥

इति श्रौतप्रमेयचन्द्रिकास्थश्लोकस्तदीयाप्रभाव्याख्या च पण्डितसम्राट् स्वामी श्रीवैष्णवाचार्यकृता ।

यद्यपि जीवस्तदीयज्ञानयोर्ज्ञानत्त्वादिकतिपयधर्मैः साजात्यं सजातीयधर्मस्य भेदकाभाववत्वं तथापि उपर्युक्ततदुभययोः प्रदर्शितविजातीयधर्मवत्तया तैस्तैर्धर्मैस्तदुभययोर्भेदः सुग्रह एवेति दिक् ।

अथ गतप्रकरणान्तग्रन्थेन जीवानां धर्मभूतविज्ञानस्य विभुत्वमिति स्वाभाविको विशेषः कथितः, परन्तु लोकेनैवमनुभूयते, यतो विभुज्ञानवान् सर्वज्ञः स्यात् नत्वेवं दृश्यते इतिचेज्जीवज्ञानस्य संकोचविकाशतारतम्येन विभुत्वाविभुत्वे भवतः । तत्र भगवतः श्रीसीतानाथस्य सर्वविभूतिं सर्वदानुभवतो नित्यजीवस्य ज्ञानं सर्वदैव विभु भवति । केषांचिज्ज्ञानं सर्वदैवाविभुः, अर्थात् मिथ्याज्ञानदुष्कर्ममलादियुक्तदेहवतो बद्धजीवानां ज्ञानं संकोचविकाशवत्वेन सर्वदैवाविभुः सन्तिष्ठते । तथा भगवत्कृपया विगतकर्मणामत एव संसारसागर

पारप्राप्तानां मुक्तजीवानां यज्ज्ञानं तत् संसारकालेऽविभुरप्युत्तरावस्थायामर्थात् मोक्षकाले विभुर्जायते । अर्थात् सर्वजीवेषु जीवत्वेन तुल्यत्वेऽपि नित्यसूरेर्ज्ञानं सर्वदाविभुः बद्धजीवानां कर्मावृतत्वात्तदीयं ज्ञानमविभु, मुक्तानां संसारावस्थायामविभु मोक्षावस्थायान्तु विभुः, यतः 'सर्वं ह वै पश्यः पश्यती'ति वचनादिति संक्षेपः ।

ननु जीवज्ञानं नित्यमिति पूर्वप्रकरणे कथितम् । परन्तु नैतद्युक्तम्, यतः 'मम ज्ञानमुत्पन्नम्, मम ज्ञानं विनष्टम्' इत्यादिप्रतीत्या तादृशप्रतीत्योत्पादविनाशशालित्वेनानित्यत्वात् । यन्नोत्पद्यते न विनश्यति तन्नित्यं भवति, ज्ञानं तूपर्युक्त प्रतीत्या उत्पादविनाशशालीति कथं तस्यनित्यत्वमिति चेदत्राहुः, चक्षुरादीन्द्रिय द्वारेण बहिर्निसृत्य ज्ञानम् बाह्यान् विषयान् रूपादिकान् गृह्णाति पुनर्निवर्तते च, एतस्मादेव कारणाज्ज्ञानमुत्पादविनाशशालीति कथ्यते न तु वस्तुतस्तस्योत्पाद विनाशौ भवतः । अर्थात् 'सर्वं ह पश्यः पश्यति' 'सचानन्त्याय कल्पते' इत्यादि शास्त्रेण जीवज्ञानस्य मोक्षकाले सर्वविषयकत्वकथनेन सर्वसाक्षात्कार योग्यमपि 'यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप सर्वगा' इत्यादिवचनप्रमाणेन कर्मणा संकुचितं ज्ञानं भवति । तथा–

'तयातिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता ।
सर्वभूतेषु भूपाल ! तारतम्येन वर्तते ॥'
अप्राणिमत्सु स्वल्पा सा स्थावरादौ ततोधिका'

इत्यादिवचनप्रामाण्यात्, सर्वत्र कर्मानुकूलतारतम्यवत् तज्ज्ञानम् तथा 'इन्द्रियाणां हि सर्वेषां यद्येकं क्षरतीन्द्रियम् । तेनास्य क्षरति प्रज्ञा दृतेः पादादि वोदकम्' इत्यादिकथितदिशा आन्तरमपि ज्ञानम् चक्षुरादिबाह्येन्द्रियद्वाराऽन्तः करणाद् बहिर्निःसृत्य बाह्यान् रूपरसादिकान् गृहीत्वा पुनस्ततः प्रतिनिवृत्तो भवति, इत्येतादृशसंकोचविकाशप्रयोज्य प्रकाशाप्रकाशौ समुदायज्ञाने उत्पत्ति विनाशव्यवहारो भवति न तु वस्तुतो ज्ञानस्योत्पत्तिविनाशौ भवतः । एवमिन्द्रिय द्वारेण निःसरतो ज्ञानस्यैकत्वेपि विषयप्रकाशनसमये दर्शनश्रवणादिनामभेदस्तु अनेकेन्द्रियद्वारेण निःसृत्यानेकविषयान् गृह्णातीत्यनेकत्वं ज्ञाने भवति । अर्थात् स्वरूपतो ज्ञानस्यैकत्वेऽपि निःसरण करणतत्तदिन्द्रियरूपद्वारभेदेन भिन्नविषयान् गृह्णन्ननेकविधो भवतीतिभावः । तथा आत्मनो ज्ञाननित्यत्वम् 'द्रष्टुर्दृष्टेर्विपरीलोपो विद्यते' 'नहि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' ( बृ. ४।३।३० ) तत्र विज्ञातुर्जीवस्य यद्विज्ञानं तस्य विपरिलोपो न भवति तथा दृष्टुर्जीवस्य या दृष्टिर्दर्शनं तस्यापि विनाशो न भवतीत्यर्थः । अनया श्रुत्या जैवज्ञानस्य नित्यत्वं प्रतिपादितम् । तथा–



'ज्ञानं वैराग्यमैश्वर्यं धर्मश्च मनुजेश्वर ।
आत्मनो ब्रह्मभूतस्य नित्यमेतच्चतुष्टयम् ॥
यथोदपानकरणात् क्रियते न जलाम्वरम् ।
सदेव नीयते व्यक्तिमसतः संभवः कुतः ॥
तथा हेयगुणध्वंसादवबोधादयो गुणाः ।
प्रकाशन्ते न जायन्ते नित्या एवात्मनो हि ते ॥'

इत्यादिस्मृत्याचात्मगुणस्य ज्ञानादेराविर्भावतिरोभावावेव भवतो न तूत्पादविनाशाविति ज्ञानस्य नित्यत्वमेव । यथा गवि विद्यमानस्यैव दुग्धस्य निष्पीडनेनाविर्भावो भवति न तु सर्वथाऽविद्यमानस्य, अन्यथा बलीवर्दादपि तदुत्पाद प्रसङ्गात्, यथा वा तिलेषु विद्यमानस्यैव तैलस्याविर्भावो भवति नतु सिकताभ्यः । 'नासतो विद्यते भावो नाऽभावो विद्यते सतः' इत्युक्तेः, एवमात्मनि विद्यमानमेव ज्ञानं काले चक्षुरादिकरणद्वारा बहिर्निःसृत्य बाह्यान् विषयान् गृह्णाति । तत्र करणस्य चक्षुरादेरनेकत्वात्, तज्जनितज्ञानेऽपि अनेकत्वमिव प्रतिभानं भवति, यथा एक एव सौर्यश्चान्द्रो वा प्रकाशो देशकालभेदादनेकप्रकारको भवति तथैकमपि ज्ञानं करणविषयभेदेनानेकविधं भवतीति ज्ञानमेकं नित्यमेवेति भावः । तदिदं ज्ञानं द्रव्यं गुणः क्रियारूपं वा ? तत्र द्रव्यमिति केचन गुणरूपमिति न्यायविदः धात्वर्थत्वेन संकोचविकाशरूपतया क्रियारूपत्वमिति वादिविप्रतिपत्तौ ज्ञानस्य द्रव्यरूपत्वं सिद्धान्ताभिमतम् । तदुक्तमाचार्यैः–'अर्थ प्रकाशकं ज्ञानं विभुद्रव्यगुणात्मकम्' ( श्रौतप्रमेयचन्द्रिका ) 'सिद्धन्ते ज्ञानतत्त्वे तु नाद्रव्यत्वं हि सम्मतम्' ( श्रीरामानन्दवेदान्तसारः ) तथाहि गुणाश्रयत्वं क्रियाश्रयत्वं जडभिन्नत्वं चैतत् त्रयमपि द्रव्यत्वसाधकं भवति । तत्र ज्ञाने संकोच विकाशो जायत इति ज्ञानस्य क्रियाश्रयत्वेन द्रव्यत्वं, तथा संयोगविभाग

रूपोऽपि गुणो विज्ञाने तिष्ठतीति कृत्वा गुणाश्रयत्वमपि ज्ञाने, इतिगुणाश्रयत्वा दपि ज्ञानस्य द्रव्यत्वं सिद्ध्यति। तथा जडभिन्नत्वं स्वप्रकाशत्वम्। ततश्च स्व प्रकाशत्वाद् यथा प्रदीपरत्नप्रभृतीनां द्रव्यत्वं तथैव स्वप्रकाशत्वरूपत्वेन ज्ञा नस्यापि द्रव्यत्वं सिद्धं भवति। गुणक्रियाश्रयत्वमजडत्वं च द्रव्यत्वसाधकमिति स्वीकारादिति भावः । तत्र क्रियाश्रयत्वं स्वातंत्र्येण द्रव्यत्वसाधकम्, गुणाश्रयत्वमपि स्वातन्त्र्येण द्रव्यत्वसाधकम्, आभ्यां (क्रियाश्रयत्वगुणाश्र-यत्वाभ्यां) सह अजडत्वस्यापि साधकतया कथनेनाजडत्वमपि ज्ञानस्य द्रव्यत्व साधकं भवेदेवेति । अजडतया कथं द्रव्यत्वमिति चेदित्थं तथाहि जडवस्तुषु घटादिगुणादिषु द्रव्यत्वमद्रव्यत्वं च भवति, अर्थात् जडपदार्थो द्रव्यो भवति यथा जडो घटादिपदार्थो द्रव्यो भवति यथा जडो घटादिपदार्थो द्रव्ये परिगण्यते जडश्च गुणादिरद्रव्यं भवति, ततश्च जडपदार्थो द्रव्यमद्रव्यं चोभयरूपं भवति, परन्तु अजडपदार्थेषु द्रव्यभिन्नं किमपि न भवति । अर्थात् यदजडं तद्द्रव्यमेव यथा जीवात्मा ततश्च स्वप्रकाशकत्वरूपमजडत्वं द्रव्यत्वसाधकम्, एवं च 'आत्रायं पुरुषः स्वयं प्रकाशः' 'आत्माऽजडः संवित्कर्मतामन्तरेणापरोक्षत्वात्सं वेदनव' दित्यादिश्रुतियुक्तिभ्यामात्मनः स्वयं प्रकाशत्वादजडत्वरूपस्वयंप्रका शत्वेन द्रव्यत्वं ज्ञाने सिद्ध्यति तस्माज्ज्ञानं द्रव्यरूपम् अजडत्वात् यद् जडभिन्नं न भवति तद् द्रव्यम् यथा जीवात्मा। यथा यद् गन्धवद् न भवति न तत् पृथि वीतरभेदवद् भवति यथा जलादिकम् । इतिकेवलव्यतिरेक्यनुमानेन पृथिव्यां पृथिवीतरभेदः सिद्धो भवति, तथैवाजडत्त्वहेतुना ज्ञाने द्रव्यत्वमपि सिद्धं भव ति। एवं चाजडत्वहेतुना संकोचविकाशात्मकक्रियायाः संयोगविभागपृ-थक्त्वादिगुणानामधिकरणत्वाज्ज्ञानं द्रव्यमित्यन्यत्रापि कथितम् । तदत्र-स्मर्यताम्-

'नित्यधामेतरज्ज्ञानमजडद्रव्यमचेतनम् ।
घटाद्यर्थप्रकाशानामसाधारणकारणम् ॥८४६॥
प्रसृत्य चेन्द्रियद्वारा द्रव्येण युज्यते ततः ।
गुणक्रियाविशिष्टत्वाज् ज्ञानस्य द्रव्यता मता ॥८४७॥

इत्यादिश्रीवोधायनमतादर्शस्थादिव्यप्रबन्धा जगद्गुरुश्रीपूर्णानन्दाचार्या



नुगृहीताः ।

ज्ञानं द्रव्यरूपं गुणरूपञ्च कुतः ? आश्रयात् स्वाधिकरणात् अन्यत्रापि वृत्तेः अन्याधिकरणेऽपि वर्तमानत्वात्। यथा समवायसंबंधेन ज्ञानमात्मनि वर्तते तथैव विषयतासंबंधेन घटपटादिविषयेऽपि वर्तते इत्येवमाश्रयादन्यत्रापि वृ त्तित्वं भवति तथा आश्रयेणापि समन्वयात्, संबन्धादर्थादाश्रये वर्तमानत्वात् नहि विषयविषयकं ज्ञानं स्वाधिकरणमात्मानं परित्यज्यान्यत्र वर्तते, यदि भवति तदा विषयतासम्बन्धेनान्यत्र भवेदपि स्वाश्रयं समवायेन न व्यभिचरति । अर्थात् आत्मनि विद्यमानमेवान्यत्रापि संबन्धान्तरेण भवतीत्यर्थोऽभियुक्तवच नस्य । यद्यपि उपर्युक्तप्रकरणेनानेकयुक्तिभिरभियुक्तादिवचनैर्ज्ञानस्य द्रव्य-त्वमुदाहृतम्, परन्तु यदि ज्ञानं द्रव्यं भवेत्तदाऽत्मनो गुणरूपं कथं स्यात् नहि पृथिव्यां संयोगसंबंधेन विद्यमानो द्रव्यात्मको घटादिपदार्थो गुणो भवति न वा पृथिव्यादीनामाधेयरूपस्तदीयगुण इति कथ्यते तद्वदिह यदि ज्ञानं द्रव्यं भवेत् अर्थात् यदि ज्ञाने गुणत्वमस्वीकृत्य द्रव्यत्वं घटादिवत् स्वीक्रियेत तदा तस्य ज्ञानस्यात्मगुणत्वं कथं स्यात् द्रव्यस्य गुणत्वासंभवात् । किंच यदि ज्ञानं द्रव्यं स्यात्तदा तदपि समवायिकारणं स्यात् घटादिवदिति यथा घटादौ रूपस्पर्शादयो गुणा उत्पद्यन्ते तथैव समवायिकारणरूपे द्रव्यात्मके ज्ञानेऽपि रूपादिका गुणा उत्पद्येरन् न तूत्पद्यन्ते । न च गगनं द्रव्यं समवायिकारणं भवेदपि रूपादीनां समवायिकारणं न भवति तथैव ज्ञानस्य द्रव्यत्वेऽपि तत्र ज्ञाने रूपादिकं न स्यादिति वाच्यम्, रूपादीनामकारणत्वेपि संयोगविभागसपरिमाणादीनां ज्ञाने समुत्पत्तिप्रसंगात् । अर्थात् सत्यं पृथिव्यादिपदार्थवत् रूपादीनामकारणत्वेपि यथाऽत्मनि संयोगविभागादिकाः सामान्यगुणाः समुत्पद्यन्ते द्रव्यस्वाभाव्यात् तथैव द्रव्यस्वाभाव्यात्, द्रव्यात्मकज्ञानेपि गुणान्तराणामुत्पत्तिः स्यादिति न ज्ञानं द्रव्यमपितु गुणरूपमेवेति ज्ञानस्य गुणत्वकथनं कथं सङ्गच्छते । अर्थात् ज्ञानं कथमपि द्रव्यरूपं न संभवतीति द्रव्यत्त्वकथनमयुक्तमेवाभातीति, तथापि नित्य द्रव्यरूपात्मनि आश्रितत्त्वात् ज्ञानस्य द्रव्यत्वं भवति । अर्थात् ययोर्द्वयोर्मध्ये एकमविनश्यदवस्थमपराश्रितमेवावतिष्ठते तावयुतसिद्धौ यथा रूपघटौ घटे यावद्रूपरसादिकं भवति तावत्पर्यन्तं रूपादिकं घटं विहाय न भवति । अर्थात्

यावद्रूपं भवति तावत् घटादिकं स्वसमवायिकारणं विहाय नान्यत्रावस्थानं लभते अन्यथा यदि स्वसमवायिकारणं विहायान्यत्र भवेत्तदा तद्गुण एव न स्यात् । एतादृशौ द्वौ पदार्थौ अयुतसिद्धाविति कथ्येते । तत्रायुतसिद्ध-योर्नित्यसंबंधः स च न्यायमते समवायः तदन्यमतेऽविष्वग्भावः-अर्थात् पृथक् सिद्ध्यनर्हत्वम्। तथा चात्मरूपेऽधिकरणे नियमतो विद्यमानत्वेनात्मगुणत्वमपि ज्ञानस्येति । न च ज्ञानस्य गुणत्वेद्रव्यत्वकथनं कथं संभवति, द्रव्यत्वगुणत्व योरश्वमहिषवत् परस्परविरुद्धत्वात्-इति वाच्यम् । नहि समवायिकारणत्वं द्रव्यत्वं न वा न्यायमतपारिभाषिकं गुणत्वं किन्तु गौणत्वमेव गुणवत्त्वम् । क्रियाश्रयत्वं च द्रव्यत्वम् । तथा च संकोच विकाशादिरूपक्रियाश्रयत्वात् ज्ञानस्य द्रव्यत्वं तथा आत्मरूपस्वाधिकरणं नियमतो विद्यमानत्वेन तं प्रति गौणत्वेन गुणत्त्वव्यवहारात् । अर्थात् न्यायतन्त्रसिद्धरूपाद्यन्यतमरूपत्वेन गुण त्त्वं नास्ति येन द्रव्यत्वगुणत्वयोर्विरुद्धतया एकत्र तयोरवस्थानं न स्यात् किन्तु नित्याश्रियत्वं गुणत्वमिति नियममाश्रित्यैव गुणत्वस्याभिधानात् । तथा च तादृ शयोः परस्परविरोधाभावेनोभयोरेकत्रावस्थानेन एकस्मिन् द्रव्यत्वादौ परत्वाप रत्वयोरुभयोः समावेशवदविरोधात् । अर्थात् परस्परविरुद्धयोरपि परत्वापरत्व योरपेक्षाभेदेनैकस्मिन् द्रव्यत्वे गुणत्वे कर्मत्वे वा परत्वापरत्वयोः समावेश दर्शनेनोभयोर्न विरोधस्तथैव प्रकृतेऽपि । अयमाशयः-परत्वमित्यस्याधिकदेश वृत्तित्वमर्थः । तथाऽल्पदेशवृत्तित्वमपरत्वम्, एवं च सत्ताया द्रव्यगुणकर्मनिष्ठा याः सकलजात्यपेक्षयाऽधिकदेशवृत्तित्त्वेन परत्वम् । अर्थात् सत्ता द्रव्ये गुणे कर्मणि चेति, द्रव्यं सत् गुणः सन् कर्मसदिति सदनुगतप्रतीतेर्दर्शनात् । घटत्वादिजातिस्तु घटादिमात्रे वर्तते इति घटत्वादिकमपरम् पृथिवित्वादिकं तु परमपरमपि, यतो द्रव्यत्वादेः सत्तापेक्षया अल्पदेशवृत्तित्वं द्रव्यत्वं नवसु द्रव्येष्वेव वर्तते, सत्ता तु द्रव्ये तथा द्रव्यातिरिक्तगुणादावपि तिष्ठतीति सत्ता पेक्षया द्रव्यत्वादिकमल्पदेशवृत्तित्वादपरं तथा पृथिवित्वाद्यपेक्षया द्रव्यत्वस्य नवद्रव्यवृत्तित्वेन पृथिवित्वापेक्षयाऽधिकदेशवृत्तित्वेन परत्वम् । एवं प्रकारेण यथा स्वभावतः परत्वापरत्वयोः परस्परविरुद्धत्वेऽपि, अपेक्षा भेदेन द्रव्यत्वादौ समावेशदर्शनमुभयोरेकत्रस्थितत्वात्, परत्वापरत्वं समानाधिकरणं भवन्नविरुद्धं



भवति अपेक्षा भेदात् । यथा वा प्रतियोग्यपेक्षया एकैव स्त्री मातास्वसान नान्दायाता च भवति तत्कस्य हेतोः ! अपेक्षा भेदात् पुत्रापेक्षया माता भ्रातुरपेक्षया स्वसा, भ्रातृपत्न्यपेक्षया ननान्दा भवति इत्येकस्यामेवाबलाया मनेके विरुद्धसमानाधिकरणा भवन्तो न परस्परं विरोधभाजो भवन्ति । तथैव प्रकृते एकमेव ज्ञानम् संकोचविकाशादिक्रियाद्यपेक्षया द्रव्यं भवति तथा जी वात्मनि नित्यसमवेतत्वाद्गुणत्वाक्रान्तमपि भवति, तथा चैकस्यैव ज्ञानस्य द्रव्य त्वगुणत्ववत्त्वे न कोपि विरोधः । ज्ञानस्याश्रयादन्यतो वृत्तित्वक्रियाश्रयत्वकथ नेन लब्धं भवति । एतादृषोभयस्वभाववत्वं न केवलमात्मगुणस्य ज्ञानस्यैव किन्तु प्रदीपमणिसूर्यादिप्रभाणामपि समानमेवेति, तस्माद्द्रव्यत्वं गुणत्वमे तदुभयमपि समुपपन्नं भवतीति संक्षेपः ।

ननु ज्ञानस्याजडत्वात्स्वप्रकाशत्वं कथितं परन्तु तन्न संभवति, ज्ञानस्य स्वप्रकाशरूपत्वे सर्वदैव भासमानता, तथा सति सुषुप्तिमूर्छादिकालेऽपि ज्ञानं प्रकाशेत न तु सुषुप्त्यादिकाले प्रकाशते किन्तु जागरणकाले एव तथा भवतीति चेन्मैवम् । प्रसरणाभावात् । अर्थात् यदि ज्ञानं स्वप्रकाशकं तदा सुषुप्तिकालेऽपि प्रकाशितं स्यान्नत्वेवं भवति तस्मान्न स्वप्रकाशमिति प्रश्नाशयः तत्रोत्तरं प्रस रणाभावात् । अर्थात् ज्ञानं न सर्वदा स्वप्रकाशरूपं किन्तु स्वाश्रयीभूतविषयस्य ग्रहणसमये एव स्वयमेव प्रकाशते, सुषुप्तिमूर्छादिसमये तु तमोगुणाभिभवेन संकुचितं तिरोहितमिव भवतीति मणिसूर्यादिप्रकाशवत् प्रसरणाभावात् । सु षुप्तिकाले न प्रकाशते तस्मात्सुषुप्त्यादिकाले विषयावभासकत्वं न तस्मात्तदा स्वयं प्रकाशत्वविरहेण प्रश्नानवसरात् ।

एतेषां जीवानां ज्ञानात्मस्वरूपवन्नित्यं द्रव्यरूपमजडं तथा आनन्दरूपम पीति पूर्वं कथितम् । तत्र द्रव्यत्वं नित्यत्वमजडत्वं निरूपितमतः परमानन्दरूपत्व मपि विचार्यते । तत्र ज्ञानस्यानन्दरूपत्वं नाम ज्ञानस्य प्रकाशावस्थायामनुकूल तया भासमानत्वम् । तत्र प्रकाशावस्थायामित्यस्य स्वाश्रयस्य विषयप्रकाश नकाले ज्ञानं प्रकाशितं भवति तत्काले ज्ञानेऽनुकूलत्वं तु तदीयविषयाणामनु कूलतया भानात् । तान् ( विषयान् ) विषयविधया गृह्णतो ज्ञानस्य स्वाश्रय सुखरूपत्वम् । न च तर्हि विषसर्पादिविषयकं ज्ञानं जायते तत् प्रतिकूलं भवति

है, और भगवदात्मकतया प्रतिभासमान काल में जो प्रतिकूलता का भान होता है वह देहात्मभ्रम मूलक तथा इस परमेश्वरात्मकत्वाभावमूलक औपाधिक है।

इस विषय में भगवान् श्रीपराशरजी का वचन भी प्रमाण है तथा हि-

**'वस्त्वेकमेवदुःखाय सुखायेर्ष्यागमाय च।**
**कोपाय च ततस्तस्मादस्तु वस्त्वात्मकं कुतः॥**
**तदेव प्रीतये भूत्वा पुनर्दुःखाय जायते।**
**तदेव कोपाय ततः प्रसादाय च जायते॥**
**तस्माद्दुःखात्मकं नास्ति न च किञ्चित्सुखात्मकम्।**

इति अर्थात्-एक ही पदार्थ जो सांसारिक है वह देश काल विशेष में दुःख के लिये होता है और वही पदार्थ देशान्तर कालान्तर में उसी पुरुष को सुख के लिये होता है एवं उसी देशकाल विशेष में व्यक्त्यन्तर को सुख प्रयोजक होता है एवं वही पदार्थ चाहने वाले को भाग्य बलात् प्राप्त नहीं होने पर ईर्ष्या का कारण बन जाता है तथा वही पदार्थ क्रोध के लिये बन जाता है। इसलिये सुखादिक वस्तु पदार्थ का स्वरूप नहीं हो सकता है, तथा पदार्थ सुख का प्रयोजक बन करके पुनः देशकालादि के बल से दुःख का प्रयोजक बन जाता है। तस्मात् कोई भी पदार्थ न तो एकान्ततः दुःखात्मक है न वा एकान्ततः सुखात्मक है। इसप्रकार से श्रीसम्प्रदाय के छठे आचार्य श्रीपराशर ऋषि ने विस्तारपूर्वक कहा है। इससे एक ही पदार्थ सुखात्मक है सत्वगुण के उत्कटकाल में तथा वही पदार्थ रजोगुण के उत्कटकाल में दुःखात्मक हो जाता है तथा वही पदार्थ तमोगुण के आधिक्य के समय में मोहात्मक होता है यह सांख्यमत का निराकरण किया गया, क्योंकि विषय पदार्थों का प्रतिकूलरूप से तथा चन्दनादि पदार्थों का अनुकूलरूप से जो भाव होता है वह देहात्मभ्रमादि कारण से तस्मात् परमेश्वरात्मकतया सर्वपदार्थों का आनुकूल्य स्वभाव है। अतः ईश्वराकार से भानकाल में सर्वविषयक ज्ञान आनन्दरूप है यह सिद्ध हुआ। एतादृश ज्ञान आत्मा का गुण है। इसप्रकार से तत्वत्रयान्तर्गत द्वितीय चित्पदार्थ का निरूपण यथामति संक्षेप से किया गया॥७॥

卐 अथेश्वरनिरूपणम् 卐

**विश्वं जातं यतोद्धायदवितमखिलं लीयते यत्र चान्ते**



**सूर्यो यत्तेजसेन्दुः सकलमविरतं भासयत्येतदेषः।**
**यद्भीत्यावातिवातोऽवनिरपि सुतलं याति नैवेश्वरोज्ञः**
**साक्षीकूटस्थ एको बहुशुभगुणवानव्ययो विश्वभर्ता॥८॥**
**श्रीमानर्च्यः शरण्यो बहुविधविबुधैर्योगिगम्याङ्घ्रिपद्मोऽ**
**स्पृश्यःक्लेशादिभिः सत्समुदितसुयशाः सूरिमान्यो वदान्यः।**
**शश्वच्छ्रीरामचन्द्रः सुमहितमहिमा साधुवेदैरशेषै**
**र्निर्मृत्युः सर्वशक्तिर्विकलुषविजरो गीर्मनोभ्यामगम्यः॥९॥**

इत्यानन्दभाष्यकारजगद्गुरुश्रीरामानन्दाचार्ययतिराजप्रणीते श्रीवैष्णवमताब्जभास्करे तत्त्वनिरूपणात्मकः प्रथमप्रश्नोत्तराख्यः प्रथमः परिच्छेदः॥१॥

**एवं पूर्वोक्तक्रमेणाचिद् निरूपणानन्तरं तत्वत्रयान्तर्गतद्वितीयं चित्तत्त्वं स्वरूपधर्मलक्षणभेदादिदर्शनं निरूपितम्। तत्राचित्पदार्थस्य हेयतया प्रथमनिर्वचनं कृतम्। तदनु संसारसागरपारजिगमिषोः शरीरेन्द्रियबुद्ध्यादिभ्यो भिन्नस्याधिकारिणो निरूपणं कृत्वा सर्वोपादेयप्राप्यस्य सर्वशक्तिमतः सर्वेश्वरस्यानन्तहेयप्रत्यनीककल्याणगुणाकरस्य शास्त्रैकसमधिगतस्य श्रीसीतानाथस्य स्वरूप-गुणविभूत्यादिप्रतिपादनपूर्वकं निरूपणं कर्तुमानन्दभाष्यकारश्रीरामानन्दाचार्यचरण उपक्रमते-अर्थात् पूर्वप्रतिपादितदृश्यादृश्यजडचेतनयोरव्यभिचरित-रूपेण धारकत्वनियामकत्वसर्वशेषित्वादिगुणसम्बन्धात् देवमनुष्यतिर्यगादिभेदभिन्नाशेषदेहिनां कार्यकारणस्वरूपं सकलहेयविरोधितया सर्वज्ञत्वसर्वनियामकत्वसर्वशक्तित्वादिसकलकल्याणगुणाकरतया समस्तस्वभिन्नवस्तुविलक्षणं शास्त्रविहितसर्वयागादिकर्माराध्यं सर्वकर्मफलप्रदायकं सर्वप्राणिनां सुहृद्भूतं मोक्षमिच्छतामाश्रयं मुक्तप्राप्यं सकलवेदान्तशास्त्रैकगम्यं भगवन्तं सर्वेश्वरश्रीसीतानाथं तत्वत्रयान्तर्गतं चरमतत्त्वं निरूपयितुमाचार्यः उपक्रमते 'विश्वमि'त्यादिश्लोकाभ्याम्।**

**अखिलं सूक्ष्मासूक्ष्मजडचेतनसाधारणं विश्वं सर्वम् जगत् यतो यस्मादीश्वरात् सर्वेश्वरश्रीरामात् अद्धा साक्षादेव न तु परम्परया जातं जनिमदभूत्, उत्पन्नं जगत् येनेश्वरेण अवितं पालितं सत्स्थेमानं लभते पुनर्यत्र यस्मिन् परमेश्वरे अन्ते प्रलयकाले**

लीयते तिरोहितं भवति न तु विनष्टं भवति भगवत् शरीरत्वात् । तथा यस्य
भगवतः तेजसा प्रकाशेन एषः सर्वविश्वजनप्रसिद्धः सूर्यो दिनमणिः चन्द्रश्च
एतदखिलं जगत् अविरतं सर्वदैव भासयति प्रकाशयति । यद्भीत्या यस्य पर
मेश्वरस्य भीत्याभयेन वातः सर्वदेरणस्वभावो वातो वाति सर्वदा चलनमेव करो
ति न तु कदाचिदपिस्थिरीभूयावतिष्ठते । तथा अवनिसर्वाधारभूता पृथिवी सुतलं
नैव याति, यद्यपि इयमतिगुरुभूता तथापि अतिगुरुत्वेऽप्यवस्थानदेशापेक्षया तद
धोदेशं न याति यद्भीत्येतिशेषः । तथा यः ईश्वरः सर्वं कर्तुमकर्तुं शक्तः, तथा
ज्ञः सर्वविषयकज्ञानवान् तथा कूटस्थः सर्वकाले कूटवत् पर्वतवत् अकम्प्यः
अतएव साक्षी सर्वज्ञत्वादिगुणविशिष्टत्वात् पदार्थमात्रस्य द्रष्टा । एकः सजातीय
द्वितीयरहितोऽथवा निरूप्यमाणतत्वत्रयेषु प्रधानम् । बहुशुभगुणवान् हेयप्रत्य
नीकसकलकल्याणगुणालयः । अव्ययो व्ययो नाशस्तद्रहितः, विश्वभर्ता सर्वस्य
पालनपोषणकारकः ॥८॥ श्रीमान् श्रिया सीतया सर्वदा युक्तः अर्च्यः विधि-
भवप्रमुखैर्ब्रह्मशिवादिभिर्महिमाशालिभिरर्च्यः पूज्यः शरण्यः शरणागतत्राणाय
कुशलो दक्षः, बहुविधविवुधैः ब्रह्मादिदेवैर्योगिभिश्च बहुविधप्रपत्तिलक्षणयोगेन
गम्याङ्घ्रिपद्मः प्राप्तचरणकमलः । तथा क्लेशादिभिरस्पृश्यः, अविद्यादिक्ले
शनकर्मादिस्पृशैरस्पृश्यः तदीयस्पर्शरहितः । सत्समुदितसुयशाः श्रीवाल्मीक्या
दिभिर्गीतकीर्तिः, सूरिमान्यः नित्यसूरिभिर्मान्यः पूजनीयः वदान्योऽभिलषित-
फलप्रदाता चतुर्वर्गफलप्रद इत्यर्थः । इत्थं भूतो भगवान् श्रीरामचन्द्रः अशेषैः
साधुवेदैः सुमहितमहिमा साधु यथा स्यात् तथा शाश्वत् अनवरतम् अशेषैः
समस्तवेदैः सुमहितमहिमा गीतकीर्तिः, अतएव निर्मृत्युः मृत्युभयवर्जितः विना
शरहितः । सर्वशक्तिः अनेकस्वाभाविकज्ञानादिशक्तिसमन्वितः विकलुषविजरः
सर्वप्रकारकनिन्दितकर्मरहितः 'गीर्मनोभ्यामगम्यः' शिवादिप्रमुखपुरुषाणां
वाङ्मनोभ्यामगम्यः 'यतो वाचो निवर्तन्तेऽप्राप्य मनसा सह' इति श्रुत्या वाङ्म
नसाऽतीतः सर्वेश्वरश्रीरामचन्द्र एव तत्त्वत्रयान्तर्गतेश्वरात्मकतृतीयतत्त्ववाच्यो
ज्ञातव्यः ॥९॥

तदत्राखिलं निरवशेषं स्थूलसूक्ष्मसाधारणं चराचरात्मकमिदं विश्वं कार्या
त्मकं प्रतिनियतदेशकालस्थितिकं लोकपालग्रहनक्षत्राद्यधिष्ठितं जगत् यतः सर्वज्ञ



सर्वशक्तिसमन्वितपरमेश्वरतः अद्धा साक्षाज्जातम् नतु परम्परया तदुत्पन्नमेतावता
परमाण्वादिकारणकत्वं हिरण्यगर्भादिद्वारा जगतो जनिरितिमतं प्रतिक्षिप्तम् 'यो
ब्रह्माणं विदधातिपूर्वम्' इत्यादिश्रुत्या परमेश्वरो हिरण्यगर्भमुत्पादयति उत्पन्नश्च
तदग्रिमं प्रपञ्चोत्पादयतीति मतस्य भगवति सर्वेश्वरश्रीरामे साक्षादुत्पादकत्व
कथनेन निराकृतं भवति, 'यतो वा इमानि भूतानि' इत्यादिश्रुतिस्वारस्यात् न
परम्परया जगदुत्पत्तिः परमेश्वरात्साक्षादेव सर्वप्रपञ्चानामुत्पत्तेः एतादृशं समुत्पन्नं
जगत् अवितं समुत्पन्नं सदवितं रक्षितं पालितं च भवतीति शेषः । तथा यत्र
यस्मिन् परमेश्वरे अन्ते प्रलयकाले लीयते परमेश्वरे एव जायमानजगतो लयो
भवतीति 'यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः । मृत्युर्यस्योपसेचनं क इत्था वेद
यत्र सः' इत्यादिश्रुत्या परमेश्वरे जगतः संहारो भवतीति ज्ञायते । श्रुतिरप्य
मुमर्थं पुष्णाति 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति, यत्प्रयन्त्य
भिसंविशन्ति तद्विजिज्ञासस्व तद् ब्रह्म' अर्थात् यतः सर्वज्ञसर्वशक्तिसमन्वितात्
इमानि परिदृश्यमानान्याकाशप्रमुखपृथिव्यान्तानि कार्यजातानि सर्गकाले जाय
मानानि भवन्ति तथा येन परमेश्वरेण जातानि जीवन्ति स्वं स्वं स्थितिं लभन्ते
पुनश्च प्रलयकाले विनाशोन्मुखानि यस्मिन् परमेश्वरे एव अभिविशन्ति तत्रैव स्व
कीयनामरूपं विहाय शरीररूपेण तत्रावस्थितानि भवन्ति, तदेव ब्रह्म तदेव जिज्ञा
स्यं मोक्षार्थिभिर्ज्ञेयमुपास्यञ्चेति । संपूर्णजगतः परब्रह्मश्रीरामादेवोत्पत्यादिकथना
त्परमेश्वरे अभिन्ननिमित्तोपादानत्वरूपकारणत्वं प्रतिपादितं भवति । स्मृतिरपि-

'यतः सर्वाणि भूतानि भवन्त्यादियुगागमे ।
यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये ॥'
ततः स्वयंभूर्भगवान् सिसृक्षुर्विविधाः प्रजाः ।
अप एव ससर्जादौ तासुबीजमवासृजत् ॥'
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम्'

अर्थात् आदियुगागमे कल्पस्यादिकाले सर्गादावित्यर्थः सर्वाणि स्थावर
जङ्गमादिभूतानि यतः सर्वज्ञाद्भवन्ति समुत्पद्यन्ते इत्यर्थः । पुनश्च युगक्षये सर्गस्य
विरामकाले यस्मिन् ब्रह्मण्येव लयं यान्ति स्वसंहृतिं लभन्ते तद् ब्रह्मेति । तथा
विविधा विचित्रा अनेकविधाः प्रजाः सिसृक्षुः स्वयंभूः परमेश्वरः आदौ सर्वप्रथ

मम् अप एव भूतान्तरोपलक्षितानि जलानि ससर्ज तास्वप्सु बीजं न्यदधात् येन जरायुजादि भूतानामुत्पत्तिर्जाता । कल्पक्षये प्रलयकाले भगवति सर्वस्य प्रलयो भवति कल्पादौ संहृतस्य सर्वस्य पुनराविर्भावो भवतीतिभावः । **एकस्मिन्नेव परमेश्वरे जगत उत्पत्तिस्थितिप्रलयकथनेन लोकसिद्धकार्यकारणभावापेक्षया भगवति ततो विलक्षणकार्यकारणभावः कथितो भवति, तथाहि लोके सजातीयं कारणमुपादानं समवायिकारणं भवति यथा घटं प्रति कपालद्रव्यात्मकम्, विजातीयं चेतनावन्निमित्तकारणं भवति यथा घटं प्रति कुलालः, जगतः समस्य समवायिकारणं परमाणुः कर्तृकारकं कुलालः । तत्र कार्यस्य स्थितिर्विनाशश्च समवायिकारणे एव भवति न तु निमित्ते इह तु सर्वज्ञे श्रीरामे उत्पत्यादिकथनेनाभिन्ननिमित्तोपादानत्वं प्रतिपादितवानाचार्यः** । अत्रत्यं तत्त्वम् 'प्रकृतिश्च प्रतिज्ञा दृष्टान्तानुपरोधात् (१।४।२३) इति **सूत्रीयानन्दभाष्ये 'यत्सूक्ष्मचिदचिद्विशिष्टं कारणावस्थं ब्रह्म तदेव सृष्टिकाले स्थूलचिदचिद्विशिष्टं भवतीत्युपादानत्वं निष्पन्नतरम् । तत्र प्रकृतिजीवयोर्जगदुपादानत्वे सत्यपि तत्र ब्रह्मणः प्रधानत्वाद् 'वैशेष्यात्तु तद्वादस्तद्वादः' इति न्यायाद् ब्रह्मोपादानं जगदिति वचनमुपपद्यते । न च मृणमात्रज्ञानेन मृण्मयघटादिदृष्टान्तासङ्गतिः तत्रापि मृदो मृण्मयस्य च कार्यस्य त्रिवृत्कृतत्वेन त्रिभूतात्मकत्वे सत्यपि मृदः प्राधान्यान्मृण्मयमिति वचनमुपपद्यते । यथात्रत्रिवृत्कृते पृथिव्याः प्राधान्यं तत्पृथिवीत्युच्यते । यत्र जलस्य प्राधान्यं तज्जलमित्युच्यते । तथैव चिदचिद्ब्रह्मोपादानकत्वेऽपि जगतस्तत्र ब्रह्मणः प्राधान्याद् ब्रह्मोपादानं जगदित्युच्यते । विकारकार्यं जगच्चराचरं तन्नामध्येयञ्च वाचारम्भणं वागालम्वनमात्रं चिदचिद्ब्रह्मैव सत्यमिति दृष्टान्तदार्ष्टान्तयोः समानत्वान्मृण्मयस्य सर्वस्य मृदुपादानकत्ववत्सर्वस्य जगतो ब्रह्मोपादनकत्वं निष्पन्नतरमेव' इत्यादिरूपेण प्रपञ्चितम्** । विशेषस्तु भाष्यविवरणेऽनुसन्धेयः ।

सूर्यो यत्तेजसेन्दुरित्यादि **सूर्यो दिनमणिः सरति गगने चलतीति सूर्यः अथवा सुवति कर्मणिलोकं प्रवर्तयतीति सूर्यः दृश्यते च सूर्योदयादनन्तरमेव लोकानां कृषिगोरक्षणादिकार्यकर्तृणां स्वे स्वे कार्ये प्रवृत्तिः, तदीयास्तमयानन्तरं सर्वेऽपि स्व स्व व्यापाराद्विरताः स्वापादिमुखाभवन् निवृत्तसर्वव्यापारा भवन्ति, एतादृशः सूर्यस्तथा,** इन्दुश्चन्द्रमा **नक्षत्रग्रहादिकश्च तेजसा इन्दुः प्रकाशितः सन्नेव** सकलं सर्वं विश्वजातम्, अविरतं **निरन्तरं** भासयति **प्रकाशविशिष्टं करोति अर्थात् यदिमे सूर्यादयः प्रकाशकतया लोके प्रसिद्धास्ते सर्वे न स्वतेजसा प्रकाशयन्ति लोकान् किन्तु पारमेश्वरतेजो विशिष्टाः सन्त एव तथा कुर्वन्तीति, तथा च श्रुतिः**' न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोयमग्निः । तमेवभान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' इति । **अर्थात्-तत्र परमेश्वरे सूर्यः सकललोकप्रकाशकः सर्वलोकस्य चक्षूरूपः सूर्यो न भाति, सर्वलोकप्रकाशोऽपि सूर्योऽयं परमात्मानं न प्रकाशयति यथा प्रदीपो न प्रकाशयति सूर्यं किन्तु स्वयमेव सूर्यतेजसाऽभिभूतो भवति, तथा सूर्योऽपि भगवन्तं परमेश्वरं स्वतेजसा नो प्रकाशयति** किन्तु तदीयतेजसा **स्वयमेवाभिभूतो भवत् प्रकाशकत्वसामर्थ्यं जहाति एवं चन्द्रमाग्रहतारकादयो लोके प्रकाशका अपि न ते परमात्मानं प्रकाशयन्ति, परमात्मप्रकाशाभिभूतप्रकाशत्वात्** । तदुक्तम्-

'दिवि सूर्यसहस्त्रस्य भवेद् युगपदुत्थिता ।
यदि भाः सदृशी सा स्याद् भासस्तस्यमहात्मनः ।।

इत्यादिवचनेन कोटिसूर्यो यदि संभूयैकदैकत्रोदितो भवेत्तदा तत्सदृशः प्रकाशः स्यादपि कदाचित्, परमेश्वरप्रकाशस्य सर्वातिशायिप्रकाशतया न स्वेतरप्रकाशप्रकाश्यत्वं कदाचिदपीति न ग्रहनक्षत्रप्रकाश्यः परमात्मेतिभावः । तदत्रानुसन्धेया गीतार्थचन्द्रिकास्थिता 'वस्तुतोऽवाङ्मनसगोचरे भगवति यथाकथञ्चिन्मनो निवेशार्थमिदमुच्यतेऽन्यथा सूर्यसहस्त्रस्यापि प्राकृतत्वात्तदीयप्रभाभिरप्राकृतपरमपुरुषप्रभायाः कथं सादृश्यं कथमिव चोपमानोपमेयभावसम्भाव नापि स्यादिति सुधीभिर्विभावनीयम्' इत्यादिरूपा जगद्गुरुश्रीरामानन्दाचार्य श्रीरघुवराचार्यवेदान्तकेसरिणानुगृहीता वाक् । तथा **परमेश्वरे** विद्युत्तडिदपि न भाति **अर्थात्** विद्युतः प्रकाशेनापि परमात्मा **प्रकाशितो नैव भवति** ।

**यदा खलु प्रकाशमधिकृत्य महामहिमशालिनां सूर्यादीनां परमेश्वरप्रकाशनविषये ईदृशी गतिरर्थात् न ते परमेश्वरं प्रकाशयितुं समर्था भवन्ति तदा अयं प्रत्यक्ष ग्राह्यः काष्ठाद्याश्रिताऽ**ग्निः कुतः **समर्थः, अर्थादग्निस्तु तत्प्रकाशने नैव समर्थः संभवति । कुत इमे सूर्यादयो न प्रकाशयन्ति** तत्राह-'तमेवभान्तमित्यादि' तमेव **परमात्मानं** भान्तं **प्रकाशक्रियां कुर्वन्तमिदं** सर्वं **सूर्यचन्द्रादिकमनुभाति**

अर्थात् परमात्मप्रकाशोत्तरकाले एव सूर्यादिकोपि प्रकाशितो भवति स्व स्व स्वरूपप्रकाशनमपि सूर्यादीनां तत्प्रकाशाधीनमेव, न तु स्वरूपप्रकाशत्वमपि भगवत् प्रकाशमन्तरेणेति ।

ननु यदि सूर्यादिप्रकाशेन प्रकाशनं जाग्रति वस्तुनो न भवति तदा अस्तमिते आदित्ये कस्य प्रकाशेनेदं जगत् प्रकाशितं भवतीति प्रश्नं श्रुत्वा चन्द्र प्रकाशेन अस्तमिते चन्द्रे कथम् ? इत्यादिप्रश्नोत्तराभ्यामादित्यादीनां वस्तुप्रकाशकत्वं श्रुतौ प्रतिपादितं तत्कथं संगच्छते ? तत्राह-'तस्य भासा सर्वमिदं विभातीति' यदिदं सर्ववस्तुप्रकाशनं श्रुतौ समधिगतं न तत् सूर्यादिप्रकाशप्रयोज्यं किन्तु तस्य सर्वप्रकाशकस्य परमेश्वरस्य भासा प्रकाशेन स्वेतरसर्वविलक्षण प्रकाशेन, इदं स्थावरजङ्गमात्मकं जगत् विभाति प्रकाशितं भवति । अर्थात् भगवत् प्रकाशाधीनं वस्तुमात्रस्य प्रकाशनं भवति, अतएव श्रुतौ प्रकाशकप्रश्न प्रतिवचनप्रवाहे' 'वाचैवायं ज्योतिषा' 'आत्मैवायं ज्योतिषा' इत्यादिप्रकरणे नोपसंहृतवान् याज्ञवल्क्यः । तस्मात् परमात्मप्रकाशेनैव सर्वं प्रकाशितं भवति न तु कश्चिदपि परमात्मानं प्रकाशयितुं समर्थ इतिसारः । न केवलमस्मिन्नर्थे श्रुतिरेव प्रमाणं स्मृतयोऽपि जागरुकास्तथाहि-

'यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धिमामकम् ॥ (१५।१२) इति ।

अर्थात्-पार्थप्रतिबोधनावसरे गीतायां कथितं भगवता श्रीकृष्णेन आदित्ये दिनमणौ अविष्वग् भावेन सम्बद्धं सतः यत्तेजः प्रकाशोऽखिलं सर्वं स्थावरजङ्गमात्मकं जगत् पदार्थमात्रं भासयते प्रकाशयति यत् तेजश्च चन्द्रगतं तथाऽग्निगतं च तत्तत्सर्वमेव मामकं मम परमेश्वरस्यैव तेजो न तु सूर्यादीनाम्, मदीयतेजोलेशेनैव ते सूर्यादयोऽपि तेजो विशिष्टा भवन्ति, स्थावरजङ्गमात्मक सर्वप्रपञ्चानां भगवद्विभूतित्वेन वर्णनात् तदुक्तं श्रुतौ-'एतस्यैवानन्दस्यमात्रामुपजीवन्ति अन्यानि भूतानी'ति । एतावता सूर्यादितैजसे प्रतिभासनं तेजो न सूर्यादीनां किन्तु जगत् शेषिणः परमेश्वरश्रीरामस्यैव, तस्मात् सूर्यादितेजसा परमात्मा प्रकाशितो न भवति किन्तु परमात्मतेजसैवान्ये प्रकाशिता भवन्तीति ज्ञेयम् । एतादृशगुणगणविशिष्टो भगवान् श्रीसीतानाथ एव परमेश्वरः । स एव तत्त्वत्रि



तयमध्ये मणिरिवमणिभूत उपासकैरुपास्यो ज्ञेयश्चेति । 'सूर्यमण्डलमध्यस्थोध्येयः सीतासमन्वितः' इत्यागमोक्तेः । न केवलं 'जन्माद्यस्य यतः' 'यतो वा इमानि भूतानि जायन्ते' इत्यादिसूत्रश्रुतिसमर्थितं जगज्जन्मादिकारणत्वं परतत्वं परमेश्वरस्य स्वरूपपरिचायकं न वा सूर्यचन्द्रादितेजो धातुः प्रकाशकत्वं परमेश्वरस्वरूपपरिचायकं किन्तु वायुयमादिभयप्रदत्वमपि तत्स्वरूपपरिचायकमिति वक्तुमुपक्रमते 'यद्भीत्या वाति वायु' रित्यादि । 'यद्भीत्या वाति वातः' यस्य सर्व शक्तिमतः परमेश्वरस्य श्रीरामस्य भीत्या भयेन वातो वायुदेवः सर्वदा ईरणस्वभावकः क्षणमपि नैकत्रावस्थितो भवति किन्तु गतिमानेव । वायुर्द्विविधो बाह्याभ्यन्तर भेदात्, तत्र बाह्यो वायुः स्वगात्रेण सर्वं सर्वदापोषयति अमेध्यमपि पवित्रयति । यश्च शरीरान्तः संचारी स शरीराभ्यन्तरे मुखनासिकाभ्यां प्रवेशं निर्गमनं च कुर्वन् सर्वस्य प्राणरूपो भूत्वा सर्वं सर्वदा जीवयति 'वायुर्वै क्षेपिष्ठा देवता' इत्यादि श्रुतिसमर्थितः सर्वस्य प्राणपोषणकारी, यदि क्षणमपि आलस्यं कुर्यात् तदा सर्गकालोपि प्रलयायैव भवेदिति कथितगुणविशिष्टो वायुदेवोपि यस्य भयेनानवरतं भ्रमन्नेव भवति न तु कदाचित् स्वकार्यान्निवृत्तव्यापारो भवति । अर्थात् जगदुपकारकत्वादिमहामहिमो वायुरपि यस्य भयेन सर्वदा स्वकार्ये संलग्नो भवन्नास्तेमोदास्ते । किन्तु सर्वदा वाति देवमनुष्यतिर्यग्, नारकादि प्राणिनिकायेषु संचरणशीलो भवति स श्रीसीतानाथ एव पारमेश्वरं तत्त्वं नान्यः।

तथा 'अवनिरपि' सर्वाधारभूताधरित्री यस्य परमेश्वरस्य भयेन भीता सती सुतलं प्रतिष्ठारहितं पातालं नो याति, किन्तु 'रसा विश्वम्भरास्थिरा' इति स्थिरेति नाम सार्थकयति, अन्यथा यदि कदाचित् ईदृशी न भवेत्तदा स्थिरेति नाम पृथिव्या निरर्थकमेव भवेत्, अर्थादीशभयभीता स्वस्थानात् कदापि न चलति ईदृशगुणयुक्तः परमेश्वरः स चायोध्याधिपतिश्रीरामचन्द्रः एव नान्यः संभवति, स एव तत्त्वत्रयेषु तत्त्वशेखर इति । श्रुतिरप्यमुमर्थं पोषयति-'भीषाऽस्माद्वातः पवते भीषा उदेति सूर्यः । भयादिन्द्रश्च वायुश्चमृत्युर्धावति पञ्चमः' अर्थात् सर्वनियामकसर्वधारकपरमेश्वरस्य भीषा-भयेन वातः देवेष्वतिशक्तिशालिसर्वदेरणस्वभावोऽपि वायुः पवते चलनादिक्रियां बाह्यरूपमास्थाय करोति, तथाऽन्तररूपमास्थाय प्राणनादिक्रियां कुर्वन्नेवावतिष्ठते, अर्थात्

यत्कार्यकरणाय परमेश्वरेण यत्र नियोजितस्तादृशं कार्यमतन्द्रितो भूत्वाऽनवरतं करोत्येव, यथा लोके सुशासकस्याज्ञां शासकभयेन प्रकृतिमण्डलः करोत्येव, यद्यहमेतस्याज्ञां न पालयामि तदा दण्डेदिति मन्वानः' इति भवति वातादिनाम नलसरूपेण स्व स्व कार्यकरणे भयहेतुरेवेति। तथा' भीषा उदेति सूर्यः' अस्य परमेश्वरस्य भीषा भयेन भीतः सूर्यः सर्वप्रकाशकतया देवेष्वतिगरिष्ठोपि उदेति यथाकालमेवनियमत उदयमस्तमयनं च करोति, तथोक्तम्-प्रेरितः काल चन्द्रेण निशि संस्थातुमक्षमः' अर्थात् कालचन्द्रेण परमेश्वरभयेन प्रेरितः स्व भावो निशि रात्रौ स्थातुमहमक्षमः नियमत उदयमस्तमयनं च करोतीति सूर्य वाक्यार्थः, तत्र हेतुं दर्शयति 'भीषा' भीषा भयेन अर्थात् ममानालस्य स्वभावो भगवदाज्ञाप्रयोज्य एव यदहमेतादृशो देवेषु लोके च प्रथितस्वभाव आज्ञामनुवर्ते तदा का कथा मदन्यस्येति। 'भीषाऽस्मादिन्द्रश्चेत्यादि, अस्य महाशक्तिकस्य पर मेश्वरस्य भीषाभयेनैव इन्द्रोबलाभिमानिदेवराजोऽग्निः सर्वदाहकः तथा पञ्चमो यमः सर्वसंहारकारकोऽपि धावति सर्वथा विगततन्द्रा इमे इन्द्रप्रमुखा देवाः सर्गादौ तत्तत्कार्यकरणाय परमेश्वरेण तत्तत्कार्ये विनियोजिता आकल्पं स्वं स्वं कार्यं कुर्वाणा एव भवन्ति न मनागपि तत्तत्कार्ये आलस्यं कुर्वन्ति यदाज्ञया भीताः संभवन्त इति। तथा 'यः सर्वज्ञः स सर्ववित्' 'यः परमेश्वरः सर्वज्ञः सर्व पदार्थविषयकसामान्यज्ञानवान्। 'इदं चिदिदमचित्' इत्यादिरूपेण स सर्ववित् प्रातिस्विकतत्तद्रूपेण तत्तत् व्यक्तित्वरूपेण सर्वविषयकज्ञानवानिति श्रुतिरपि प्रमाणम्।

पुनः स परमात्मा सर्वशेषी 'साक्षी' तत्तत् शुभाशुभकर्मफलभोक्तुर्जीवस्य यानि शुभानि अशुभानि वा कर्माणि तेषां साक्षी साक्षात् द्रष्टा, जीवो हि स्वकीयकर्मणः फलं सुखं दुःखं वा अनुभवन्नपि तत्कारणं साक्षान्नानुभवति, कर्मणामतीन्द्रियेण प्रत्यक्षेणानुभवाभावात्। परमेश्वरस्तु सर्वं सर्वदा पश्यत्, सर्वदैव साक्षादनुभवन् सर्वस्य सदा द्रष्टा साक्षी भवति। एतावता साक्षाद् द्रष्टृत्वं सर्वसाक्षित्वञ्च प्रदर्शितं सर्वेश्वरश्रीरामचन्द्रस्य।

पुनश्च स परमेश्वरः कूटस्थः कूटवत् अयोघनवत् सर्वदैकरूपेणावस्थितः। यथा प्रस्तरमयः शैलश्रृङ्गप्रदेशो वर्षातपादिसंपर्कयुतोपि तज्जनितसुख-



दुःखादिविकाररहित एव सर्वदा भवति तथैव परमेश्वरः सर्वदा सर्वथा प्राकृतिकविकारिगुणरहितत्वेन कूटवत् वर्तमानः कूटस्थ इति कथ्यते। सर्वथा सर्वविकाररहितोऽविकारी परमेश्वर इति, तथा स परमेश्वरः एक एव नानेको जीववत् तत्रैकोऽद्वितीयः स्वेतरसकलविलक्षणो मुख्य इति वा असहायो वा नास्ति कश्चिदस्य सहायकः यथा घटादिनिर्मातुर्घटनिर्माणे स्वेतरसहायकचक्रचीवरमृत्तिकाजलादिलक्षणसहायकस्य सहकारिकारणस्यापेक्षा भवति सहायकाभावे सत्यपि कुलाले घटादिकार्यादर्शनात् तद्वत् परमेश्वरस्य जगन्निर्माणे स्वेतरसहायकस्यापेक्षा न भवति। अथवा एकशब्दस्य मुख्योऽर्थः। यथा घटोत्पादने चेतनत्वान्मुख्यं कारणं कुलालस्तदन्येषामचेतनतया गौणत्वं तथैव जगन्निर्माणे मुख्यं कारणं परमेश्वरः तदन्ये गौणकारणरूपा एव। अर्थात् सर्गोत्पादने मुख्यं कारणं प्रदेशः सहकारिकारणमपि तदेव न तु तदन्यत् किञ्चिदपि सहकारितया अपेक्षितमिति। यथा घटाद्युत्पादने मुख्यं कारणं कुलालः सहकारिकारणं कुलालादतिरिक्तं चक्रादिकजन्यभ्रमादिव्यापारवत्तया सहकारिकारणम्, नात्र जगदुत्पादने मुख्यं कारणं किमप्यन्यत्, तदन्यच्च सह कारिकारणं किन्तु प्रकृते यथा लूताकीटः तन्तूत्पादने मुख्यं कारणं सहकारिकारणञ्च भवति तथा जगत् सर्गे ब्रह्मपदवाच्यश्रीरामचन्द्र एव सहायकानपेक्षाभिन्ननिमित्तोपादानकारणं भवति। न च लूतातन्तु स्थले लूताकीटो मुख्यं कारणं तथा मुखनिर्गतलालासम्पादकं तदीयं शरीरमेव सहकारिकारणमितिवाच्यम् केवललूताकीटशरीरस्याकारणत्वात् जीवसंसृष्टजीवस्यैव कारणत्वेन तादृशोभयकारणत्वस्यैकस्मिन्नेव समावेशादितितत्रोभयकारणत्वमेकस्यैव लूताकीटस्य तथैव प्रकृते जगत्सर्जनकार्यं प्रति परमेश्वरस्यैव तदुभयकारणत्वमिति सुष्ठूक्तमेकोऽसहाय इतिसंक्षेपः। तथा स परमेश्वरः 'बहुशुभगुणवान्' तत्र बहवः शुभाः कल्याणगुणाः। 'यः सर्वज्ञः स सर्ववित्' इत्यादिश्रुतिप्रसिद्धसर्वज्ञत्व सर्ववित्त्व 'यतो वा इमानि भूतानि जायन्ते' इत्यादिश्रुतिबोधितजगत्कारणत्व स्थितिप्रलयादिमत्व 'न तत्समश्चाभ्यधिकश्च दृश्यते' इत्यादिश्रुतिप्रसिद्ध 'समाभ्यधिकहरहितत्वकृतित्वकृतज्ञत्वमोहक्रोधहर्षादिमत्वस्थिरप्रज्ञत्वशरणागतवात्सल्यदृढव्रतत्वादिका गुणाः, तत्र भावरूपा अभावरूपाश्च गुणाः यस्मिन् स

बहुशुभगुणवान् । तत्र भावरूपो गुणः सर्वज्ञत्वादिः यत्र भावात्मक एव पदार्थः
प्रकारो भवति कृतिमत्वादिकं वा सर्वज्ञत्वादिकं वा, अत्र कृतिमत्वं कृत्या
श्रयत्वं तत्र भावात्मकः प्रयत्नापरपर्यायरूपा कृतिरेव स्वाश्रये प्रकारतया भाति
कृतिमान् कृत्याश्रय एव कर्तेति ज्ञायते, यथा वा सर्वज्ञत्वं तच्च सर्वविषयकज्ञान
वत्वमत्रभावात्मकज्ञानपदार्थ एवात्मनि प्रकारतया भासते । अभावात्मको गुणो
जगत्कारणत्वादिरूपः । तत्र कार्यसमानाधिकरणात्यन्ताभावप्रतियोगित्वाभाव
रूपमेव कारणत्वम् यथा घटाधिकरणे विद्यमानोऽभावो न मृत्तिकादेः किन्तूदा
सीनपटाद्यभावः तादृशाभावप्रतियोगित्वं पटे प्रतियोगित्वाभावोमृत्तिकादौ यतो
घटाधिकरणमृत्तिकादेरभावो नैव वक्तुं शक्यते घटाधिकरणे मृत्तिकादेर्विद्यमा
नत्वादन्यया घटादिकं प्रति मृत्तिकादेः कारणत्वमेव न स्यात् ततश्च लोकसिद्ध
कार्यकारणभावपरिभाषैवास्तमियात् । ततश्च कारणत्वादिकमभावरूपो धर्म
इतिजगत्कारणत्वात्मकाभावरूपगुणवान् परमेश्वरः । अत्र कारणत्वाभावे न्याय
मतपरिभाषिकगुणत्वं नास्ति कारणत्वस्याभावरूपत्वात्, न्यायमतसिद्धरूपा
द्यन्यतमस्य भावरूपत्वेन भावाभावयोस्तादात्म्यासंभवात् तथापि गौणत्वमेवात्र
गुणत्वं विवक्षितम् । एतादृशगौणत्वरूपं गुणत्वं भावाभावोभयसाधारणमिति
भावाभावात्मकानेकासंख्येय कल्याणगुणादिकाबहवो गुणाः सन्ति यत्र स बहु
शुभगुणवानिति । एतादृशबहुशुभगुणवान् भगवान् श्रीसीतानाथ एव नान्य
इतिसारः । तदत्र श्रीमद्रामायणविषये वादीभकण्ठीरवश्रीमधुराचार्यप्रणीतश्रीभ
गवद्गुणदर्पणे प्रतिपादिता दयादि प्रीत्यन्तानेकगुणानुसन्धेयाविशेषार्थिभिः ।

तथा स-'अव्ययः' तत्र व्येति विनश्यतीतिव्ययः न व्येति न विनश्यतीत्यव्य
यः । अर्थात् विनाशात्मकचरमभावविकाररहितोऽव्ययः सर्वविकाररहितः, तत्र
पदार्थानां विनाशो द्विप्रकारेण भवति, क्वचिद् गुणादिधर्मनाशपूर्वको विनाशः
क्वचिद् धर्मिणो विनाशपूर्वक एव विनाशः । तत्राद्यो यथा यत्र धर्मीस्वरूपेण
यथा पूर्वमवस्थितोऽपि गुणादिधर्मस्य कारणबलेन विनाशो भवति यथा श्याम
घटो विलक्षणतेजः संयोगेन श्यामगुणनाशेन पाकवशात् रक्तो जायते तत्र श्या
मो घटो नष्टः रक्तघटश्चोत्पन्न इति व्यवहारो जायते । तत्र स्वरूपतो घटो न नष्टः
किन्तु विशेषणस्य श्यामत्वगुणस्यैव पाकेन नाशो जातः परन्तु गुणात्मकवि



शेषणनाशाधीनविशेष्येऽपि विनाशप्रत्ययो जायते इति प्रकृते गुणविनाश
पूर्वकद्रव्यस्यापि विनाशः कथितो भवति । यत्र तु घटादिरूपः पदार्थो दण्डादि
प्रहारेण विनष्टस्तत्र घटादिरूपधर्मिणः स्वरूपेण नाशो जायते इत्ययं विनाशो
धर्मिणः स्वरूपनाशः । विशिष्टविनाशस्तु त्रिधा भवति क्वचिद्विशेषणनाश-
पूर्वकः क्वचिद्विशेष्यनाशपूर्वकः क्वचित्तदुभयविनाशपूर्वकः । यथा यत्र दण्डा
दिविशेषणनाशेन दण्डी विनष्टः इति प्रतीतिर्जाते, तत्र पुरुषस्तु विद्यते एव किन्तु
पुरुषात्मकदण्डीति विशिष्टैकदेशविशेषणस्य विरहपूर्वको विशिष्टस्य विनाशो
जातः । यत्र तु दण्डात्मकविशेषणं यथा पूर्वमवस्थितमेव अर्थात् दण्डस्तत्र
विद्यते एव पुरुषस्तु तत्स्थानं परित्यज्यान्यत्र गतस्तत्रापि दण्डसत्वेऽपि पुरुष
विरहप्रयुक्तो दण्डीनास्तीति प्रत्ययो भवतीति विशेष्यविरहप्रयुक्तो विशिष्टस्य
दण्डिनो विरहो जायते । अत्र विशेष्यपुरुषविरहप्रयुक्त एव विशिष्टस्य विरहः,
विशेषणस्य यथा पूर्वमवस्थितत्वात्, दण्डं तत्रैव निधायपुरुषस्तत्थानं प-
रित्यज्यान्यत्र गत इति । यत्र दण्डरूपविशेषणमपि विनष्टं पुरुषोऽपि तत्स्थानं
परित्यज्यान्यत्र प्रव्रजितस्तत्र विशेषणविशेष्योभयविरहप्रयुक्तो विशिष्टस्या-
भावो, यतः तदुभययोरपि विरहात् । यथा वा 'शिखी विनष्ट' इत्यादौ सत्यपि
शिखिनि शिखाविनाशाधीनः शिखिनो विनाशव्यवहारः, शिखायां यथा पूर्वम
वस्थितायामपि शिखिनो विशेष्यस्यैव विरहप्रयुक्त एवं 'शिखी विनष्ट' इति
प्रत्ययो जायते तत्र विशेष्यविरहप्रयुक्तो विनाशः । क्वचित्तदुभयविरहप्रयुक्त
एव तादृशविनाश इत्यत्र विशेषणविशेष्योभयप्रयुक्तः शिखी विनष्ट इत्यादि
व्यवहारः । एवमेवान्यत्रापि यथामति उदाहरणं प्रदर्शनीयम् । परन्तु प्रदर्शितो
विनाशक्रमो जन्यानां स्वरूपतो विशेषणतो नित्यानामपि कदाचित् भवति ।
अर्थात् यो हि जन्यः पदार्थः स कदाचित् स्वरूपतः क्वचित् विनश्यति, कदाचि
द्विशेषणनाशाधीनो विनश्यति क्वचित्तदुभयविनाशाभ्यां विनश्यति । नित्योऽपि
पदार्थः यत्र जन्यगुणधर्मादिविशेषणवत्तया प्रतीतो भवति तत्र विशेषणविना
शेन तद्विशिष्टतया विनश्यतीति व्यवहारभाग् भवति । यस्तु विशेषणविशेष्यो
भयरूपेणाजन्यस्तत्र तदुभयोरजन्यत्वेन नित्यत्वात् कदापि केनापिरूपेण विना
शो न जायते यथा जलीयतैजसवायवीयपरमाणूनाम्, तत्र तदीयपरमाणु

तद्गतगुणानामपि नित्यत्वात्, तथैव प्रकृते परमेश्वरगुणानाम् परमेश्वरस्य च नित्यत्वेन न तस्य परमेश्वरस्य तथा तदीयगुणस्य विनाशो जायते । अर्थात् 'सत्यं ज्ञानमानन्दं ब्रह्म' 'नित्यो नित्यानाम्' अजो नित्यः शाश्वतोऽयं पुराणः' 'वेदाविनाशिनं नित्यम् य एनमजमव्ययम्' इत्यादिश्रुतिस्मृतिशतैर्भगवतस्वरूपस्य तदीयगुणानाञ्च नित्यत्वव्यवस्थापनेन भगवत् स्वरूपवत् तदीयगुणानामपि तथात्वात् न भगवतः स्वरूपेण गुणद्वारेण वा विनाशो जायते इति उभय प्रकारकव्ययरहितो भगवान्, अव्ययः सर्वदा सर्वप्रकारकव्ययरहित इति । एतत्सर्वं हृदि निधाय अव्ययेति विशेषणं भगवति प्रक्षिप्तवानाचार्यः । विशेष प्रपञ्चः सूरिभिः स्वयमेवोहनीयः ।

तथा एतादृशगुणगणविशिष्टः परमेश्वरश्रीरामचन्द्रो 'विश्वभर्ता' विश्वस्य सर्वस्य जनिमतः पदार्थस्य भर्ता-पालनपोषणकर्ता तत्र पालकः सर्वापत्तिभ्यो रक्षणकर्ता पोषकः सर्वस्य संवर्धकः । यथा कश्चिन्मालाकार उपवनं निर्माय तत्र बकुलचंपकाम्रपनसादिवृक्षान् मृगादिपशुभ्यो वृक्षघातकेभ्यो रक्षणं करोति तथा जलादिना संसिच्य वर्धयति, यथा वा माता पिता पुत्रमुत्पादयति उत्पाद्यापद्भ्यो रक्षणं कुर्वन्तौ हिते नियोज्य तदीयसंसारयात्रां निर्वाहयतः तथैव परमेश्वरो जगदुत्पादरक्षणपोषणादिकं कुर्वन् विश्वस्य जगतो भर्ता भवतीति विश्वभर्तेति कथ्यते ।

'श्रीमानर्च्यं' इत्यादि । शोभारूपाश्रीरनपायितया सम्बद्धा विद्यते यस्य स श्रीमान् । अर्थात् सर्वातिशायिनी नैयत्येन विद्यमानः शोभायुक्तः, यद्यपि सर्वोपरिरूपलावण्यादिशोभयायुक्त एव भवतीति शोभात्मकश्रीसम्पन्नत्वं न विशेषाधायकं तथापि यादृशी शोभा स्वाश्रयं कदापि न व्यभिचरति तादृशी शोभैवात्र श्रीपदवाच्या भवति । अर्थान्नित्यशोभया युक्तः । 'प्रसन्नतां या न ग ताभिषेकतः । तथा न मम्लौ वनवासदुःखतः । मुखाम्बुजश्रीरघुनन्दस्य मे स दास्तु सा मञ्जुलमङ्गलप्रदा' श्रीमद्रामचरितमानसे २।२ इति कविकुलकमलदि वाकर जगद्गुरुश्रीतुलसीदासोक्तिः । अनेनागमापायिशोभाविवर्जितनित्यशो भायुक्तत्वं श्रीमानिति पदेन ध्वनितम् । अथवा सर्वदा सूर्यस्य प्रभावत् नित्यान पायिनी श्रीसीतारूपा श्रीर्विद्यते यस्य स श्रीमान् 'अनन्या राघवेणाहं भास्करेण



प्रभा यथा' यथा सूर्यस्य प्रभा प्रकाशः सूर्याद्वियुज्य क्षणमप्यन्यत्र न भवति तथैव श्रीराघवेणाहमनन्या, जलतरङ्गवदभिन्नेत्यर्थः । इति श्रीमद्रामायणीय महर्षिश्रीवाल्मीकिवचनप्रामाण्यात्सूर्यप्रभावन्नित्यसम्बद्धा श्रीसीतासर्वेश्वरात् ।

'आवयोर्नित्यसम्बन्धः शक्तिशक्तिमतोरिव ।
मया विना वदन् रामं रामं विना वदंश्च माम् ॥
वदत्यावां यतश्चावामभिन्नावेव सम्मतौ ।
करुतेत्वधमो मूढो भेदबुद्धिं य आवयोः ॥
यावच्चन्द्ररवी तस्य तावद्धि निरये स्थितिः

इत्यादिरूपेण सर्वेश्वरीश्रीसीतयास्वयमेवोपदिष्टत्वाद्धनुमन्तंप्रति (वशिष्ठ संहिता) न च तर्हि कथं पञ्चवटीतः श्रीरामाद्वियुज्य चिरमुवास लङ्कायामिति वाच्यम् लीलामात्रत्वात्परमेश्वरस्येति गृहाण । अर्थात्-भगवान् श्रीरामचन्द्र मर्यादापुरुत्तमः स कदाचिदपि लोकमर्यादां न तत्याज इति लोकमर्यादाम नुरुद्ध्यैव सर्वं कृतवानिति लौकिकाः । अत्रत्यं तत्वं 'अनन्या च मया सीता भास्करेण यथा प्रभा' 'अनन्या राघवेणाहं भास्करेण प्रभा यथा' इत्यादि श्री मद्रामायणीयवचनस्वारस्यात् श्रीवशिष्ठसंहिताप्रभृतिपूर्वाचार्यदिव्यप्रबन्धेभ्यो म दीयान्यनिबन्धेभ्यः पुराणादितोवावगन्तव्यम् । अथवा श्रीराज्यरूपाधनाद्यधिष्ठा तृदेवतारूपा लक्ष्मीर्विद्यते यस्य स श्रीमान् परमेश्वरस्य सर्वशासकतया लीलावि भूतिभोगविभूत्यादिसर्वशासकत्वेन लक्ष्मीयुक्तत्वं सर्वदैवेति स सर्वदैव श्रीमान् सर्वाधिपतित्वेन गीयते इति ज्ञेयम् । तथा स भगवान् 'अर्च्यः' बहुविधविबु धैर्विधिभवप्रमुखैराराधयितुं योग्यः, तत्र विधिः सर्वप्रथमो हिरण्यगर्भः 'हि रण्यगर्भः समवर्तताग्रे 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्राहिणोति तस्मै' इत्यादिश्रुतेः, अर्थात् अग्रे सर्वस्योत्पत्तेः प्रागेव हि रण्यगर्भ एतन्नामकः प्रथमो जीवः समवर्तत उत्पन्नोऽभूत् अत एवायं प्रथमो जीव इत्युच्यते । तथा यः सर्वशक्तिमान् परमेश्वरः पूर्वं सर्वप्रथमं ब्रह्माणं हिरण्यगर्भं विदधाति समुत्पा दयति तथा यः परमेश्वरः ब्रह्माणं समुत्पाद्य संसारयात्रानिर्वाहाय तस्मै हिरण्य गर्भाय वेदान् ऋगादिकान् साङ्गान् प्राहिणोत् अददात् अर्थात् ब्रह्माणमुत्पाद्य तस्मै वेदान् प्रददौ-

'सृष्ट्यादौ च सिसृक्षुः श्रीरामो विधिं विधाय हि ।
सृष्टये प्रेषयामास वेदं ज्ञानमहानिधिम् ॥'

इतिवशिष्ठसंहितोक्तेः । उपर्युक्तलक्षणलक्षितो विधिः तथा भवः शिवः भवति जगदस्मादिति । हिरण्यगर्भादिप्रधानैर्जीवादिभिः सर्वथा सर्वदा आराधयितुं योग्यो ब्रह्मादीनां देवाग्रणीनामपि बहुविधविविधप्रकारेण सर्वदा पूजनीयः श्रीरामचन्द्र इति भावः-

'श्रीरामस्य मनुं काश्यां जजाप वृषभध्वजः ।
मन्वन्तरसहस्रैस्तु जपहोमार्चनादिभिः ।
ततः प्रसन्नो भगवान् श्रीरामः प्राह शङ्करम् ।
वृणीष्व यदभीष्टं तद्दास्यामि परमेश्वर ।'

(श्रीरामोत्तरतापनीयोपनिषद्) इत्यादिश्रुत्या-

'यस्यामलं नृपसदस्सु यशोऽधुनापि,
गायन्त्यघघ्नमृषयोर्दिगिभेन्द्रपट्टम् ।
तं नाकपालवसुपालकिरीटजुष्टं,
पादाम्बुजं रघुपतेः शरणं प्रपद्ये'

भागवते इत्यादिभिः तथा

'आराध्यं ब्रह्मरुद्रादेर्जगद्धेतुञ्च मुक्तिदम् ।
दिव्यदेहं गुणाम्भोधिं रामं ब्रह्मसमाश्रये ॥'

इत्यादि जगद्गुरुश्रीरामानन्दाचार्यवचनैश्चाभिव्यज्यते ।

तथा स श्रीरामचन्द्रः 'शरण्यः' शरणे रक्षणे साधुर्योग्यः, सर्वस्य रक्षणकरणे सर्वथा समर्थस्तथा सर्वस्य चिदचिदात्मकपदार्थजातस्य आयतनरूपश्च । 'शरणं रक्षणे गृहे' इतिकोशात् शरणशब्दार्थो रक्षणपरकम् । तत्र यदा जयन्तः श्रीसीतादेव्या अपमानं कृत्वा भयभीतो भूत्वा पलायितः तदा श्रीसीतायास्तादृशीमवस्थां दृष्ट्वा संस्तरात्तृणमादाय तं ब्रह्मास्त्रेण नियोज्य वायसं प्रति प्रक्षिप्तवान् । 'सदर्भं संस्तराद् गृह्य ब्रह्माऽस्त्रेण नियोजयत् । स प्रदीप्त इव कालाग्निर्जज्वालाभिमुखो द्विजम् । स तं प्रदीप्तं चिक्षेप दर्भं तं वायसं प्रति । त्राणकाम इमं लोकं सर्वं वै विचचार ह । त्रीँल्लोकान् सम्परिक्रम्य तमेव शरणं



गतः' इत्यादिप्रकरणेन ज्ञायते यत् स जयन्तकाकः पित्र्यादिभिररक्षितोऽन्यत्र शरणमलब्ध्वा भगवतो रामचन्द्रस्यैव शरणागतिं स्वीचकार, ततो निग्रहानुग्रहकरणे समर्थो भगवान् शरणागतं 'हिनस्तु दक्षिणाक्षित्वच्छर इत्यथ सोऽब्रवीत्' इत्यादितदनुमतमेकमक्षिं विनाश्य शरणं दत्वाऽरक्षयत् । 'वधार्हमपि काकुत्स्थ कृपया पर्यपालयत्' इतिमहर्षिश्रीवाल्मीकिवचनात् । लौकिको हि शरण्यो न शरण्योऽपि तु शरण्याभासोऽयं तु सर्वसमर्थः शरणं दत्वा कृतार्थयति प्रपन्नम्, तथोक्तं स्वयमेव-

'सकृदेव प्रपन्नाय तवास्मीति च याचते ।
अभयं सर्वभूतेभ्यो ददाम्येतद् व्रतं मम ॥

इत्यादिना ज्ञातं भवति यदयं भगवान् तापत्रयपरीतप्तानां तापत्रयाद्विमोच्याभयात्मकज्ञानानंदलक्षणं स्वपदं समर्प्य कृतार्थयतीति सर्वथाऽयं सर्वेश्वरश्रीरामः शरण्यः । तथा अयं चिदचित्पदार्थमात्रस्य शेषितयाऽन्तर्यामी भूत्वा सर्वस्यायतनमपि भवतीति तत्त्वम् । यथा मार्गे भ्रमणात् उद्विग्नहृदयः पथिकः श्रान्तो भूत्वा निरापदमाश्रयमन्वेषयन् तादृशं गृहाद्याश्रयं प्राप्य तत्र श्रान्त्याद्यपनोदनपूर्वं निस्सीममानन्दं संप्राप्य सुखीभवन् स्वात्मानं कृतार्थमिव मनुते, तथैव भवभ्रमणश्रान्तमुद्विग्नमानसं स्वकृतकर्मसंसारं प्राप्तचेतसं शरणे समागतं भगवदायतनरूपमायतनप्राप्तं संसाररूपबन्धरहितं कृत्वा परमपदं समर्प्य कृतार्थयन् तस्यायतनरूपो भवति, अत एव 'रक्षकमायतनं वेत्यनुक्त्वा तदुभयबोधकपदस्य शरण्यस्यैव प्रयोगं कृतवान् भगवानाचार्यः । तथा 'योगिगम्यांघ्रिपद्मः' योगं युञ्जन्ति ये ते योगिनः योगश्च चितवृत्तिनिरोधरूपः ततश्च यमनियमासनप्राणायामप्रत्याहारधारणा द्वारा सविकल्पकध्यानं कृत्वा निर्विकल्पकसमाधिना परमात्ममननशीला ये ते योगिनः श्रीशुकसनकसनन्दनप्रभृतिकनित्यसिद्धाः सूरयः प्रत्यक्षसमानाकारतां प्राप्य तैलधारावदविच्छिन्नानुध्यानात्मकज्ञानशीलास्तेषां गम्यं प्राप्यं ये ये गत्यर्थास्ते ते प्राप्त्यर्थाः इतिनियमेन तदीयं चरणकमलं प्राप्यं भवति स योगिगम्यांघ्रिपद्मः स सर्वशेषी अर्थादुभयविभूतिनायको भगवान् नित्यसूरिभिः प्राप्तो भवति । यद्यपि यावत् संसारं भगवदुपासनं कृत्वा स्वकर्मभोगान्ते परित्यज्य संसारं परमपदे मुक्तजीवेन प्राप्त

चरणकमलो भवत्येवेति सूरिणैव प्राप्यो भवतीति कथनं न समीचीनं इवाभाति, तथापि मुक्तस्य द्वयी अवस्थे भवतः संसारावस्था मोक्षावस्था च, तत्र संसारावस्था पूर्वावस्थेति कथ्यते मोक्षावस्था चोत्तरावस्था, तत्र मोक्षावस्थायामेव भगवच्चरणप्राप्तो भवति न तु पूर्वावस्थायां प्राप्तचरणकमलो भवति, नित्यसिद्धास्तु सर्वावस्थायामपि प्राप्तभगवच्चरणकमला भवन्ति । यद्यपि मोक्षावस्थायामुभयोः समानत्वं तथापि नित्यसिद्धा अदृष्टसंसाराः, मुक्तास्तुपूर्वावस्थायां दृष्टसंसारा इति मुक्तानामुपलक्षणविधयाकाकवन्तो देवदत्तगृहाः, इत्यादौ काकाभावेपि काकसत्तानापगता भवति किन्तु अनुसरत्येव तथैव मुक्तस्यापि पूर्वावस्थोपलक्षणविधयाऽनुवर्तते । नित्यमुक्तस्य तु पूर्वावस्थारूपसंसारस्यानुवर्तनं सत्वं वा विशेषणविशेष्यविधया न भवतीत्येतावानेवभेदः । एतादृशादृष्टसंसारयोगिभिः प्राप्तचरणः श्रीरामचन्द्रः ।

पुनरपि श्रीरामः क्लेशादिभिरस्पृश्यः, तदाह भगवान् पतञ्जलिः-'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः' तत्र पञ्चक्लेशाः 'अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्चक्लेशाः । एतेषां विशेषस्वरूपं तु अस्मद्गुरुचरणजगद्गुरुश्रीरामानन्दाचार्यश्रीयोगीन्द्रप्रसादितयोगसूत्रविवरणतोऽवगन्तव्यम् । तात्पर्यायस्तु तत्रा तस्मिंस्तद् बुद्धिरविद्या विपरीतज्ञानम् । यथा शङ्खे पीतिमग्रहः शरीरे आत्मबुद्धिरात्मनि वा शरीरबुद्धिः एतत्कार्यमस्मिताया राग आसक्तिरनुरंजनम् द्वेषः प्रसिद्धः, अभिनिवेशो मरणत्रासः संसारिणां हिरण्यगर्भादारभ्य कीटपतंगादिजीवानां समान एव । कर्मशास्त्रविहितप्रतिषिद्धक्रियाजनित शुभाशुभपुण्यपापरूपमेव, यत् अग्निहोत्रादिजनितं कलंजभक्षणादिजनितं च । विपाको जात्यायुर्भोगलक्षणकः । आशयो वासनासंस्कार इति एभिः कर्मादिभिः सर्वदैवापरामृष्टोऽसम्बद्धः, यथा पुण्यपापवासनयाऽविद्यावृतजीवः परिष्वक्तो भवति न तथेश्वर एभिः परामृष्यते । एतादृशः परमेश्वरो निराकारोऽपि तु साकारः । किमाकारः ? तत्राह सूत्रे-'पुरुषविशेषः' 'स वा एष पुरुषविधः पुरुष एवेदं सर्वम् इत्यादिश्रुत्या पुरुषाकारः एतावता निराकरवादी न योगसङ्गत इतिनिराकृतो बोध्यः । विशेषस्तु तत्रैव विवरणतात्पर्ये । तथा श्रीरामचन्द्रः सत्समुदितसुयशाः' सद्भिर्वाल्मीकिव्यासादिपरमत्रऋषिभिर्यशांसि समीचीनरूपेण



लोके प्रख्यापितानि यस्य स अथवा सन्ति लोके प्रख्यातानि यस्य स सत्समुदितयशाः अर्थात् दशरथकुलेऽवतीर्य्य स्वयं सर्वशक्तिमान् अन्यैः प्रयत्नपूर्वकमपि यत् रावणखरदूषणवालिनिग्रहादीनि कार्याणि मनसाप्यालोचयितुमयोग्यानि, तान्यप्रयत्नेनलीलान्यायेनैव संपादितानि एतादृशविशिष्टसामर्थ्यवानिति तस्य यशो लोके दिगन्तप्रसिद्धम् इति लोकप्रसिद्धकीर्तिमान् स श्रीरामः । प्रथमपक्षार्थः तत्र सन्तोवाल्मीकिप्रभृतयः भगवद्गुणानुवादकरणात् सन्त इति कथिता भवन्ति । तत्र प्रथमः कविर्हिरण्यगर्भः, द्वितियस्तु श्रीवाल्मीकिप्रभवः, तृतीयस्तु श्रीपराशरामत्मजः, तत्र हिरण्यगर्भः वेदान् भगवतोऽधिगत्य मन्त्रस्वरूपेण निर्माय वेदद्वारा भगवतो यशो वर्णितवान् अर्थात् 'यतो वा इमानि भूतानि जायन्ते' इत्यादिना भगवति जगदुत्पत्तिस्थितिप्रलयकर्तृत्वं प्रदर्शितम् 'सत्यं ज्ञानमानन्दं ब्रह्म' इत्यादिश्रुत्या तस्मिन् भगवति भवे त्रिकालाबाध्यत्व-अजडत्वात्मकस्वप्रकाशज्ञानरूपत्वं सर्वेषामनुकूलत्वात्मकानन्दरूपत्वमानन्दरूपं प्रदर्शितवान् । तथा बृहत्वात् व्यापकत्वं चिदचिदादिस्थावरजङ्गमानां परिणमयितृत्वान् चिदचिद्वैशिष्ट्यं प्रदर्शितम् तथा 'एतस्यैवाक्षरस्य प्रशासने गार्गि सूर्या चन्द्रमसौ विधृतौ तिष्ठतः' इत्यादिश्रुत्या सूर्यादिचिदचित्पदार्थस्य धारकत्वं सूर्यादिसकलपदार्थानां धार्यत्वं प्रदर्शितं वेदवाक्यादेव । तथा 'यः पृथिव्यां तिष्ठन् यस्य पृथिवीशरीरं यं पृथिवी न वेद यः पृथिवीमन्तरो यमयति स ते आत्माऽन्तर्याम्यमृतः' यो विज्ञाने तिष्ठन् विज्ञानमन्तरो यमयति यं विज्ञानो न वेद यस्य विज्ञानं शरीरं स ते आत्माऽन्तर्याम्यमृतः' इत्यादिश्रुत्या पृथिव्यादिपदार्थानां परमेश्वरशरीरत्वं भगवतश्च पदार्थमात्रस्य शरीरित्वं प्रतिपादितम् । तथा 'यः पृथिव्याम्' इत्यादि श्रुतिनिकरैः पृथिव्यादिजडचेतनस्य नियाम्यत्वं भगवतश्च सर्वचिदचिन्नियामकत्वं कण्ठरवेण प्रतिपादितम् । तदेवं प्रकारेणादिकविहिरण्यगर्भः लीलोपकरणस्य सकलपदार्थस्य भगवत् शेषत्वं भगवतश्च सर्वशेषित्वं स्वकीयनिर्मित काव्यरूपवेदादुपवर्णयन् भगवतः कीर्तिमेव लोके प्रख्यापयामास । अतएवायं हिरण्यगर्भः आदिकविरिति नाम्ना लोके प्रसिद्धिं गतः । ततो बहुकाले गते लोकानां स्वल्पायुकृतो वेदस्यातिकाठिन्यमनुभवत् तमेव वेदार्थः स्वमतिसरलं लौकिकछन्दोबद्धं श्रीमद्रामायणं श्रीरामप्रतिपादकगायत्रीव्याख्यानरूपं निर्माय

लवकुशप्रभृतीमध्याप्य लोके भगवतः श्रीरामचन्द्रस्य कीर्तिं विस्तारयामास, सोऽयं द्वितीयकविः त्रेतायां सम्बभूव।'वेदवेद्येपरेपुंसि जाते दशरथात्मजे। वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना' इत्यागमोक्तेः। ततः पूर्वोक्तकालद्वयादपि अतिविषमे द्वापरकलियुगयोः सन्धिकाले समागते प्रचाराभावात् लोकानां बुद्धि-आयुष्यादिदौर्बल्येन वेदश्रीमद्रामायणयोः प्रचारस्याल्पत्वेन प्रचारेऽत्यल्पतां गते परमकारुणिको वेदव्यासः परमात्मरूपेण भुवि समागत्य विलुप्तप्रायं वेदं वेदार्थोपबृंहकपुराणमष्टादशमुपपुराणं च निर्माय तत् द्वारा वेदार्थलक्षण भगवतः ख्यातिं लोकेऽकरोत्। ततश्च श्रीवेदव्यासकाव्यं परमेश्वरोपवर्णनेनैव सार्थकमिति प्रसिद्धिः। तदत्र कवित्रितयहार्दमतिसमासेन प्रदर्श्यते ग्रन्थगौरव भिया। तथाहि-'सहस्रधारे वितते पवित्र आवाचं पुनन्ति कवयो मनीषिणः। रुद्रास एषामिषिरासो अद्रुहः स्पर्शः स्वञ्चः सुदृशो नृचक्षसः' (ऋग्वेद ९।७३।७-वेदरहस्यम् ८) 'सचन्त यदुषसः सूर्येण चित्रामस्य केतवो रामविन्दन्। आयन्नक्षत्रं ददृशे दिवो न पुनर्यतो न किरद्धानुवेद' (ऋ. १०।१११।७-वेद रहस्यम् १४६) 'अर्वाची सुभगे ? भवसीते ? वन्दामहे त्वा। यथा नः, सुभगाऽससि यथा नः सुफलाऽअसि' ऋ. ४।५७।६ वेदरहस्यम् ३४ 'धृतेन सीता मधुना समक्ता विश्वै र्देवैरनुमता मरुद्भिः। सा नः सीते ? पयसाऽभ्यववृस्वोर्जस्वती धृतवत्पन्वमाना' (अथर्ववेद ३।१७।९-वेदरहस्यम् ३५) 'इन्द्रः सीतां निगृह्णातु तां पुषाऽनुयच्छतु। सा नः पयश्वती दुहामुत्तरमुत्तरां समाम्' (ऋ. ४। ५७।७-वेदरहस्यम् ३६) मन्त्ररहस्यन्तु जगद्गुरुश्रीराघवानन्दाचार्यानुगृहीतरहस्यमार्तण्डभाष्यतस्तथा जगद्गुरुश्रीरामानन्दाचार्यश्रीरामप्रपन्नाचार्ययोगीन्द्र-कृतदीपिकाटीकातोऽनुसन्धेयम्। 'श्रीश्चते लक्ष्मीश्च पत्न्या' (यजुर्वेदः ३१। २२) 'ईश्वरीं सर्वभूतानां तामिहो पह्वये श्रीयम्' (श्रीसूक्तस्य च) रहस्यं जगद्गुरुश्रीवैदेहीवल्लभाचार्यानुगृहीतश्रीसूक्तप्रकाशतो ग्राह्यम्। तथा द्वितीयः-

'सकृदेव प्रपन्नाय तवास्मीति च याचते।
अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम॥ (श्रीमद्रा. ६।१८।३३)
वद्धाञ्जलिपुटं दीनं याचन्तं शरणागतिम्।
न हन्यादानृशंस्यार्थमपि शत्रुं परन्तप॥



आर्तो वा यदि वा दृप्तो परेषां शरणं गतः।
अरिः प्राणान् परित्यज्य रक्षितव्यः कृतात्मना (श्रीमद्रा. ६।१८-२७-२८)
द्वि शरान्नाभि सन्धत्ते द्विःस्थापयति नाश्रृतान्।
द्विर्ददाति न चार्थिभ्यो रामो द्विर्नाभिभाषते॥ (श्रीमद्रा. २।१८।३०)
नास्य क्रोधः प्रसादश्च निरर्थोऽस्ति कदाचन।
हन्त्येष नियमाद्वध्यानवध्येषु न कुप्यति॥ (श्रीमद्रा. २।२।४५-४६)
सूर्यस्यापि भवेत्सूर्यो ह्यग्रेरग्निः प्रभोः प्रभुः। (श्रीमद्रा. २।४४।१५)
वसुधाया हि वसुधां श्रियः श्रीं भर्तृवत्सलाम्
सर्वांल्लोकान्सुसंहृत्य सभूतान्सचराचरान्। (श्रीमद्रा. ५।५१।३९)
पुनरेव तथा स्रष्टुं शक्तो रामो महायशाः।
विदितः स हि धर्मात्मा शरणागतवत्सलः।
तेन मैत्री भवतु ते यदि दीवितुमिच्छसि॥ (श्रीमद्रा. ५।२१।२०)
साक्षाद्रामाद्विनिवृत्तो धर्मश्चापि श्रिया सह॥ (श्रीमद्रा. २।२।२९)
यश्च रामं न पश्येत्तु यं च रामो न पश्यति।
निन्दितः स भवेल्लोके स्वात्माप्येनं विगर्हते॥ (श्रीमद्रा. २।१७।१४)
रक्षिता स्वस्य धर्मस्य स्वजनस्य च रक्षिता। (श्रीमद्रा. १।१।१४)
चिन्तयेद्राघवं नित्यं श्रेयः प्राप्तुं च इच्छति।
श्रावयेदिदमाख्यानं ब्राह्मणेभ्यो दिने दिने॥ (श्रीमद्रा. ७।१११।२०)

श्रीमद्रामायणहार्दं तु श्रीयुगलचरणकमलामृतरसरसिकश्रीशिवसहाय-कृत विवरणे प्रपञ्चितमतिविस्तारेणेतिनात्र तन्यते।

तथैव तृतीयः-

सुरोऽसुरो वाप्यथवानरो नरः सर्वात्मना यः सुकृतज्ञमुत्तमम्।
भजेत रामं मनुजाकृतिं हरिम् य उत्तराननयत्कोसलान्दिवम्॥ (भा. ५।१९।८)
स यैः स्पृष्टोऽभिदृष्टो वा संविष्टोऽनुगतोऽपि वा।
कोसलास्ते ययुः स्थानं यत्र गच्छन्ति योगिनः॥
पुरुषो रामचरितं श्रवयणैरुपधारयन्।
आनृशंस्यपरो राजन् कर्मबन्धैर्विमुच्यते॥ (९।११।२२।२३)

नेदं यशो रघुपतेः सुरयाञ्चयात्त-
लीलातनोरधिकसाम्यविमुक्तधाम्नः ।
रक्षो वधो जलधिबन्धनमस्त्रपूगैः
किं तस्य शत्रुहनने कपयः सहायाः ॥ ( ९।११।२० )
गुर्वर्थे त्यक्तराज्यो व्यचरदनुवनं पद्मपद्भ्यां प्रियायाः
पाणिस्पर्शाक्षमाभ्यां मृजितपथरुजो यो हरिद्रानुजाभ्याम् ।
वैरुप्याच्छूर्पणख्याः प्रियविरहरुषाऽऽरोपितभ्रूविजृम्भ-
त्रस्ताब्धिर्बद्धसेतुः खलदवदहनः कोसलेन्द्रोऽवतान्नः ॥ ( भा. ९।१०।४ )
ध्येयं सदा परिभवघ्नमभिष्टदोहं
तीर्थास्पदं शिवविरिञ्चिनुतं शरण्यम् ।
भृत्यार्तिहं प्रणतपालभवाब्धिपोतं
वन्दे महापुरुष ते चरणारविन्दम् ॥
त्यक्त्वा सुदुस्त्यजसुरेप्सितराज्यलक्ष्मीं,
धर्मिष्ठ आर्यवचसा यदगारण्यम् ।
मायामृगं दयितयेप्सितमन्वधावद्
वन्दे महापुरुष ते चरणारविन्दम् ॥ ( भा. ११।५।३३।३४ )

एतदीयविशेषरसास्वादनं तु जगद्गुरुश्रीगङ्गाधराचार्यचरणकृता श्रीशुकार्यमतदीपिकातः कर्तव्यं विशेषार्थिभिरित्यत्र विरम्यते । अतएव लोके कवित्र यस्यैव नाम गृह्यते तदन्ये तु तदाभासा एव । तदुक्तं-'एकोभून्नलिनात्परस्तु प्रलिनाद् वल्मीकतश्चापरः, तेऽभूवन् कवयः प्रभूतयशसस्तेभ्यो नमस्कुर्महे । ये चान्ये निजगद्यपद्यरचनैश्चेताश्चमत् कुर्वते तेषां मूर्ध्नि ददाति वामचरणं कार्णाटराजप्रिया' इति । अत्र ब्रह्मादीनां कवित्वं तदन्येषां लौकिकानामकवित्वमित्याद्याः कवयः लोकोत्तरा प्राकृतिकनायकसम्बन्धिगुणवर्णनं कृत्वा स्वस्मिन् सत्कवित्वमाविष्कृतवन्तः, तदन्यैस्तु लौकिकप्राकृतिकनश्वरनायकप्रभृतिनां गुणवर्णनं कृत्वा स्वेषु कव्याभासत्वमाविष्कृतं परञ्च तत्रैवकवेः कवित्वं यत्र परमेश्वरगुणवर्णनकर्तृत्वं नान्यत्रेतिभावः ।

यथा भगवान् श्रीरामचन्द्रः आदितः 'सत्समुदितसुयशाः' एतदन्तः विशेषणनिकरैः साभिप्रायैर्विशेषणैर्विशेषितस्तथैव 'सूरिमान्यः' एतद्विशेषणेनाऽपियुक्तः स सूरिभिर्नित्यमुक्तजीवैः श्रीपवनात्मजप्रमुखैर्मान्यः । मानयितुं पूजयितुं योग्यस्तैः पूज्य इत्यर्थः । ये नित्यमुक्तजीवाः 'सदापश्यन्ति सूरयः' इतिवचनेन महामहिमशालिनः सर्वदा भगवत्संनिधौ भगवतः कैङ्कर्यं कुर्वाणा अत्यन्तसानिध्यं प्राप्ता भगवत् सायुज्यं प्राप्तास्तैर्यदापूज्यस्तदा बद्धमुक्ताभ्यां पूज्यत्वमर्थत एव सिद्ध्यति । मानधातोर्यतिप्रत्यये कृते मान्य इतिप्रयोगस्तदर्थश्चपूजनीयः, यथा मानधातोर्विचाराऽर्थस्तथैव पूजार्थोऽपि । मानविचारे पूजायामितिस्मरणात् । तत्र मन्यते विचारयति मन्यते पूजयतीतिवार्थः । एतादृशमहाप्रभाव शिष्टव्यक्तिभिर्यदा भगवान् पूजनीयस्तदा देवमनुष्यादिभिः लीलाभूमिस्थितैः पूजनीय इतिकैमुतिककल्पावसिद्धो भवतीति विशेषविवरणमन्यत्रावलोकनीयम् ।

तदेवं प्रतियोगिसापेक्षं भगवतो गुणानभिधाय स्वरूपसापेक्षगुणेष्वन्यतमं गुणं दर्शयितुमाह-'वदान्यः' इति ।

अप्यहं जीवितं जह्यां त्वां वा सीतां स लक्ष्मणम् ।
न तु प्रतिज्ञा संश्रुत्य ब्राह्मणेभ्यो विशेषतः ॥
द्वि शरान्नाभिसन्धत्ते द्विः स्थापयतिनाश्रितान् ।
द्विर्ददाति न चार्थिभ्यो रामोद्विर्नाभिभाषते ॥

इत्यादिमहर्षिवचनेनवदान्यत्वं व्यञ्जितं भगवतः । तत्र वदान्यो दानशीलः यथा लौकिकोऽपिदाता सेवादिभिराराधितो याचकाय मनोभिलषितं लौकिकं फलं प्रदाय वन्दाय इति संज्ञां लभते । यथोक्तं तत्कुलीयानाम्-'गुर्वर्थमर्थी श्रुतपारदृश्वा रघोः सकाशादनवाप्यकामम् । यातो वदान्यान्तर इत्ययं मे माभूत्परीवाद नवावतारः ।' इतिलौकिको हि राजा लौकिकधनादिदानेनैव वदान्यः परमेश्वरस्तु ।

सकृदेव प्रपन्नाय तवास्मीति च याचते ।
अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम ॥
स्थिरे मनसि सुस्वस्थे शरीरे सति यो नरः ।
धातु साम्ये स्थिरेस्मृत्वा विश्वरूपं च मामजम् ॥

ततस्तं म्रियमाणं तु काष्ठपाषाणसन्निभम् ।
अहं स्मरामि मद्भक्तं नयामि परमां गतिम् ॥

इतिभगवद्वचनप्रामाण्यात् लौकिकं धनादिकं यच्छन्नपि लोकोत्तरपरमपदात्मकमोक्षस्यापि दाता भवतीति । एतावानेवानयोर्भेदः सत्यपि वदान्यत्वे तदुभयोः । सर्वस्य सकलप्रदत्वं परमेश्वरस्येति स्वयमेव भगवतोक्तम्-

चतुर्विधाभजन्ते मां जनाः सुकृतिनोऽर्जुन ।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ? ॥
सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिस्यामि मा शुचः ॥ इति ।

मम परमेश्वरस्यैतद् व्रतं यदहं तवास्मीति प्रपन्नाय, संसारादभयप्रयोजकादभयमन्ते परमपदम् प्रयच्छामीति । ततश्च वदान्यत्वेति विशेषणेन भगवति धर्मार्थकाममोक्षाख्यचतुर्विधफलप्रापकत्वमिति सूचितम् ।

तथा शश्वच्छ्रीरामचन्द्रः सुमहितहिमासाधुवेदैरशेषैरिति, तत्र साधु समीचीनं यथा स्यात्तथा, अशेषैर्वेदैः कर्मकाण्डज्ञानकाण्डान्तर्गतवेदसमूहैः, शाश्वतं सर्वदा सुष्ठुमहितः ख्यापित महिमा महत्त्वं यस्य तादृशः स श्रीरामचन्द्रो लोकदृष्ट्या दशरथापत्यपुंस्त्वविशिष्टः शास्त्रदृष्ट्या तु सर्वशेषी सर्वेश्वरो भगवान् श्रीरामो यत्र योगिनो रममाणा भवन्ति 'रमन्ते योगिनोऽनन्ते सत्यानन्दे चिदात्मनि' इति रामपदेनासौ परं ब्रह्माभिधीयते इतिश्रुत्युक्तेः । अर्थात् सर्वलोकनायकस्य सर्वमहत्वं सर्वत्र सर्वदैव गीयते स भगवान् राम एव न अतोऽतिरिक्तः कश्चिदिति । अर्थात् सर्वो वेदराशिः कर्मकाण्डान्तर्गतो ज्ञानकाण्डान्तर्गतो वा भवति सर्वेऽपि साक्षात्परम्परया वा समीचीनरूपेण सर्वकालं भगवतो रामस्यैव महिमानमुद्गिरन्ति । सर्ववेदप्रतिपाद्यो भगवान् श्रीराम एव, लोकदृष्ट्याऽयोध्याधिपतिर्वेददृष्ट्या सर्वप्राकृतिकलोकाधिपतिर्भवन्नेव त्रिपादविभूत्यधिपती स एवेति भावः ।

'राम एव परं ब्रह्म राम एव परं तपः ।
राम एव परं तत्वं श्रीरामो ब्रह्मतारकम् ॥' (श्रीरामोपनिषद्)
सूर्यस्याऽपि भवेत्सूर्यो ह्यग्नेरग्निः प्रभो प्रभुः ।



दैवतं देवतानां च भूतानां भूतसत्तमः' (श्रीमद्रा. २।४४।१५-१६)
'स उ प्राणस्य प्राणः' (के. १।२) नित्यो नित्यानां चेतनश्चेतनानाम्' (क. ४।१३)
प्रियते सततं रामः स हि विष्णुः सनातनः' (श्रीमद्रा. ६।१२८-११९)
भरणः पोषणाधारः शरण्यः सर्वव्यापकः ।
करुणः षड्गुणैः पूर्णो रामस्तु भगवान् स्वयम् ॥ (म. रामायणम्)
रामस्य नामरूपं च लीलाधाम परात्परम् ।
एतत्त्चतुष्टयं नित्यं सच्चिदानन्दमव्ययम् ।
परान्नारायणाच्चैव कृष्णात्परतरादपि ।
यो वै परतमः श्रीमान् रामो दाशरथिस्वराट् ॥
जयमत्स्याद्यसंख्येयावतारोद्भवकारणम् ।
ब्रह्मविष्णुमहेशादिसंसेव्यचरणाम्बुजम् ॥ (वशिष्ठसंहिता)
परं ब्रह्म परं तत्वं परं ज्ञानं परं तपः ।
परं बीजं परं क्षेत्रं परं कारणकारणम् ॥' (श्रीमद्रा.)
ज्ञानशक्तिवलैश्वर्यवीर्यतेजांस्यशेषतः ।
भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः' ॥ (वि. पु. ६।५।७९)
'ज्ञानशक्तिवलैश्वर्यवीर्यतेजांसि षट् गुणाः ।
भगत्वेनेरिताः सन्ति श्रीरामे भगवान् स तत् ॥
श्रीरामे भगवच्छब्दो मुख्यवृत्त्या प्रवर्त्तते ।
गौण एव स चान्यत्र षड्विधैश्वर्यलेशतः' ॥

(२।३ श्रीरामभगवत्वे जगद्गुरुश्रीगङ्गाधराचार्यः) इत्याद्यनेकश्रुतिस्मृतीतिहासाचार्यदिव्यप्रबन्धपुराणागमादिनां 'अक्षरं ब्रह्मसत्यं च मध्ये चान्ते च राघवः' इत्यादिब्रह्मवाक्येन तथा 'अभयं सर्वभूतेभ्यो ददाम्येतत् व्रतं ममे' ति स्वयं भगवद्वाक्येन चायोध्याधिपतेरेवेश्वरत्वमितितात्पर्यः । 'सर्वेषामवताराणामवतारी रघूत्तमः' इत्यागमोक्तेर्थया वराहनृसिंहकूर्मादयोऽवताराः सर्वशेषिणो रामस्य तथैव सर्वावतारिणो भगवद्रामस्यावनतारभूतः श्रीनारायणोऽपि । प्रलये योगनिद्रामास्थाय जलशयनात् स एव नारायणपदवाच्य, नारं घनरसोज्वलम

यनं यस्य-नारं घनरसः पुमानित्युक्तेः । 'पुरुषाःपुरुषानराः' इतिनिघण्टुवचनात् नराः पुरुषास्तेषां समूहोनारमयनं यस्य स नारायणः, यद्वा 'जगत्सर्वं शरीरं ते स्थैर्यं ते वसुधातलम्' इति महर्षिवचनात्-नाराणि सकलब्रह्मण्डात्मकतत्वानि अयनं यस्य-नरतीति नरः प्रोक्तः परमात्मा सनातनः । नराज्जातानि तत्वानि नाराणीति विदुर्बुधाः' इत्युक्तेः । अत एव प्रतिकल्पं श्रीनारायणभेदः पुराणादौ प्रतिपादितः । नैवं श्रुत्यादौ श्रीरामभेदः प्रतिपादितोऽवलोक्यते । यद्यपि दण्डकारण्यस्थश्रीरामात् लंकास्थितः श्रीरामो देशकालभेदवद् भाति तथापि तत्र विशेषणयोर्देशकालयोरेवभेदो न तु विशेष्यस्य श्रीरामस्य भेदः । उपासना तारतम्याद् वा । यथा गुणकर्मान्यत्वविशिष्टसत्ताया द्रव्यमात्रवृतित्वेन शुद्धाद् भिन्नत्वं परन्तु सत्तात्वेन न पार्थक्यं विशेष्यस्यैकत्वात्, तथैव प्रकृतेपि विशेषण कालदेशयोर्न भेदोऽपित्वभेद एवेति । एवं च यथा यागादिजनितो धर्माधर्म रूपोऽपूर्वाख्यः पदार्थः केवलवेदप्रमाणक एव नान्यः प्रमाणगम्यो भवति, अत एव प्रमाणान्तरागम्यत्वादपूर्व इति कथ्यते तथा सकलविभूतिनायको भगवान् श्रीरामचन्द्रो वेदैकप्रमाणगम्यः सकलवेदाश्च साक्षात् परंपरया भगवन्तं श्रीराममेव सर्वशेषिसर्वप्रकारितया सर्वेशरूपतया प्रतिपादयन्तीति 'ब्रह्मसत्वे प्रमाणं तु शास्त्रमेव सुनिश्चितम् । तन्त्वौपनिषदश्चैतच्छ्रुतिवाक्यप्रमाणतः' इत्यादिरूपेण श्रीबोधायनमतादर्शोक्तदिशा सर्वेश्वरः श्रीराम एव ब्रह्मेति तत्त्वम् । एतत्सर्वमभिप्रेत्यैवाचार्याः प्राहुः 'शश्वच्छ्रीरामचन्द्रः सुमहितमहिमासाधुवेदैरशेषैरिति । विशेष विवरणं स्थनान्तरे सर्वेश्वरश्रीरामपरत्वप्रस्तावे मत्कृते द्रष्टव्यमितीह संक्षेपः ।

तथा तत्त्वत्रयेषु शेखरवद्राजमानो भगवान् 'निर्मृत्युः' निर्गतोऽपगतो मृत्युर्यमराजः कृतान्तो यस्य स निर्मुत्युः 'मृत्युर्धावतीति श्रुत्युक्तेः स एव नियन्ता अत एव मृत्युभयेन सर्वथा रहितः । प्राकृतिकदेहवान् लोको देवमनुष्यनारक तिर्यञ्च सर्वदैव मृत्युभयेन भीतो भवन् विभेति मरणस्याऽवश्यंभावादिति सर्वेषां मृत्युभयं नातिवर्तते, अयंतु सर्वशक्तिकः सर्वशरीरीति तस्य वशे यमराजो विद्यते नहि दासात्स्वामिनो भयं भवतीति न्यायेन न भगवतो यमाद् भयमीति भावः । तदुक्तं श्रुतौ-

'भयादस्याग्निस्तपति भयात्तपति सूर्यः ।



भयादग्निश्च वायुश्च मृत्युर्धावति पञ्चमः ॥'

इतिकाठके । इत्यादिश्रुतिर्भगवद्भयेन भीतत्वमिन्द्रयमादीनां दर्शयति ततः कथं भगवतो मृत्युभयं भवेदित्याशयेन प्राह-निर्मृत्युरिति' अर्थात् प्राकृतिकजन्यस्य मृत्युभयं भवति तस्य तदवश्यंभावात् भगवांस्तु लोकोत्तरोऽप्राकृतिको मृत्युमर्यादामतिक्रान्त इति भवत्येव निर्मृत्युः सर्वथामृत्युभयरहितः, अभयं सर्वभूतेभ्यो ददामीत्युक्तेः ।

तथा यथोक्तगुणसम्पन्नो भगवान् श्रीरामचन्द्रः 'सर्वशक्तिः' सर्वविषयक शक्तिर्विद्यते यस्य सः । 'परास्य शक्तिर्विविधैवश्रूयते स्वाभाविकी ज्ञान-बल-क्रिया चेत्यादिश्रुतेः । प्रत्यक्षोपस्थापितस्यानेकप्रकारकवित्तस्य प्रतिनियतदेश-कालक्रियाश्रयस्य जगत्-उत्पत्ति-स्थितिप्रलयात्मककार्यमशक्तेनाल्पशक्तिमता वा पुरुषेण सर्वथैव कर्तुमशक्यं तादृशजगत उत्पत्यादिकार्यमन्येन मनसाप्यालोचयितुमशक्यं तादृशं कार्यमयं करोतीत्यर्थत एव परमेश्वरे सर्वशक्तिमत्वं सिद्ध्यतीति दर्शयितुं सर्वशक्तिरिति विशेषणं प्रक्षिप्तम् । नहि केवलं तर्कमात्रोपस्थापितं सर्वशक्तिकत्वं भगवति प्रतिपादितम्, किन्तु 'परास्यशक्तिर्विविधाः सर्गाद्याभावशक्तयः' इत्यादिश्रुत्यनुमोदितमपीति भावः ।

तथा स श्रीरामचन्द्रो 'विकलुषविजरः' तत्र विगतं कालुष्यं पापात्मकं कर्म यस्य स विकलुषः पापपुण्यकालुष्यमशुभफलदायकं कर्म प्राकृतदेह सम्बन्धेन जायते तादृशं देहसम्बद्धं सत् तादृशदेहवतामेव सुखदुःखादिकं तस्मिन् जन्मनि जन्मान्तरे वा फलं जनयति, भगवांस्तु लोकोत्तराप्राकृतिक शरीरवानिति तस्य तादृशकर्मलिप्तत्वं न भवति कर्मबन्धनविनिर्मुक्तत्वात्-नहि कर्माणिलिम्पन्ति न मे कर्मफलेस्पृहा, इतिभगवद्गीतोक्तेः । ततः स विकलुष इति । तथा स विजरः, विगता दूरं गता जरावृद्धावस्था यस्य । इयं च जराप्राकृतिकशरीरमधिरुह्य तदभिमानिनं बद्धजीवं परम्परया दुखयन्ती दुःखजनकतया दुःखमिति कथ्यते, भगवांस्तु न प्राकृतिकशरीरवान् तथा मिथ्याज्ञानमूलकशरीराभिमानवानपि 'नित्यविभूतिमहेशम्' ( नीराजनस्तवे महामहोपाध्यायश्रीरामानन्दाचार्यश्रीरघुवराचार्याः ) इत्युक्तेः । ततो मिथ्याज्ञानरूपप्रयोजकाभावेन तज्जनितशरीराश्रितजरादिमान् न भवतीत्यतोऽजरः । अनादिकाला

देव भवपरम्परया जीवस्य तत् तत् देहाभिमानोऽहं ममेत्यात्मको जायते स्वभावत एव ततश्च देह एवात्मा आत्मैव देह इत्यभिमत्य तादृशदेहद्वारेण शास्त्रविहित तत् प्रतिषिद्धं कर्मकृत्वा तादृशकर्मजनितभोगाय शरीरान्तरं संधार्य संगृह्य पाप पुण्यादिमद्देहं तद्गतजन्मजरामरणादिकमनुभवन् घटीयत्रवदामोक्षं संसारस्त्रोत सोह्यमानो भवति । कदाचित् भगवत्प्रसादेन प्राग्भवीयपुण्यकर्मबलेन विगताभिमानो भगवतो रामस्य तारकाख्यः 'श्रीमद्रामचन्द्रचरणौ शरणं प्रपद्ये, श्रीमते रामचन्द्राय नमः' इत्याकारक मंत्रं जपन् भगवतः कैंकर्यं च कुर्वाणः कालं यापयन् भोगेन शरीरं समाप्य विलक्षणं भगवत्प्रसादलब्धं शरीरमास्थाय विमुक्तो भवतीति सांसारिकजीवव्यवस्था, परमेश्वरस्य तु संसाराभावेन सर्वदैव कर्मरहितो जरारहितश्चेति सर्वप्रथितमिति भावः । अत्रार्थे श्रुतिः 'अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघित्सोऽपिपासः सत्यकामः सत्यसंकल्पः' (छा ८। ७।१ ) इत्यादि । अर्थात् अयं परमात्मा अप्राकृतिकसमाभ्याधिकविवर्जिताप्राकृतिकलोकोत्तरस्वेतरसकलविलक्षणत्वेन 'अपहतपाप्मा' तत्र अपहतं विनाशितं शुभाशुभकर्म येन स अपहतपाप्मा विनाशितकर्मजालः परमात्मेत्यर्थः, न पूर्वं नेदानीं न वा परतो जायमानकर्म सम्बन्ध इति यावत् अर्थात् परमेश्वरस्य नेतः पूर्वं कर्मबन्धोजातो नेदानीं विद्यते न वा परं भविष्यति किन्तु पूर्वं नासीत् न वा वर्तमानकाले बद्धजीववत्कर्म विद्यते न वा भविष्यत्काले कर्मबन्धनं भविष्यतीति सर्वत्रैव कर्मबन्धनशून्यः परमात्मेति ।

यद्यपि 'अपहतपाप्मा' इत्यस्य विनाशितकर्मजाल इत्यर्थकरणे मुक्तजीववत् परमेश्वरेऽपिं कर्मसत्वमायाति, यतो यदि भगवति कर्म भवेत्तदैव कारण बलेन तद्विनाशःस्यात् प्रतियोगितासम्बन्धेन नाशं प्रति तादात्म्यसम्बन्धेन प्रतियोगिनो घटादेः कारणत्वमिति नियमात् यथा यदा मुद्गरादिप्रहारात् घटादिको विनाशितो भवति प्रतियोगितासम्बन्धेन नाशो घटे तिष्ठति तत्र घटे तादात्म्य सम्बन्धेन प्रतियोगिनो घटस्य विद्यमानतया नाशप्रतियोगिनोः कार्यकारणभावो निर्वाहितो भवति । तत्र घटादिसत्वं यदा भवति तदैव तस्य विनाशो भवति घटाभावे तद्विनाशस्यासंभवात् । नहि यथावस्त्रवान् विनाशयति तथा वस्त्ररहितो दिगम्बरः स्वकीयवस्त्रं विनाशयति तस्याभावात् । तथैव प्रकृते यदि भगवति



कर्मभवेत्तदैव नाशस्तदभावे प्रतियोगिनोऽभावात्कथं विनाश इति । तथापि कर्मसंबन्धरहितः परमात्मेत्यर्थः अर्थात् कर्मसंबन्धाभाववानित्येवार्थः । तथा च मिथ्याज्ञाननिमित्तकर्मसम्बन्धस्य बद्धजीवे पूर्वावस्थायां मुक्ते जीवे च प्रसिद्धत्वेन तदभावस्य भगवति प्रसिद्धेः । इत्थं च यथा ध्वंशः स्वाधिकरणे स्व पूर्वकाले साधयति न तथाऽत्यन्ताभावः स्वप्रतियोगिसत्वं स्वाधिकरणे साधयतीति 'पाषाणे गन्धाभावो वायौरूपाभाव' इत्यादिप्रतीत्या अन्यत्र पृथिव्यादौ प्रसिद्धस्य गन्धादेरभावो ज्ञायमानोऽपि पाषाणादौ गन्धादिसत्वं न प्रसंजयति अत्यन्ताभावस्य प्रतियोग्यधिकरणज्ञानपूर्वकत्वेऽपि स्वाधिकरणे स्वसत्वस्य यदा कदाचिदपि साधकत्वमिति न नियमः ।

तथा स भगवान् विधिभवप्रभृतिकदेवैरपि गीर्मनोभ्यामगम्यः । अर्थात् ब्रह्मादिदेवैः प्राथितमहिमावद्भिरपि वाङ्मनोभ्यां ज्ञातुं प्राप्तुं वा न शक्यः अशुद्धान्तःकरणैरनाराधितश्रीचरणकमलैस्तैरपि प्राप्तुमशक्यस्तदा काकथा मनुष्यादीनाम् । प्रकृते वाङ्मनसातीतत्वं प्रतिपादितम् तदशुद्धान्तः करणाभिप्रायेण, अन्यथा 'दृश्यते त्वग्रयाबुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः' एषोणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेश' इत्यादिश्रुतीनां वैयर्थ्यं स्यात् । तस्मात् 'यतो वाचो निवर्तन्तेऽप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् नबिभेति कुतश्चन' इत्यादिना न कोऽपि विरोधः । अन्यथा परस्परविरोधेनैकवाक्यस्य व्याहतार्थकत्वमापतेत् । अर्थात् समस्तहेयप्रत्यनीकोऽनन्तज्ञानसुखस्वरूपलक्षणो ज्ञानादिकानन्तकल्याणगुणाकरचिदचिदादिकसृज्यमानपदार्थोत्पत्तिस्थितिप्रलयकारकः आर्तादिचतुःप्रकारकभक्तपुरुषप्राप्योऽधर्माद्यारभ्य मोक्षान्त चतुःप्रकारकफलप्रापकः स्वेतरविलक्षणसमाभ्यधिकविवर्जितचिच्छरीरयुक्तः सकललोकलीलासंपादको भगवान् श्रीसीतानाथ एव परमतत्वम्

'राम एव परं ब्रह्म राम एव परं तपः ।
राम एव परं तत्वं श्रीरामो ब्रह्म तारकम्' इतिश्रुतेः ।
'तत्वं नैव परेशदिव्यगुणकाच्छ्रीरामचन्द्रात्परम्,
मुक्त्यै नास्ति गतिस्तथा रघुपतेर्भक्तेः प्रपत्तेः परा ।
निर्दोषञ्च मतं परं नहि विशिष्टाद्वैततो वैदिकं

श्रीरामान्नहि कीर्तनीयमपरं मुक्तिप्रदं प्राणिनाम्'
इति जगद्गुरुश्रीसाकेतनिवासाचार्योक्तेश्च ।

तत्र समस्तहेयप्रत्यनीकत्वमित्यस्य समस्तहेयविरोधित्वमेवार्थः । यथा प्रकाशान्धकारयोः । यथा प्रकाशोऽन्धकारस्यविरोधी सवितर्युदितेऽन्धकारो विगतो भवति नहि सौर्यप्रकाशे जाते नैशं तमोऽवस्थानं लभते । यतो विरोधिन एकस्य सद्भावे तदपरेण तत्रावस्थातुमशक्यं, प्रकाशतमसोः सहानवस्थानलक्षणविरोधस्य सर्वानुमतत्वात्प्रत्यक्षसिद्धत्वाच्च । अथ तमस्तेजसोः प्रत्यक्षसिद्धो विरोधस्तथैव हेयगुणयोः परस्परविरोधित्वमेव । तत्र दृष्टान्ते सति तेजसि न तत्र तमः पदमादधाति, तथैव दार्ष्टान्तिके 'सत्यं ज्ञानमानन्दं ब्रह्म' इत्यादिश्रुतिसिद्धज्ञानसुखाद्यात्मकस्य हेयप्रयनीकविकारादिदोषविरोधित्वमेव, यथा वा नकुलसर्पयोः स्वाभाविको विरोध इति नकुलसत्वे सर्पाभावो ज्ञायते तथैव भगवति ज्ञानानन्दादिसत्वे तद्विरुद्धानां हेयगुणानामभावो ज्ञायते । इतिज्ञानादिहेययोश्च परस्परं विरोधेन भगवति ज्ञानादिके श्रुत्या प्रतिपादिते तद्विरुद्धहेयानामभावो ज्ञायते इत्युभयोः परस्परविरोधित्वमेव । तदुक्तं 'ज्ञानानन्दमयोऽमलः' इति, तथा तद् ब्रह्म परमं नित्यमजमक्षयमव्ययम् ।
'एकस्वरूपन्तु सदा हेयाभावाच्च निर्मलम्' इति ।
'समस्तहेयरहितं रामाख्यं (विष्ण्वाख्यं) परमं पदम् ।
अविकाराय शुद्धाय नित्याय परमात्मने' ॥

इत्यादिप्रमाणवचनेन भगवति कल्याणात्मकज्ञानादिगुणकथनेन हेयकल्याणगुणयोः परस्परविरोधित्वं तमः प्रकाशयोरिव प्रकृतार्थतर्कस्वयमूहनीयः ।

'अनन्तज्ञानादिकल्याणगुणाकरः' तत्र अनन्तत्वं नाम नित्यत्वे सति चेतनाचेतनादिसकलपदार्थव्यापकत्वे सति सर्वान्तर्यामित्वरूपमेव । तत्र सति सप्तम्या विशिष्टार्थकतया नित्यत्वविशिष्टाचेतनादिव्यापकत्वविशिष्टसर्वान्तर्यामित्वात्मकम् । ततश्च देशतः कालतो वस्तुतश्च परिच्छेदराहित्यमेवानन्तत्वम् । तत्र व्यापकतया सर्वदेशे विद्यमानत्वेन देशतोऽपरिच्छिन्नत्वे देशपरिच्छेदराहित्यं सर्वदेशसंबन्धित्वस्यैव विभुत्वात्, देशपरिच्छिन्नस्य व्यापकत्वासंभवात् । नित्यत्वादुत्पादविनाशरहितत्वात् कालपरिच्छेदराहित्यम् । स्वभिन्नसमस्तपदार्थस्य प्रकारत्वात् स्वस्य प्रकार्यन्तराभावात् समाभ्यधिकपदार्थाभावेन वस्तुपरिच्छेदरहितत्वम् । एतदेव नित्यत्वे सति चेतनाचेतनसर्वपदार्थव्यापकत्वे सत्यन्तर्यामित्वमित्यनेनाभिव्यञ्जितम् । अर्थात् सकलजडचेतनव्यापकतया विभुत्वात् पृथिव्यामस्ति जलदेशेनास्तीति वक्तुमशक्यत्वेन देशपरिच्छेदो न भवति । तदुक्तम्-श्रुतौ-'नित्यं विभुं सर्वगतं सुसूक्ष्मम्, अन्तः प्रविष्टः शास्ताजनानां सर्वस्यात्मा, यः पृथिव्यां तिष्ठन्, यस्यात्माशरीरं यस्य पृथिवी शरीरं, यं पृथिवी न वेद, न तत् समश्चाभ्याधिकश्च दृश्यते' इत्यादि । अर्थात् ध्वंसप्रतियोगित्वं देशपरिच्छिन्नत्वं तदभावात् देशापरिच्छिन्नत्वमिति । नित्यत्वेन सर्वकालेऽवस्थानाद्वर्तमानकालेऽस्ति कालान्तरे घटादिवन्नास्तीति प्रतिपादयितुमशक्यतया कालपरिच्छेदो नास्ति । अर्थात् अत्यन्ताभावप्रतियोगित्वाभावात्सर्वदाऽवस्थानेन कालापरिच्छिन्नत्वम् । तथा सर्वान्तर्यामितया सर्वप्रकारित्वात्स्वस्य प्रकार्यन्तराभावादेतद्वस्तुवदिति वस्तुपरिच्छेदोपि न भवति । अर्थात् सर्वप्रकारिणोऽस्य कश्चित्प्रकार्यन्तरं भवेत्तदा प्रकार्यन्तरेण तस्य भेदसत्वेनान्योन्याभावप्रतियोगित्वरूपवस्तुपरिच्छेदोभवेन्नत्वेवं किन्तु तस्य सर्वात्मकतया भेदानुयोगिनोऽभावेन वस्तुपरिच्छिन्नत्वं नास्तीति वस्तुपरिच्छेदः, इत्येवं देशकृतकालकृतवस्तुकृतश्च परिच्छेदो नास्तीति अपरिच्छिन्नत्वरूपमनन्तत्वम्, एतद्भिन्नलौकिकवस्तूनामनित्यत्वात्-अव्यापकत्वात् प्रकारत्वात्त्व देशकृतकालकृतवस्तुकृतपरिच्छेदवत्वेनापरिच्छिन्नत्वं नास्तीति ज्ञेयम् ।



ननु यदि परमेश्वरोऽन्तर्यामितया जैवीयशरीरे जीवेचानुप्रविश्य तिष्ठति तदा जीवगतविकारादिदोषेण परमेश्वरोपि दोषभाक् भवन् जीवमर्यादां नातिक्रामेदिति चेत् भावानबोधात् । अयं भावः-यथा जीवो देवमनुष्यादिशरीरेऽनुप्रविश्य विद्यमानोपि शरीरस्य छेदनभेदनविकारेण शरीरी जीवो विकारवान् न भवति तथैव जीवशरीरी परमात्मा स्वशरीरभूतजीवगतदोषेण संपृक्तो न भवति । यथा सर्वत्र व्याप्यवस्थितोप्याकाशः पार्थिवजलीयधूलिवर्षातपादिभिः संपृक्तो न भवति तद्वत् । तदुक्तम्-'वर्षातपाभ्यां किं व्योम्नः' इत्यादि ।

न च मनुष्यादिशरीरवतो मनुषादिजीवस्य बाल्ययौवनादिविकाराभा-

वेऽपि शरीरकृतकर्मफलसंबन्धः तथा शरीरमूलकाज्ञानादयो दोषा भवन्त्येवेति दृश्यते तथैव परमेश्वरस्य जीवशरीरिणः कतिपयदोषाभावेऽपि कतिपयजीव दोषाणां परमेश्वरे शरीरिणि संक्रमो भवेत्ततश्चेश्वरस्येश्वरत्वमपगच्छेदिति वाच्यम् शरीरे प्रवेशभेदेनादोषात् । तथाहि मनुष्यशरीरावच्छिन्नमनुष्यशरीरे प्रथम प्रवेशः स्वसंपादितकर्मफलसुखाद्यनुभवाय मिथ्याज्ञानकर्ममूलकः प्रवेशः, अर्थात् जीवः कर्मफलभोगाय भवपरंपरोपार्जितकर्मबलेन प्रविशति तस्य तादृशप्रवेशे मुख्यं कर्मैव निमित्तं न तु स्वेच्छया प्रविशति किन्तु तत्तत्कर्मस्वा नुकूलतत्तद्देहे प्रवेशयतीति कर्मकारणको जीवस्य तत्तद्देहे प्रवेशः । परमेश्वरस्य तत्र मनुष्यादिशरीरे प्रवेशस्तु न कर्ममूलकस्तस्य कर्माभावात् किन्तु कृपा-पूर्वकः । अर्थात् भगवान् भक्तोपरि-अनुग्रहं कृत्वा शरीरे अनुप्रविश्य शरीर मूलकफलभोगाय तं प्रेरयतीति न भगवतः शरीरेऽनुप्रवेशः कर्ममूलकोऽपितु जीवोपरि-अनुग्रहपूर्वकः । यद्यपि जीवः कर्मबलेन तत्र देहेऽनुप्रविश्य स्वयमेव तत्तफलं भुनक्ति तत्रेश्वरः किं करीष्यतीति तथापि परमेश्वरस्तत्र देहेऽनुप्रविष्टस्तत्त कर्म कुर्वन्तं जीवं प्रेरयत्यनुमोदयति च 'शत्रूनगमयत्स्वर्गं वेदार्थं स्वानवेदयत्, आशयत्सलिले पृथिवीम्' इत्यादिवद् । शरीरे जीववत्प्रविष्टस्यापि परमेश्वरस्य जीववत् फलभोगादिकविकारदोषो न भवतीति श्रुतिरेवावेदयति, तथाहि-

'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे ।
छायातपौ ब्रह्म विदो वदन्ति पंचाग्नयो ये च त्रिणाचिकेताः ॥
द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्ति-अनश्नन्नन्योऽभिचाकशीति' ॥

'एष सर्वभूतान्तरात्मा' 'अपहतपाप्मा विजरोविमृत्युर्विजिधित्सोऽपि-पासः' 'विष्णवे सर्वजिष्णवे'

'विकारञ्च रामो दयाब्धिस्तथात्वे दयाशून्यतां पक्षपातञ्च नैति ।
प्रकारे विकारस्तथा चित्रसृष्टौ च हेतुर्यतः प्राणिनां प्राच्यकर्म ॥'
'प्रसन्नतां या नगताभिषेकतस्तथानमम्लौ वनवासदुःखतः'

इत्यादिश्रुतिभिर्जीवस्यैव कर्मफलभोक्तृत्वलक्षणं विकारं प्रदर्शितं भवति प रमेश्वरस्य तु सर्वविकारराहित्यं प्रदर्शितमिति विस्तारोऽन्यत्र द्रष्टव्य इति संक्षेपः ।



स च परमेश्वरः श्रीसीतानाथो ज्ञानानन्दैकस्वरूप इतिकथितम् । तत्र ज्ञानानन्दैकस्वरूप इत्यस्यानन्दरूपज्ञानात्मक एव । यद्यपि ज्ञानानन्दैकस्वरूपं यस्य स ज्ञानान्दः इतिविग्रहेऽपि उक्तार्थोपलब्धिर्जायते तथापि ज्ञानामात्रमेव पर मेश्वरस्वरूपमिति बोधयितुमानन्दरूपज्ञानात्मकं तच्चानुकूलं भवतीत्यानन्दरूप त्वात्, आनन्दरूपज्ञानमिति तत्रानुकूलं ज्ञानस्यैव स्वरूपत्वेपि ज्ञानानन्देति पार्थक्याभिधानमुभयोरुपपादनायेति । तदानन्तरूपं ज्ञानं कार्त्स्न्येनानुकूलं प्रकाश रूपं च, तत्र कार्त्स्न्येनेत्यस्य यावत्स्वरूपमनुवर्तमानत्वमेव, अनेकस्वरूपेऽननुकू लप्रदेशः प्रकाशरहितप्रदेशश्च नास्तीति सिद्ध्यति । तत्रानुकूलत्वमाल्हादकत्वं प्रकाशरूपत्वं स्वयं प्रकाशत्वमेव, ततश्च अनन्याधीनप्रकाशत्वविलक्षणसुखात्म काल्हादकत्वरूपज्ञानमेव स्वरूपं यस्य स ज्ञानानन्दैकस्वरूपः परमेश्वर इत्युक्तं भवतीति भावः ।

यथोक्तप्रकारेण ज्ञानानन्दस्वरूपस्य परमेश्वरस्य ज्ञानशक्तिबलैस्वर्यतेजो वात्सल्यशौर्यादयश्च ये कल्याणगुणाः सन्ति ते स्वस्वरूपेण नित्या न तु न्याय मतवज्जीवस्य नित्यत्वेऽपि तदीयज्ञानादिका अनित्याः । तत्र ज्ञानादीनां नित्यत्व मुत्पादविनाशराहित्यमेव, स्वरूपानुबन्धित्वात् यावदाश्रयभाविनो भवन्ति । अर्थात् यावत्पर्यन्तं गुणिनोऽवस्थानं तावत्पर्यन्तं यो गुणो यस्मिन्नवस्थानं लभते स गुणो यावदाश्रयभावी यथा जलतेजोवायुनां स्पर्शाः यावत् कालंजलादेर वस्थानं तावत्कालं ते स्पर्शास्तेषु भवन्त्येव, न तु जलादिकं परित्यजन्ति न वा तादृशाश्रयं परित्यज्यान्यत्र गच्छन्ति, तथैव भगवतो ज्ञानादिका गुणा यावत्कालं भगवतोऽवस्थानं तावत्पर्यन्तं ज्ञानादिकाः कल्याणगुणा भगवन्त्येवस्थिताः, भगवांश्च स्वरूपतो गुणादितश्च नित्य इति ते गुणास्तदीया अपि नित्या एव, अन्यथा यावदाश्रयभाविनो न भवेयुः पाकजरूपादिवत्, शब्दवच्च, यथा वि लक्षण तेजः संयोगलक्षणपाकादिजनितो रूपादिर्गुण आश्रयस्य घटादेर्यथावद वस्थानेपि पूर्वस्वरूपं परित्यज्य स्वरूपान्तरं च प्राप्नुवन् न यावदाश्रयभावी किन्तु अयावद्द्रव्यभावीति भवति । यथा वा आकाशगुणः शब्द आकाशस्य यथावदस्थानेपि क्षणिकत्वात् विपद्यमानोऽयावद्द्रव्यभावी । यावदाश्रयभावि नस्तु स्वरूपानुबन्धिगुणा एव, यथा भगवतो ज्ञानादिकाः तत्र परमेश्वरस्योत्पाद

विनाशरहिततयानित्यत्वेन तदीयस्वरूपानुबन्धिगुणा यावदाश्रयभावित्वान्नित्या एव । अन्यथैतादृशरूपत्वं न स्यादिति एतेषां ज्ञानादिकल्याणगुणानामुत्पाद विनाशरहितत्वरूपं नित्यत्वं ते इमे 'सत्याः कामा अनृतापिधानाः' इत्यादिका श्रुतिसिद्धाः । तत्र काम्यन्तेऽभिलाषाविषयीभूता भवन्तीति कामाः कल्याण गुणा ज्ञानादयस्ते च सत्याः त्रिकालाबाध्यास्तदाश्रयस्य नित्यत्वात्, तेषां च स्वरूपानुबन्धिगुणत्वात् तेपि नित्याः । तथा ते भगवतस्तादृशाः यथा मेघाच्छन्न दृष्टिमेघतिरोहितत्वादादित्यं न पश्यति तथा मिथ्याज्ञानाच्छादितबद्धजीवा मिथ्या ज्ञानतिरोहितत्वात्परमेश्वरस्य कल्याणगुणान् न विजानन्तीति । यथा ते भागवता ज्ञानादिकल्याणगुणा नित्यास्तथा निः सीमाः प्रत्येकमवधिरहिताः । 'यतो वाचो निवर्तन्तेऽप्राप्यमनसा सहेति' श्रुतेः । तथा 'निवर्तते खल्वानन्दगुणावधिं द्रष्टुमुद्यतो वेदः' इति वचनात् । तथा भगवतो ज्ञानानन्दादिकाः कल्याणगुणाः निःसङ्ख्याकाः इयत्तया परिच्छेत्तुमशक्याः सङ्ख्यारहिता इत्यर्थः सङ्ख्येयानामसत्यत्वात् । यदि तत्संख्येयस्यात्तदा तथा स्यादिति । तथोक्तम्-

यथा रत्नानि जलधेरसङ्ख्येयानि पुत्रक ?
तथा गुणा ह्यनन्तस्य असङ्ख्येया महात्मनः ॥' तथा
'वर्षायुतैर्यस्य गुणा न शक्या वक्तुं समेतैरपिसर्वलोकैः ।' इति च ।

अर्थात् हे तातः ! जलधेः समुद्रस्य अर्थात् समुद्रसम्बन्धिरत्नानि असंख्येयानि संख्यातुमयोग्यानि अर्थात् तानि इयत्तया परिच्छेत्तुमशक्यानि तथा तेनैव प्रकारेण अनन्तस्य महात्मनो भगवतो रामचन्द्रस्य गुणाः कल्याणगुणा आनन्दादयः, असंख्येयाः संख्यातुमशक्या एव । अर्थात् परमेश्वरस्यानन्दप्रमुख्ा ये कल्याणगुणाः सन्ति तेषां परिसङ्ख्यानं नास्तीति ।

ननु भगवतः कल्याणगुणानां सङ्ख्यानिर्द्धारणं द्वित्रैःपुरुषैर्न भवतु किन्तु मिलितैरनेकेस्तु कल्याणगुणसङ्ख्यानिर्द्धारणं कर्तुं शक्यते एवेत्याशङ्क्य अनेकैः संभूयापि तदीयसंख्यानिर्द्धारणं कर्तुं नैव शक्यमित्यत्राह' वर्षायुतैर्यस्य गुणान् इत्यादि । समेतैः संमिलितैः सर्वलोकैः निखिलैरपि मानवदेवादिभिर्वर्षायुतैरपि यस्य सर्वजननशीलस्य विष्णोः सर्वव्यापकस्य सर्वशरीरिणो रघुपुंगवस्य तदाख्यवंशे दशरथापत्यस्यसर्वेश्वरस्य संख्यातकल्याणगुणा आनन्दा



दिका वक्तुं नैवशक्या अर्थात् नित्यनिस्सीमनिःसङ्ख्यकभगवत् कल्याणगुणा नैव वक्तुं शक्या इति, एवमुदाहरणान्तरमपि समुदाहरणीयम् । तथा ये इमे भगवतो ज्ञानादिकाः कल्याणगुणास्ते निरूपाधिकाः सर्वोपाधिविवर्जिताः न तु सोपाधिका । जलपवनादौ समुपलभ्यमानपार्थिवगन्धवत् । यथा पृथिवी संबन्धात् जलादौ प्रतिभासितो गन्धगुणो जलस्य न निरूपाधिकः किन्तु पृथिवी संबन्धात्मकोपाध्यधीनः तथा न भगवति, अपि तु स्वाभाविकाः पृथिव्यां गन्धवत् । 'स्वाभाविकीज्ञानबलक्रिया च' इत्यादिश्रुतेः । तथा इमे भगवतो गुणाः निर्दोषाः सर्वदोषरहिता अहेया इत्यर्थः । 'समस्तहेयरहितविष्ण्वाख्यम् परमं पदम्' तथा 'ज्ञानानन्दमयोऽमलः' 'अपहतपाप्मा' इत्यादिश्रुत्या सर्वदोषाराहित्यस्य प्रतिपादनात् । तथा भगवत इमे कल्याण गुणा आनन्दादिकाः समाम्यधिकविवर्जिताः 'न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते । परास्य शक्तिर्विविधैव श्रूयते स्वभाविकी ज्ञानबलक्रियाच' इत्यादिश्रुतेः । तथैव श्रीमद्भागवते श्रीशुकार्य-नेदं यशो रघुपतेः सुरयाञ्चयात्त लीलातनोरधिकसाम्यविमुक्तधाम्नः' इति । अधिकसमाभ्यां विमुक्तं धाम प्रभावो यस्य निरतिशयाधिक प्रभाववत इत्याशयः ( श्रीशुकार्यमतदीपिका ) यदि भगवदपेक्षया कश्चित्समानोऽधिको वा भवेत्तदा समाम्यधिकविवर्जितत्त्वं न भवेत् परन्तु नैतादृशः कश्चित् दृश्यते श्रूयते यो हि परमेश्वरापेक्षया सदृशोऽधिको भवेत् तत्समाधिकस्य श्रुत्यैव निषेधादिति, परमेश्वरस्वरूपवत् पारमेश्वरा आनन्दादिकाः कल्याणगुणाः समाम्यधिकविवर्जिता एवेति संक्षेपः ।

अथ ये पारमेश्वरा ज्ञानादयः कल्याणगुणास्तेषां तत्तत्स्थले उपयोगित्व ञ्चेत्थम् । तथाहि, ज्ञानं चेतनानां हिताहितनिरूपणोपयोगिगुणत्वेन हितादिनिरूपणद्वारेणाज्ञानामुपयोगि भवति, शक्तिरघटितघटना सामर्थ्यम्, शक्तिविरहितानां कार्यसिद्ध्युपयोगिनी, सा च सापराधे समुपयोगिनी । कृपा दुःखितानां दुःखापनोदने उपयोगी भवति । वात्सल्यं सदोषाणाम् । तत्र वात्सल्यं नाम आश्रितप्रपन्नानां दोषस्य भोग्यतया स्वीकाररूपो गुणविशेषात्मकमेव, यथा गौः सद्योजातवत्सस्य शरीरे स्थितमलंजिह्वयालेढि तद्वत्, अतस्तदविद्याकर्मादिदोष सहिततया स्वात्मनोऽनुसन्दधत उपयोगी भवति । एवमेव शीलादिका अपि वि

वेचनीयाः संप्रदायानुसारेणेति संक्षेपः । विशेषस्तु जगद्गुरुश्रीमधुराचार्यप्रणीत भगवद्गुणदर्पणनामकग्रन्थतोमत्कृतविवरणतोऽनुसन्धेयः । एवं सर्वकल्याण गुणेषु ज्ञातव्यम् एतादृशकल्याणैरनेकैर्गुणैर्युक्तो भगवान् श्रीसीतानाथो दुःखीज नानां प्रपन्नानां दुःखं दृष्ट्वा तं दयापात्रं कृत्वा सर्वदुःखमपनीय स्वपदप्रदानेन जीवान् सुखयति तथा स्वकीयकैङ्कर्यकरणाय स्वदृष्टिसन्निधावेवस्थापयन् तमुप करोति परमेश्वरः ।

तदित्थं कल्याणादिगुणविशेषणतया विशेषणीकृतो ब्रह्मपदवाच्यो भग वान् श्रीसीतानाथः सर्वस्यापि स्थावरजङ्गमजगतः कारणं नान्यः । अर्थात् पूर्वक थितविलक्षणस्वरूपगुणविशिष्टः परमेश्वरो जगत्कारणतया गृह्यते । वेदान्ते ज गत्कारणविचारपरकप्रकरणे 'सदेव सोम्येदमग्रे आसी ( छा. ६।२।१ ) दिति छान्दोग्यस्य षष्ठप्रपाठकेऽभिहितम् । 'ब्रह्म वा इदमग्रे आसीत्, इति च वाज सनेयके प्रतिपादितम् । 'आत्मा वा इदमेक एवाग्रे आसीत् नान्यत् किञ्चनमिषत्' ( ऐ-१।१ ) अर्थात्-हे सोम्य ? इदं परिदृश्यमानं जडचेतनात्मकं जगत् अग्रे उत्पत्तेः पूर्वं प्रलयकाले सदेवासीत् सता परमेश्वरेण तादात्म्यापन्नमासीत् पर मेश्वरस्य शरीररूपेणावस्थितमभवत्, अत्र सत्पदेनास्यैव परमेश्वरस्य ग्रहणं भ वति । तथा इदं परिदृश्यमानं जगत् प्रलये ब्रह्मैवासीत् ब्रह्मणः शेषतयैवाभवत्, अत्र जगत्मूलकारणं ब्रह्मपदेनाभिव्यञ्जितम् । अग्रे उत्पत्तेः पूर्वं प्रलयकाले एक आत्मैवासीत् तदन्यत् किञ्चिदपि न समभवत् । तदाहुराचार्याः-श्वेतकेतो ? इदं परिदृश्यमानं विभक्तनामरूपमनेकावस्थं घटपटादिजगदग्रेसृष्टिकालात्पूर्वमेक-मेवाविभक्तनामरूपतया एकत्वावस्थापन्नमेवाद्वितीयं कर्तृत्वान्तरकारकरहितं स देव सदाकारकप्रतीतिविषयतापन्नमेवासीत् । अत्र सच्छब्दो घटादिनामसम्बन्ध योग्यतालक्षणं सत्वं शक्यतावच्छेदकीकृत्याखण्डब्रह्माण्डनायके श्रीमतिरामे परमात्मनि वर्तते । यद्यप्ययं सच्छब्दो विशेष्यलक्षणपरमात्मबोधकस्तथापि का रणविषयत्वसामर्थ्यात्कारणताप्रयोजकगुणविशिष्टप्रकृतिपुरुषकालशरीरकं परमात्मानमेव समुपस्थापयति' ( आनन्दभाष्यम् ६।२।१ ) अत्रात्मपदेन जगन्मूल कारणस्य कथनं कृतम् । किन्तु मूलकारणविषये कुत्रापि कृतः तत्र सूत्रकारो गतिसामान्यन्यायेन गतिसामान्यादितिसूत्रे श्रुत्यादिबलेन श्रीसीतानाथ एवं



जगतां हेतुरिति निर्णयं कृतवान् । ततश्च पूर्वोदितसकलकल्याणगुणगणविशिष्टः श्रीसीतानाथो जगत उत्पत्तिस्थितिलयकारणतया हेतुर्नान्यकश्चिज्जगद्धेतुः ।

अस्य जडतयोपलभ्यमानस्य जगतः कश्चिज्जड एव पदार्थो हेतुः सम वायिकारणं नतु चेतनः परमेश्वरो हेतुः, यतो जगतोऽजडकारणं कारणत्वेऽर्थात् यदि जगच्चेतनं समवायिकारणं भवेत्तदा यथा तन्तुषु विद्यमानं शुक्लादिरूपं कार्ये-पटेशुक्लरूपमेवारभते, नहि शुक्लेभ्यस्तन्तुभ्यो नीलः पीतो वा पटो जायतेऽपितु शुक्ल एव प्रादुर्भवति' कारणगतागुणाः स्वसजातीयानेव गुणान् कार्ये आरभन्ते' इति न्यायेन । यदि जडात्मकस्य जगतः समवायिकारणं पर मेश्वरः स्यात्तदा स चेतन इति तद्गता चेतना कार्ये जगति चैतन्यमुत्पादयेदिति, ततश्च घटादिजगदपि चेतयेत् नत्वेवं भवति प्रत्यक्षविरोधादननुभवाच्च । तस्मात् यथा पटं प्रतिपटसजातीयास्तन्तवः समवायिकारणं तन्तुसंयोगोऽसम वायिकारणं कुविन्दवेमादिकं निमित्तकारणम्, तत्र यस्मिन् समवायसम्बन्धेन सम्बद्धं सत्कार्यमुत्पद्यते तत्समवायिकारणं, तथा समवायिकारणे समवेतं सत् यत् कार्यस्योत्पादकं तदसमवायिकारणम्, तदसमवायिकारणं द्विविधं, कार्यै कार्थप्रत्यासत्या, कारणैकार्थप्रत्यासत्त्या च यथा घटं प्रतिकपालसंयोगोऽसमवा यिकारणम् तत्र घटस्य समवायिकारणं कपालं तस्मिन्नेव कपाले समवायेन घटकार्यं तिष्ठति तथा तत्रैव कपाले कपालसंयोगोऽपि भवतीति, एकत्रस्थित्वा संयोगोऽसमवायिकारणं भवति घटादिद्रव्यात्मककार्यं भवति, अर्थात् कपाला दिकारणसंयोगो घटादिकारणतयाऽभिमतः स घटादिकार्यस्य समवायिकारणे वर्तमानः सन् समवायेन तत्रैव कपालादौ वर्तमानोभूत्वा घटादिकार्यं जनयति । एतादृशस्थलेऽसमवायिकारणं भवतीति प्रथमं समवायिकारणम् द्वितीयमस मवायिकारणं यथा घटादिरूपे जनयितव्ये कपालनिष्ठरूपादिकं घटादिरूपरसा देरसमवायिकारणम्, तत्र कारणद्वारा कार्यस्यैकत्राधिकरणे प्रत्यासत्तिर्भवति, यथा घटरूपस्यासमवायिकारणं कपालरूपादिकम् तत्र घटीयरूपस्य समवायि कारणं घटस्तेन समवायिकारणभूतेन घटेन सहैव कपालगतनीलादिरूपस्यै-कस्मिन् कपाले सम्बन्धोऽस्तीति कपालरूपस्य समवायिकारणं भवति आभ्यां समवाय्यसमवायिकारणाभ्यां भिन्नोऽन्यथासिद्धिशून्यो हेतुर्निमित्तकारणम् । तत्र

समवायिकारणं द्रव्यमेवेति नियमः । असमवायिकारणत्वं गुणकर्मणोरेव निमित्तकारणत्वं सप्तपदार्थसाधारणम् । इत्थं सर्गकाले कार्यकारणभावः । सर्गादौ तु परमेश्वरेच्छावशात् परमाणौ कर्म, तत एकः परमाण्वन्तरेण संयुज्य द्व्यणुकमुत्पादयति, त्रिभिर्द्व्यणुकैश्चतुरणुकं ततो घटाद्यन्तकार्यजातस्योत्पत्तिर्भवति । तत्र परमाणवः पार्थिवजलीयतैजसवायवीयाश्चतुःप्रकारकाः । तत्र परमाणवः पृथिव्यादिकार्यजनने समवायिकारणं सजातीयत्वात्सजातीयमेव समवायिकारणमिति नियमात् । परमेश्वरस्तु कर्तृरूपतया निमित्तकारणं भवति, यथा सर्गकाले घटादितत्तत्कार्योत्पादने कपालादिकं समवायिकारणं कुलालस्तु चेतनो निमित्तमर्थात् कर्ता 'उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत एव कर्तृत्वनियमात् । यथा सर्गस्य मध्ये तथा सर्गादौ पृथिव्याद्युत्पादने परमाणुः समवायिकारणमसमवायिकारणं तत्तसंयोगादिर्निमित्तकारणञ्च परमेश्वर इत्येवं सर्गप्रारम्भकालिककार्यकारणभावमाश्रित्य सर्गप्रक्रियायां परमेश्वरस्योपयोगो न तु तस्योपादानकारणमिति नैयायिकादयः ।

तदत्र वेदान्तिनः लुताकीटनिदर्शनेन परमेश्वरस्यैवोपादानत्वं तस्यैव च निमित्तत्वमपीच्छन्ति, इदमीयोविशेषविचारः 'प्रकृतिश्च प्रतिज्ञा दृष्टान्तानुपरोधा' दित्यादिसूत्रे, तथा 'इदं सर्वं यदयमात्मा' इत्यादिश्रुत्यर्थविचारावसरे तत्तत्स्थले कृतः श्रीआनन्दभाष्यकारैर्न तथा न्यायमते परमेश्वरस्य जगत उपादानत्वमभिमतम् । यत उपादानस्थगुणस्य कार्ये समानजातीयगुणान्तरोत्पादकत्वनियमेन जडजगत्यपि चेतनत्वप्रसंगात् तस्मान्नेश्वरो जगतो निमित्तकारणमुपादानञ्चेति न्यायसमयः । बौद्धजैनावपि परमाणुमेव जगत उपादानं कल्प्य तत एव जगतः सर्गादिकमभ्युपगच्छतः । ते परमाणवः खरस्निग्धोष्णेरणस्वभावाः, तेभ्यो जगत उत्पत्तिरिति । न च परमाणुनामतीन्द्रियत्वेनाप्रत्यक्षत्वात् ततसमुदायात्मकघटादिकार्याणां प्रत्यक्षता न स्यादिति वाच्यम्, एकस्य परमाणोरप्रत्यक्षत्वेऽपि ततः समुदायरूपघटादिकार्यस्य प्रत्यक्षत्वसंभवात् यथातिदूरेऽवस्थितस्यैककेशस्याप्रत्यक्षत्वेऽपि केशसमुदायस्य प्रत्यक्षता भवति तथैव प्रत्येकस्य परमाणोरप्रत्यक्षत्वेऽपि परमाणुञ्ज्ञात्मकघटादेः प्रत्यक्षत्वे नास्ति कश्चिद्बाधकः । एवं बौद्धाः स्वमते परमाणुकारणवादमेव स्वीकुर्वन्ति न तु परमेश्वरस्य कारणता



मिच्छन्ति' एवमादित्यनाथानुयायिश्वेतांवरीया जैना अपि परमाणोः कारणतामेवेच्छन्ति न तु परमेश्वरस्य कारणतां स्वीकुर्वन्ति, यदि परमेश्वरः कारणं स्यात्तदा स्वकीयादृष्टद्वारा जनयिष्यतीति तस्यापि अदृष्टसद्भावेऽनीश्वरत्वमेव तथा न्यायमतोक्तदोषोऽपि स्यादेवेति, बौद्धजैनयोरेतावान् भेदः, यद्यपि परमाणुकारणवादः सर्वेषामनुमतस्तथापि बौद्धमते: चत्वारः खरस्निग्धोष्णेरणस्वभावाः पार्थिवादिपरमाणवः परस्परं विभिन्नाः जैनमते सर्वोऽपि परमाणुः समान एव न तु तत्र पार्थिवादिभेदः एकत्वेऽपि शुभाशुभकर्मादिनिमित्तभेदात् ते एव परमाणवः पृथिवीरूपेण कदाचिज्जलरूपेण तेजोरूपेण वायुरूपेण वा परिणता भवन्ति, एतत्तत्वम् अन्ययोगव्यवच्छेदिकायाः 'आदीपमाव्योमसमस्वभावं स्याद्वादमुद्रानतिभेदिवस्तु । तन्नित्यमेवैकमनित्यमन्यदितित्वदाज्ञां द्विषतां प्रलापाः' इत्यादिश्लोकव्याख्यानावसरे मल्लिषेणेन स्पष्टीकृतम् । पृथिव्यादिकार्याणामपकर्षगतो यो भागः स एव परमाणुः स च नित्यः तस्याप्यनित्यत्वे तदवयवानपि अन्वेषणीयतयाऽनवस्थापातात् । तस्माद् यत्रावयवधाराया विश्रामस्तस्य नित्यत्वं परमाणुत्वञ्च । तस्यानित्येऽसमवेतभावकार्योत्पादप्रसंगात् । अर्थात् अवयवधाराया विश्रामाभावेऽनवस्थेतिचरमस्यापि कार्यत्वे तदा तेऽवयवान्तरस्य अभावेन अवयवित्वादुत्पादस्यावश्यं वक्तव्यतया समवायिकारणस्य चाभावेनासमवेत एव स उत्पद्येत, परन्तु नैवं संभवति भावकार्यस्य समवेतत्वनियमात् । तस्मादवयवधारा यत्र विश्राम्यति स एव परमाणुः । एतादृश परमाणुरेव कार्यजातस्य कारणं न तु परमेश्वर इति ।

तदयमत्रसंक्षेपः सौत्रान्तिकवैभाषिकबौद्धश्वेतांबरदिगम्बरजैनन्यायवैशेषिका एवं प्रतिपादयन्ति, तत्र बौद्धजैनयोः परमाणुरेव सकलप्रपञ्चस्य कारणम् । वैशेषिकादिमते परमाणुर्जगतः समवायिकारणम् 'क्षित्यंकुरादिकं सकर्तृकं कार्यत्वाद्घटादिवदित्यनुमानगम्यपरमेश्वरो जगन्नियन्ता कर्तृरूपं निमित्तकारणं भवति घटादिकार्ये मृत्तिकाकुलालवत् अर्थात् यथा घटादिकार्ये मृत्तिकाकपालादिकमुपादानकारणं समवायिकारणं चेतनस्तु कुलालतन्तुवायप्रभृतिकः कर्तृतया निमित्तकारणं भवति चेतनमन्तरेण कस्यापि कार्यस्योत्पत्तेर दर्शनात् । न च मेघमालादौ कस्यचिच्चेतनस्यादर्शनेपि तत्र कार्यं सावयव

मुत्पद्यते इति वाच्यं तत्रापि सर्वदर्शिनः सर्वशक्तिमतः परमेश्वरस्यैव कर्तृत्वात् । क्षित्यंकुरादिवत् मेघमालादीनामपि साध्यकुक्षिनिक्षेपात् । नहि दृष्टान्तमादाय व्यभिचार उद्भाव्यते तथा सति अनुमानविलोपप्रसंगात् । यद्यपि बौद्धजैन नैयायिकेषु पदार्थविषये प्रक्रियायां च परस्परवैमत्यं विद्यते तथापि परमाणु कारणता विषये सर्वेषामैकमत्यमेव । एते सर्वेऽपि वादिनः पृथिव्यादिसर्वकार्या णां परमाणुकार्यत्वमेवेच्छन्ति न तु परमेश्वरोपादानकत्वमिति व्यक्तम् ।

एतन्नैयायिकादिमतं न समीचीनम् यतो जगत्कारणतया सर्वसंसारोपादान कारणरूपेणांगीकृतपरमाणूनामतीन्द्रियतया सर्वप्रत्यक्षसाधारणकारणम-हत्त्वस्याभावेन प्रत्यक्षप्रमाणाभावात् । तथा च कूर्मरोमशशविषाणादिवि षयेऽप्रवर्तमानं प्रत्यक्षं तेषां शशविषाणकूर्मरोमादीनामभावं गमयति न तु प्रत्यक्ष प्रमाणेन कूर्मरोमादेः सिद्धिस्तथैवातीन्द्रियतया सर्वाभिमतपरमाणावप्रवर्तमान प्रत्यक्षं परमाणूनामभावमेव गमयेदिति परमाणावप्रवर्तमानप्रत्यक्षं परमाणूना मभावमेव गमयेदिति प्रत्यक्षप्रमाणाभावात् परमाणोः सिद्धिर्न भवतीत्यतः प्रमा णासिद्धस्य परमाणोः स्वरूपस्यैवासिद्ध्या न परमाणुभ्यो जगदुत्पत्तिः । न चैतत्कथनं तदा शोभते यदि प्रत्यक्षमात्रं प्रमाणं भवेत् तथात्वे 'प्रत्यक्षमात्रं प्रमाणम्' इति वदतश्चार्वाकस्य त्वं भ्राता स्याः । तथा यदि प्रत्यश्रमात्रं प्रमाणं तदभाववस्तुनोऽभावाभ्युपगमे वियति पतन् पतत्री अतिदुरत्वात् विद्यमानचक्षु रादिप्रत्यक्षेण नोपलभ्यते इतितदभावः स्यात् । तथा लोचनस्थमञ्जनमतिसमीपे लोचने वर्तमानः समीप्यान्नोपलभ्यते इति किं तदभावो भवति । यथा वा सदेव घटादिरूपमन्धस्य प्रत्यक्षविषयं न भवतीति एतावता किं तदभावो निश्चीयते, तथा मनसोऽनवस्थानात्सदपि वस्तु तादृशपुरुषो न पश्यति । तथा यदतिसूक्ष्मं वस्तु तदपि प्रत्यक्षेण न गृहीतं भवति यथा द्व्यणुकधूमनीहारादयः । तथा यद् वस्तु भित्त्यादिव्यवहितं तत्समीपस्थं प्रत्यक्षेण न गृह्यते यथा कुड्यादिव्यवहितं राजदारादिकं न पश्यति साधारणो जनः । तथा सदपि वस्तु अभिभवान् न पश्यति, यथाहनि विद्यमानमपि ग्रह-नक्षत्र-मण्डलं दिवसे सूर्यप्रभाभिरभिभूतं दृष्टं न भवति तथा समभिहारादपि विद्यमानस्य ग्रहणं न भवति, यथा कपो तराशौ प्रक्षिप्तः न परिचीयते, यथा वा जलराशौ प्रक्षिप्तं कमण्डलुजलं



पार्थक्येन न ज्ञायते । यदि प्रत्यक्षमात्रनिवृत्त्या वस्तूनामभावः स्यात्तदा उपर्युक्तपदार्थानां प्रत्यक्षनिवृत्तिरेव स्यात्, न तु निवर्तमानं भवति । यत्र वस्तु योग्यमन्यतमप्रतिवन्धकं भवति, तत्रैव तस्याभावो भवति, न तु सर्वत्र । तस्मान्न प्रत्यक्षतः परमाणूनामग्रहणे तदभावः कथमग्रहस्तेषां सूक्ष्मत्वात् । अथ यदि सूक्ष्मत्त्वान्न गृह्यन्ते तदा तदस्तित्वे किं प्रमाणमिति चेत् अनुमानमेव, अन्य थानुपपत्तिश्चेति गृहाण, तथाहि यदि मूलकारणं जगतोऽस्ति घटादिकार्यदर्शनात् कपालादितो घटादिवत् ।

तथाहि यथा घटादिकार्यं दृष्ट्वा तत्कारणभूतकपालादिकं ज्ञातं भवति तथैव महीमहीधरादिकं प्रात्यक्षिकं वस्तु दृष्ट्वा तत्कारणं चरमावयवरूपं पर माणुरूपकार्यमनुमितं भवति-अस्ति परमाणुः तत्कार्यान्यथानुपपत्तेः कारणसत्वे एव कार्यं भवति कारणाभावे कार्योत्पादायोगादिति । एवं क्रमेण परमाणोः सिद्धिसंभवेन प्रमाणाभावात्परमाणूनां सिद्धिर्नभवतीति कथनमयुक्तमिति चेदत्रोच्यते-वैदिकोऽयं मार्गः अत्रागमसिद्धस्यैव वस्तुनः सिद्धिराद्रियते । यथा स्वर्गापूर्वादिनां तत्र न प्रत्यक्षस्य न वाऽनुमानस्य प्रसरः । वेदस्य परमाणु कारणता प्रतिपादकादर्शनात् । नहि परमाणोः कारणताप्रतिपादकाः काचन श्रुतयः समुपलब्धा भवन्तीत्यागमप्रमाणेन तु परमाणूनां जगत्कारणत्वं नैव संभवति । तथा नानुमानेन जगत्कारणत्वं परमाणोः साधयितुं शक्यम् ? शुष्क तर्कस्यासाधकत्वात् तदाहुरानन्दभाष्कारा:-'अपि चान्यत्रप्रतिष्ठितस्यापि श्रुति विरोधिनस्तर्कस्य प्रकृतेऽप्रतिष्ठानात् । श्रुत्यानुकूलस्य तर्कस्य तु श्रुत्यर्थनिश्चा यकत्वादुपादेयत्वमेवेति हृदयम् । तथा च

'प्रत्यक्षमनुमानञ्च शास्त्रञ्च विविधागमम् ।
त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता' मनु. १२।१०५।

आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसन्धत्ते स धर्मः वेद नेतरः ॥ मनु. १२।१०९।

इत्यादिवचनैर्वेदाविरोधितर्कस्यैव तत्त्वनिर्णयसहकारित्त्वमुक्तम् । प्रकृते तु केवलं तर्कवादमाश्रित्य प्रधानकारणतायां नाप्रतिष्ठितत्वरूपदोषान्मोक्ष इति शुष्कतर्कनिराशः । अत एव 'अचिन्त्या खलु ये भावा न तांस्तर्केण योजयेत्'

इत्येवं श्रौतार्थनिर्णये शुष्कतर्काणां पौराणिकनिषेधोऽपि दृश्यते । तस्माच्छ्रौत मार्गमवलम्ब्य ब्रह्मण एव जगत्कारणत्वमास्थेयमितिदिक्' (आनन्दभाष्य २।१।११) इति । तथैव 'यत्नेनानुमितोप्यर्थः कुशलैरनुमातृभिः । अभियुक्ततरै रन्यैरन्यथैवोपपाद्यते' इत्यादिनामहताप्रक्रमेण तर्काप्रतिष्ठानादिति सूत्रेभामतिका रेणाचार्यान्तरभाष्यकारेणापि खण्डनादिति नानुमानेन परमाणूनां जगत्का रणत्वं कथमपि सिद्ध्यति ।

किञ्च तदेव वस्तु अनुमानेन साधयितुं शक्यते यत्रागमविरोधो न भवेत् यथा, 'सुमेरुः प्रस्तरमयः पर्वतत्वात् पर्वतान्तरवत्' इत्यनुमानं 'सुमेरुः स्वर्ण मयः' इत्यागमेन बाधितंसत् स्वसाध्यसाधनाय नालं भवति । यथा वा 'न रास्थिपवित्रम् प्राण्यङ्गत्वात् शङ्खवत् इत्यनुमानम् 'नारास्थिस्पृष्ट्वा सचैलं जलमाविशेदित्यागमबाधितं सत् मनुष्यास्थिनि पवित्रतां साधयितुं न शक्यते तत्कस्य हेतोः ? आगमबाधितत्वात् तथैव परमाणोर्जगत्कारणता साधकमनु मानमागबाधितत्वात् तद्विरुद्धार्थस्य साधनायोगात् अनुमानेनापि परमाणोर्ज गत्कारणत्वस्यासिद्धिर्भवतीति परमाणुसद्भावे एव प्रमाणं न भवति यदा तदा परमाणूनां जगत्कारणत्वमिति विचारस्य दूरोत्साहितत्वमेवायातीतिसारः ।

अपि च न्यायविदः परमाणोः परमकारणस्य नित्यत्वमणुत्वं च स्वीकुर्वन्ति तद्विरुद्धं रूपरसादिमत्वं चेच्छन्ति न चैवं तस्य नित्यत्वं साधयितुं शक्यम् । तथा हि ये इमे गन्धादिकागुणास्ते सर्वपरमाणुगता भवन्ति अथवा एकैकोगुणः सर्वत्र ? तत्रैकैकगुणसद्भावे पृथिव्यां गन्धमात्रमुपलभ्येत जले स्नेहमात्रं तथा तेजोवायौ चापि इति पृथिव्यां गन्धमात्रमुपलभ्येत जले स्नेहमात्रं तथा तेजोवायौ चापि इति पृथिव्यां रूपं न स्यात् जलादौ स्पर्शादीनां सत्वं न स्यात् । यदि सर्वगुणः सर्वत्र तदावायावपि रूपगन्धादीनां सत्वं स्यात् ततश्च यत्र गुणाधिक्यं द्रव्यस्योपचय इतिपरमाणोरणुत्वं न स्यात् । तथा एकस्य परमाणोः षड्भिर्देशैः सम्बन्धेन सदशत्वादित्यणुत्वविपर्ययः प्राप्नोति, तथा परमाणुर नित्योरूपादिमत्वात् घटादिवत् यथा घटादिकपदार्थोरूपादिमानिति तत्रानित्य मिति अनित्यत्वव्याप्यरूपादिमान् घट इत्यादिपरामर्शबलेन घटादावनित्यं सिद्धं भवति तथैव परमाणौ रूपादिमत्वहेतो विद्यमानत्वेन अनित्यत्वव्याप्यरूपादि



मान् परमाणुरिति परामर्शबलेन परमाणावप्यनित्यत्वं सिद्ध्येदिति गतं परमा णोर्नित्यत्वकथेति न परमाणुर्नित्यो यथोक्तानुमानेन तेषामनित्यत्वसाधनात् ।

न च 'परमाणुरनित्यो रूपवत्वादित्यत्र रूपवत्वहेतुरेवासिद्धोऽर्थात् रूपा भाववान् परमाणुरिति निश्चयेन रूपवानिति पक्षधर्मताया अभावस्तदभावात् अ नित्यत्वव्याप्यरूपवान् परमाणुरितिपरामर्शाभावेनानित्यत्वसिद्धिर्न स्यादिति यथा 'शब्दो गुणश्चाक्षूषत्वादित्यत्र चाक्षुषत्वाभाववान् शब्द इतिनिश्चयकाले गुणत्वव्याप्यचाक्षुषत्ववान् शब्द इत्याकारकपरामर्शाभावेन शब्दोगुण इत्यनु मितिर्न भवति तथैव परमाणौरूपाभावेन हेत्वभावात्तादृशानुमानेन' 'परमाणुर नित्यत्वानुमानं न स्यात्ततश्च कथं परमाणावनित्यत्वमुच्यते इति वाच्यम् । भावा नवबोधात् । अर्थात् यदि परमाणौ पार्थिवादित्रितयेरूपवत्वं न भवेत् तदा रूप रहितजलादिपार्थिवादिपरमाणुतो जायमानद्व्यणुकादिकमपिरूपवन्न स्यात् । ततश्चरूपादिरहितद्व्यणुकादिपरम्परया घटजलादिमहाभूतेऽपि रूपवत्वा-सिद्ध्या घटादेश्चाक्षुषत्वादनुपपत्तिरेव स्यात् । यतो द्रव्यचाक्षुषप्रत्यक्षे उद्भूत रूपस्य महत्वस्य तथा द्रव्यस्पार्शनप्रत्यक्षे च स्पर्शस्य कारणताया आवश्य कतया परमाणौरूपस्पर्शयोरभावे महाभूतपर्यन्तघटादीनां प्रत्यक्षता नस्यादिति । 'परमाणुरनित्योरूपत्वा' दित्यनुमानमसिद्धमिति तादृशानुमानेन परमाणोरनित्य त्वं न सम्भवतीति चेत्तत्रोच्यते श्रुत्या परमेश्वरव्यतिरिक्तस्य सर्वपदार्थस्य जन्यत्व विनाशवत्वयोः प्रतिसर्वान्तर्गतपरमाणोर्नित्यत्वासिद्ध्या तादृशपरमाणोर्जगत कारणता न भवतीति । यतः श्रुतिविरुद्धस्यसाधनमनुमानेनासिद्धमेव, अनुमा नेन परमाणुं प्रकल्प्य तस्य जगत्कारणत्वप्रकल्पनं सर्वथैवानुचितमितिभावः ।

किंच 'सदेवसोम्येदमग्रे आसीदेकमेवाद्वितीयम्' 'आत्मा वा इदमेक एवाग्रे' 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभि संविशन्ति' तद् ब्रह्म तद्विजिज्ञासस्व' इत्यादि 'अहं सर्वस्य प्रभवो मत्तःसर्वं प्रवर्तते' । 'अहमादिश्च मध्यं च भूतानामन्त एव च 'कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम्' इत्यादिश्रुतिः स्मृतिश्च परमेश्वरस्य जगदुत्पत्तिस्थितिविनाशका रणत्वं प्रतिपादयन्ति । ततश्च यदि परमाणोरचेतनस्य जगत्कारणत्वं मन्येत तदा श्रुत्या स्मृत्या च विरोधः समुत्पद्यते इति परमेश्वरस्य जगत्कारणत्वप्रतिपादक

श्रुत्यादिविरोधात्परमाणूनां जगत्कारणत्वं न संभवति । श्रुत्यनुमानयोर्विरोधे श्रुतिविरोधस्यैव ज्यायस्त्वमर्थात् बाधकत्वं तदितरस्य बाध्यत्वमिति श्रुतिबाधितमनुमानं परमाणोर्जगत्कारणत्वसाधनाय न भवतीति ध्येयम् । ननु भवतु श्रुतिरनुमानस्य वाधिका परन्तु प्रकृते तथा न संभवति यतः प्रकृतेऽनुमानं लौकिकं कार्यकारणभावं बोधयति श्रुतिस्त्वलौकिकं धर्माधर्मादिकं बोधयतीत्युभयोर्विभिन्नविषयत्वात् न वाध्यबाधकभावो विषयैक्ये विरोधे भवति विरोधे च बलीयसा दुर्बलो बाधितो भवति । इहतूभयोर्विषयौ विभिन्नौ, अनुमानस्य विषयोलौकिककार्यकारणभावः श्रुतेस्तुधर्माधर्मादिकः । तत्कथमुभयोर्विरोधादनुमानस्य श्रुतिबाध्यतेतिचेत्सत्यम् ।

स्वर्गापूर्वादिकजनको धर्मादिस्तत्कारणं वाजपेयादिर्यागो वेदैकसमधिगम्यत्वं न वेदस्य विषयो विभिन्नस्तद्भिन्नश्च विषयोऽनुमानस्य तत्र विषयभेदे बाध्यबाधकभावो न भवति नहि भवति घटाभाववद्भूतलमिति घटाभावप्रकारकभूतलत्वावच्छिन्नविशेष्यकनिश्चयस्य संयोगेन घटत्वावच्छिन्नप्रकारकभूतलजलादिविषयज्ञानविरोधित्वम् तत्कथम् ? भूतलधर्मिकघटाभावप्रकारकनिश्चयस्य भूतलधर्मिकघटवत्वप्रकारज्ञानस्यैव विरोधिता न तु जलधर्मिकघटप्रकारकज्ञानस्य तद्वात्ता बुद्धिं प्रति तदभाववत्तानिश्चयस्यैव विरोधिताया अन्यत्र व्यवस्थापनात् । तद्वत् प्रकृते भवदुदीरितक्रमेण श्रुत्यनुमानयोर्विभिन्नविषयता प्रतिभासमानत्वेऽपि यथा आगमस्य पूर्वकाण्डविषययागादिप्रतिपादकत्वमिति यागादिवेदैकसमधिगम्यस्तथैव परमेश्वरस्तस्मिन् जगत्कारणत्वादिप्रतिपादनमपि श्रुतेर्विषय एव कुतः ? नहि लोकसिद्धः परमेश्वरलोकोत्तरस्वरूपगुणविशिष्टः प्रत्यक्षेणानुमानादिप्रमाणेनाधिगन्तुं योग्यः, 'यतो वाचो निवर्तन्तेऽप्राप्य मनसा सह' 'अस्थूलमनणु' सपर्यगाच्छुक्रमकायमन्वणमास्नाविरं शुद्धमपापविद्धम्' इत्यादिश्रुतेः । किन्तु वेदैकसमधिगतः समानविषयतया विरोधो भवति तथा विरोधे सति प्रबलयाश्रुत्या दुर्बलस्यानुमानस्य बाधो भवतीति श्रुतिबाधितेनानुमानेन परमाणूनां जगत्कारणत्वसाधनं न युक्तमितिदिक् विस्तरस्तु 'अपरिग्रहाच्चात्यन्तमनपेक्षेति' सूत्रीयजगद्गुरुश्रीरामानन्दाचार्यप्रणीतभाष्यीयसौरभे द्रष्टव्यमिति संक्षेपः ।



तदत्र सांख्याः-ननु न परमेश्वरो क्षरजगत उपादानम् यतः परमेश्वरस्य सर्वविकाररहिततया जगदाकारेण परिणामरूपविकारासंभवात् । तस्मात् सदृशविसदृशपरिणामात्मकमूलप्रकृतिरेव जडात्मिका जगदाकारेण विसदृशपरिणामवती जडजगदाकारेण परिणता भवतीति सैव प्रकृतिर्जगत आकाशादिप्रपञ्चस्योपादानम् । तदुक्तम्-

'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकस्तुविकारो न प्रकृतिर्नविकृतिः पुरुषः ॥ इति ।'

तदयमर्थ सांख्यशास्त्रे चत्वारः पदार्थाः कश्चिदर्थं प्रकृतिरेव यथा मूलप्रकृतिः सा च सर्वदा प्रकृतिरूपैव न तु कदाचित् विकाररूपा सा सर्वस्य जनयित्री, अत एव सा मूलप्रकृतिरिति कथ्यते तस्या अपि मूलान्तरत्वेऽनवस्थानापातादिति प्रथमः पदार्थः । महत्तत्वाहंकारपञ्चतन्मात्रारूपाः सप्तप्रकृतिविकृत्युभयरूपाः । तथाहि महत्तत्त्वं मूलप्रकृतेः कार्यमिति विकारात्मकं कार्यं कारणञ्चाहंकारस्य । एवमहंकारो महतत्वस्य कार्यं विकारः कारणञ्चाकाशतन्मात्रायाः सूक्ष्माकाशस्तन्मात्रापदप्रतिपादितोऽहंकारस्य कार्यं कारणं च वायुतन्मात्रायाः कारणं वायुतन्मात्रं चाकशतन्मात्रकार्यं कारणञ्च तेजस्तन्मात्रस्य तेजस्तन्मात्रं पृथ्वीतन्मात्रस्य कारणं कार्यं च तेजस्तन्मात्रस्येत्येवं क्रमेण महत्तत्वादारभ्य पृथिव्यन्ततन्मात्रा सप्तप्रकृतिविकृतयो भवन्ति कस्यचिदपेक्षया प्रकृतिः कस्यचिदपेक्षया विकृतिर्यथापूर्वं प्रदर्शितम् ।

तथा षोडपदार्था विकाररूपा एव भवन्ति न तु कस्यापि कारणम् । तत्र चक्षुरादिनि पञ्चज्ञानेन्द्रियाणि वाक्पाणिपादपायूपस्थाख्यानि पञ्चकर्मेन्द्रियाणि, उभयात्मकं मनः तथा आकाशादिपञ्चमहाभूतानि एतानि सर्वदा कार्याण्येव न तु कस्यापि कारणानि । अर्थादेते षोडशसर्वदा कार्यरूपा एव न तु कारणरूपाः ।

न च महाभूतपृथिव्या गोघटवृक्षादयोऽनेके विकाराभवन्तीति गोघटवृक्षादिनां कारणत्वमिति तदपेक्षया पृथिवीभूतं कारणमिति कथमुच्यते न कस्यापि कारणमिति वाच्यम् भावानवबोधात् । अर्थात् स्थूलत्वमिन्द्रियग्राह्यत्वं च यथा पृथिव्यां तथैव घटादिष्वपि समानरूपेणैव विद्यते न तु यादृशं स्थू

लत्वमिन्द्रियग्राह्यत्वं मृथिव्यां तदपेक्षया विलक्षणं गोघटादिषु । अथ च तत्त्वान्तरोत्पादकत्वमेव प्रकृतित्वम् । न च पृथिव्यपेक्षया तत्त्वान्तरत्वं गोघटवृक्षादिनाम् । अत्र तत्त्वान्तरोत्पादकत्वाभावादेते षोडशविकारा एवेति ।

तथा पुरुष आत्मा न प्रकृतिरूपोऽर्थात् न कस्यापिकारणमपरिणामित्वात् । न० वा विकृतिः कस्यापि कार्यपरिणामित्वाभावात्तस्मान्नपुरुषः प्रकृतिर्विकृतिर्वेति ।

सेयं मूलप्रकृतिः सत्वरजस्तमसां गुणत्रयाणां साम्यावस्थारूपैव सामान्येनैषामवस्थानं प्रलये सर्गे तु वैषम्यम् । अर्थात् प्रलयकाले सत्वं सत्वरूपतयैव परिणमते रजो रजो रूपतया तमस्तमोरूपतया अयमेव सदृशपरिमाणो गुणानाम् । तदुक्तमीश्वरकृष्णेन-

सत्वं लघुप्रकाशकमिष्टमुपष्टम्भकं चलं च रजः ।
गुरुवरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिरिति ॥

सत्वं सर्वदैव लाघवप्रकाशाभ्यां युक्तं भवति अयमेव सत्वगुणो लाघवान्वितोऽग्नेरूर्ध्वज्वलने वायोश्च तिर्यग् गमने हेतुर्भवति प्रदीपज्ञानादेः प्रकाशात्मककार्ये रजोगुणश्चलनस्वभावक उपष्टम्भकश्च तमस्तु गुरुरावरणकंचेति । रजोगुणश्चलनस्वभावकः सर्वदैवसत्वं प्रवर्तयेत् यदि गुरुणातमसानाव्रियेत तमसाऽवृत्तं तु क्वचिदेवप्रवर्तयति न सर्वत्रेति । न च गुणानां परस्परविरोधशीलनां परस्परविरोधात् सर्वेध्वस्ताभवेयुस्ततश्च सर्गकथैवास्तमियात् ? तत्राह, 'प्रदीपवच्चार्थतो वृत्तिरिति' सत्यं गुणाः परस्परविरोधभाजस्तथापि अर्थतः पुरुषार्थभोगापवर्गमाकलय्य विरोधं परित्यज्य मिलिताः सन्तः स्वस्वकार्यं करिष्यन्ति यथा प्रदीपः । अर्थात् वर्तितैलानलाः परस्परविरुद्धा अपि मिलिताः सन्तः प्रदीपपदवाच्या भवन्तः प्रकाशलक्षणं कार्यं कुर्वाणा दृश्यन्ते अर्थकारित्वसमये विरोधरहिता भवन्ति ।

यद्यपि सुन्दोपसुन्दौ परस्परं विवदन्तौ ध्वस्तौ अभवतां सैवस्थितिः प्रकृतेः तथापि प्रदीपदृष्टान्तेनायं दोषो मार्जनीयः ।

यद्यपि प्रकृतिरचेतना आलोचनसाध्यकार्यकरणेऽसमर्था तथापि पुरुषसंयोगात्प्राप्तचैतन्याऽलोच्यकार्यं सर्गात्मकं करोति । तदुक्तम्-



तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम् ।
गुणकर्तृत्वेऽपि तथा कर्तेव भवत्युदासीनः ॥' इति ।

प्रकृतिर्ज्ञानरहिता पुरुषश्च कर्तृत्वादिधर्मरहितः, 'तस्माच्च विपर्यासात् सिद्धं साक्षित्वमस्य पुरुषस्य । कैवल्यं माध्यस्थं द्रष्टृत्वमकर्तृभावश्च' इत्यादिना प्रदर्शितस्ततश्च पुरुषस्य कर्तृत्वं प्रकृतेर्ज्ञानादिमत्वं कुतः ? इत्याशङ्क्य कथितम् 'तस्मात्तत्संयोगादचेतनम्' इत्यादि । यस्माज्ज्ञानकर्तृत्वादिनां पूर्वप्रकरणेन वैयधिकरण्यं प्रदर्शितं ततश्च सर्गाभावोदोषस्तस्मात् कारणात् तत्संयोगात् अचेतनं चेतनारहितमपि लिङ्गं बुद्धिश्चेतनावदिव भाति यथा अयः पिण्डः स्वभावतः शीलतोपि वह्निसंयोगात्तप्त इवाभाति । तथैव पुरुषसंयोगात्प्रकृतिः चेतनेव विभाति न तु वस्तुतस्तत्र चैतन्यं स्वभावतस्तु जडत्वमेव । तथा गुणानां सत्वादीनां कर्तृत्वेपि उदासीनः पुरुषः कर्तृगुणविशिष्टप्रकृतिसंयोगात् कर्त्ता इव भवति न तु वस्तुतः कर्त्ताकृतिमान् पुरुषो भवति । अर्थात् वास्तविककर्त्तृत्वमचेतनायां प्रकृतौ पुरुषे तु प्रकृतिसंसर्गात् । तथा वस्तुतश्चैतन्यं पुरुषे तिष्ठति । किन्तु पुरुषसंयोगात् प्रकृतिश्चेतना वद्विभाति । एतादृशी प्रकृतेः सकाशाज्जडात्मकं जगद्भवतीति तत्र सर्गे प्रकृतिरेवोपादानम् । तदुक्तं,

'प्रकृतेर्महान् ततोऽहंकारस्तस्माद्गणश्च षोडशकः ।
तस्मादपि षोडशकात्पञ्चभ्यः पञ्चभूतानि'

एतेषां महदादीनां स्वरूपगुणादिकं यथा शास्त्रमवगन्तव्यम् । न चाचेतनायाः प्रकृतेः कथं प्रवृत्तिः नह्यचेतनस्य क्वचित्प्रवृत्तिर्दृष्टेति साम्प्रतमचेतनस्यापि दुग्धस्य पयसश्च प्रवृत्तिदर्शनात् । तदुक्तं-

'वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य ।
प्रतिपुरुषविमोक्षार्थं प्रवर्तते तद्वदव्यक्तम् ॥

यथा दुग्धमचेतनमपिवत्सपोषणाय गोस्तनात्क्षरति यथा वा जलं स्वयमेव लोकोपकाराय प्रवर्तमानं भवति न तु कश्चिच्चेतनः प्रवर्तको भवति तद्वदनागतभोगापवर्गाय अचेतनापि प्रवर्तते एव । तस्मात् न परमेश्वरो जगत्सर्जकः प्रकृत्यैव संभवात् ।

तदेवमत्र प्रश्नस्याशयः कपिलमतानुयायिनः, यथा मृत्तिकया जायमा-

नस्य घटादिद्रव्यस्याचेतनस्याचेतनजातीयं मृत्तिका द्रव्यमुपादानकारणं भवति तथैव सत्वरजस्तमोगुणमयस्य सुखदुःखमोहसमन्वितस्य परिदृश्यमानसकल जगतो गुणत्रयसाम्यलक्षणं मूलप्रकृतिपर्यायं प्रधानमेव कारणं भवति यथा हि मदध्यादिपरिणममानस्य पयसः स्वेतरनिरपेक्षं प्राथमिकपरिस्पन्दप्रभृतिपरिणामप्रवाहः स्वतएव भवति न तत्र स्वेतरचेतनस्याचेतनस्यवाऽवश्यकता दृश्यते यथा वा तोयदविमुक्तस्य स्वभावत एकरसस्य जलस्य नारिकेलहरीतकी आमलकादितत्तद्भूविकारानासाद्य मधुराम्लतिक्ताद्यनेकप्रकारेन परिणामप्रवृत्तिपरिदृश्यते-तेनैव प्रकारेण सततपरिणामस्वभावस्य प्रतिसर्गावस्थायां प्रलये सदृशपरिणामतया वर्तमानस्य मूलप्रकृत्यपरपर्यायस्य प्रधानस्य गुणत्रयात्मकस्य चेतनाद्यनधिष्ठितस्य केवलस्यैव सर्गाद्यवस्थायाम् गुणत्रयवैषम्यमूलकविचित्रो विलक्षणपरिणामः स्यादेवेति न कापि क्षतिरित्यतः प्रधानमेव जगतः स्वतन्त्रं स्वेतरानपेक्षं संभवत्येवेति प्राश्निकानामाशयः संक्षिप्तः ।

समाधाता इत्थं प्रतिपादयति-परपरिकल्पितमचेतनमचेतनत्वादीश्वराधिष्ठानमन्तरेण प्रवर्तितुं नोत्सहते रथादिवत्यथाऽवेतनरथादिपदार्थोऽश्वाश्ववाहमन्तरेणगमनाय पर्याप्तं न भवति । तथैवेश्वरस्याधिष्ठातृत्वमन्तरेण जडस्य प्रधानस्य परिणामानुपपत्त्या सर्गाद्यभाव एव स्यात् तदुक्तम्-

'प्रकृतिं पुरुषंचैव प्रविश्यात्मेच्छया हरिः ।
क्षोभयामास सम्प्राप्ते सर्गकाले व्ययाव्ययौ' इति ।

अर्थात् हरिः शरणागतजनसर्वपापहारकसर्वेश्वरश्रीसीतानाथः स्वकीयेच्छया न तु कस्यापि प्रेरणादिना प्रकृतिं पुरुषं च प्रविश्य अन्तर्यामित्वात्तदुभयान्तः प्रवेशं कृत्वा 'व्ययाव्ययौ' व्ययौ विनाशः प्रलयः, अव्ययस्तद्भिन्नः सर्गस्तदर्थंसर्गकाले समागते सति सर्गाय क्षोभयति प्रेरयति प्रलयकाले समागते तु भगवान् प्रकृतिं प्रधानपुरुषं जीवात्मानं प्रेरयतीति ततश्च प्रकृतिपुरुषाभ्यामीश्वराधिष्ठितत्वाभ्यामेवोत्पत्तिप्रलयौभवत इति ।

अनेन वचनेनेदमायाति यत् परमेश्वराधिष्ठानमन्तरेणाचेतनस्य प्रधानस्य परिणामो नैव भवति यदा च प्रवृत्तिस्तदेश्वराधिष्ठितत्वेनैव भवति । न च यथाऽयस्कान्तकणिर्वाह्याभ्यन्तरेण चेतनाचेतनयोः सहकारमन्तरेणैव स्वसमीपस्थं



लौहादिकं स्वाभिमुखं प्रवर्तयति तथैवानपेक्ष्यैवेश्वरं प्रकृतिः सर्गकालावसरे सर्वं परिणामयिष्यतीति वाच्यम् अयस्कान्तादिस्थलेपि परमेश्वराधिष्ठानत्वस्यैव विद्यमानत्वान्नकोऽपि दोषः । परमेश्वरो हि सर्वस्य नियमाक इति परमेश्वरः नियन्तृत्वे नायस्कान्तादिस्थलेऽपि प्रवृत्तेः । अन्यथा दण्डाद्यचेतनानामपि स्वतः प्रवृत्तिसंभवप्रसंगात् । न च कण्टकतैक्ष्ण्यादिवत् स्वभावत एव चेतनस्य प्रवृत्तिः संभवेदित्युच्यते तदा लौकिककार्यकारणभावावलंबनं सर्वत्रास्तमियात् स्वभावादेव सर्वत्र संभवात् । तस्मात्परमेश्वराधिष्ठितत्वैनैवाचेतनस्य प्रवृत्तिर्नतु स्वातन्त्र्येणेति न प्रकृतिर्जगत उपादानमपितु परमेश्वरः श्रीरामः सर्वशक्तिमानेव जडचेतनजगतः कारणं न परमेश्वरातिरिक्ताः प्रकृतिः परमाणुर्वाकारणमिति राजमार्गः । तदाहुर्जगद्गुरवः श्रीश्रुतानन्दाचार्याः-

त्रिधापि श्रुतौ सर्ववित् सर्वशक्तिर्जगत्कारणं जानकीनाथ एव ।
ततः कापिलं गौतमीयञ्च शैवं च शाक्तं तथाऽन्यन्मतं नानवद्यम् ॥

(श्रौतसिद्धान्तविन्दुः) अपि च कदाचित्साङ्ख्यश्रद्धामनुरुध्य परमेश्वराधिष्ठानमन्तरेणस्वयमेव जगदाकारेण प्रकृतिः परिणमते इति स्वीक्रियेत तदा सर्गनियामकस्य कस्यचिदप्यभावेनानवरतं सृष्टिरेवस्यादिति स्थितिसंहारयोर्विलोप एव प्राप्तो भवेत् । अथवा प्रलय एव सर्वदा भवेत् न तु कदाचिदपि सर्गः स्यात् न चेष्टापत्तिः सर्गान्तरमेव प्रलयस्य शास्त्रे श्रवणात् अनुभवाच्चलोके घटाद्युत्पादानन्तरमेव तद्विनाशस्य संभवात् । 'प्रतियोगिता सम्बन्धेन विनाशं प्रति तादात्म्यसम्बन्धेन प्रतियोगिनः कारणत्वनिश्चयात् । दृश्यते श्रूयते च जगत उत्पत्तिस्थितिसंहारो भवतीति । तस्मात् जगत उत्पत्यादीनामभावोव्यत्यासोऽनियमोदुर्भावो वा न कल्पयितुं शक्य इति कालभेदेन जायमानसर्गतदीयसंहारव्यवस्थाया अनुपपत्तिरेवस्यादिति न परमेश्वरस्याधिष्ठानमन्तरेण स्वातन्त्रेण प्रधानं जगतः कारणमपितु परमेश्वर एव ।

अपि च यथा परमाणवो न जगत्कारणं प्रधानं चाचेतनत्वाज्जगतः सर्गादिकारणं न भवति तथैव ब्रह्मरुद्रभृतयो जीवा अनादिकालिका अपि न जगतोऽभिन्ननिमित्तोपादानकारणानि संभवन्ति कुतः ? जीवानां कर्मपराधिनत्वात् स्वयं दुखादिमत्वाच्चेति । अर्थात् हैरण्यगर्भाः पाशुपताश्च ब्रह्मादिकं जीवं प्रजा.

पतिमागमसिद्धम्, 'हिरण्यगर्भः समवर्ततांग्रे भूतस्य जातः पतिः' इत्याद्यागम
सिद्धं निमित्तकारणं मन्यते अर्थात् उपादानं जगतः किमप्यन्यम् ब्रह्मारुद्रा
दिको देवो जगतो निमित्तकारणमिति । तन्न मनोरमम्, रुद्रादिनां कर्मपराधि
नत्वात् । अर्थात् ब्रह्मादिको जीवः जीवत्वात् संकुचितविज्ञानशक्तिः सन् यथा
स्वेच्छामात्रेण नकिञ्चिददि कर्तुं समर्थो जीवान्तरवत्, तथैव हिरण्यगर्भस्य कर्मा
धिनतया जगद्व्यापारकार्येनैव शक्तः, अर्थात् कर्माधीनतया संकुचितविज्ञा
नो ब्रह्मा परमेश्वरव्यतिरिक्तेन मनसाप्यालोचयितुमशक्यस्य जडचेतनसकल-
जगत उत्पत्यादिकार्यकरणे सर्वथा ब्रह्मादिको देवोऽशक्त एव । ततो ब्रह्मारुद्रो
वा जगदुत्पत्यादौ कर्तृकारको न स्यात्, उपादानगोचरापरोक्षज्ञानचिकीर्षाकृति
मत्वस्यैव कर्तृत्वेन एतादृशजगत्कर्तृत्वस्य रुद्रादावभावात् । किन्तु भगवान् पर
मेश्वरश्रीराम एवोत्पत्यादिकं कर्तुं समर्थो नान्यस्तद्व्यतिरिक्तः । किञ्च 'अ-
पहतपाप्मा विजरो विमृत्युः' इत्यादिश्रुतिकथितप्रकारेण कर्मानधीनः तथा
'सत्यंज्ञानमानन्दं ब्रह्म' इत्यादिश्रुतिप्रतिपादितप्रकारेण निरतिशयानन्दयुक्त
इतितादृशपरमेश्वर एव स्वेच्छया जगतः स्थावरजङ्गमस्य सकलप्रपञ्चस्य सर्गक
रणे समर्थः न ततो व्यतिरिक्तो ब्रह्मा वा रुद्रादिर्वेति । उभेदेवा जगदन्तर्वर्तिनः
कर्माधीना इति न स्वेच्छया जगद्व्यापारे समर्थाः । तदुक्तम्-

ब्रह्माद्याः सकलादेवा मनुष्याः पशवस्तथा ।
विष्णोर्माया महावर्तमोहान्धतमसावृता ॥
आब्रह्मस्तंव पर्यन्ता जगदन्तर्व्यवस्थिताः ।
प्राणिनः कर्मजनिताः संसारवशवर्तिनः ॥' इति ।

अर्थात् ब्रह्माद्या इत्यादि ब्रह्मादया हिरण्यगर्भप्रमुखा देवा देवकोट्यन्त
र्गताः सकला समस्ता अपिचेतनवर्गाः तथा ततो हीना मनुष्या मनुष्ययोनौ स
मुत्पन्ना ब्राह्मणाद्यवान्तरभेदभिन्नास्तथा मनुष्याद्यपेक्षयापि हीनाः पशवो
लोमवल्लाङ्गूलावछिन्नगोमहिषजाऽजाविगर्दभोष्ट्रप्रभृतयश्चतुष्पदा द्विपदा वा उभ
यतो दत एकतोदन्ता वा इत्याद्यनेकाः सर्वेपि जीवाः विष्णोः परमात्मनो माया
महावर्तमोहात्मकान्धतमोभिरावृत्ताः मायात्मकान्धतमसा तादृशान्धकारेण संछन्न
मतयो भवन्ति तथा हिरण्यगर्भादारभ्य तृणादिपर्यन्ताः सर्वेपि जीवाः-स्वकृत



कर्मोत्पादितसंसाराधीना जगतोऽन्तर्गता एव अर्थात् ये केचनजीवाः सन्ति ते
सर्वेऽपि स्वकृतकर्मपराधीनाः संसारे वसन्ति । अनेन वचनेन कर्मपराधीनत्वं
संसारमध्ये निविशमानत्वं तृणादिजीवानां कथितं तथैव रुद्रहिरण्यगर्भादिनामपि
कर्मपराधीनत्वं संसारान्तर्गतत्वं प्रतिपादितमित्येवं हिरण्यगर्भादेः कर्मवश्यतां
प्रतिपाद्येतरजीववत् दुखादिमत्वमपि वचनान्तरेण प्रतिपादयति-

ततः क्रोधपरीतेन संरक्तनयनेन च ।
वामाङ्गुष्ठनखाग्रेण छिन्नं तस्य शिरो मया ॥
यस्मादनपराधस्य शिरश्छिन्नं त्वया मम ।
तस्माच्छापसमाविष्टः कपालीत्वं भविष्यसि ॥' इति ।

इत्थं हि श्रूयते पूर्वं कस्मिंश्चित्कल्पे हिरण्यगर्भस्य मुखपञ्चकमासीत् अथ
च किमपि कारणमादाय कोपकुपितः शिवो ब्रह्मणः पञ्चमं मुखमच्छिनत्, ततः
प्रभृति स ब्रह्मा चतुर्मोखो जातः । ततश्छिन्नशिरो ब्रह्मा शिरश्छेदनजनितं
दुःखमनुभूय शिवाय शापं दत्तवान् यत्त्वं सर्वथाघरहितस्य शिरश्छित्वाऽदुखयः
ततोऽद्यप्रभृतिः भूतप्रेतादिगणविभूषितोऽपवित्रशरीरकपाली भवेति शशाप ।
अत्र प्रथम पचनं शिवस्य स कमपि कथयति ततो मया शिवेन क्रोधजनित
कमलवत् ताम्रजनयनेन वामांगुष्ठनखद्वारा न तु त्रिशूलादिना शस्त्रान्तरेण वा
तस्य व्यलीकाचरणवतो ब्रह्मणरेवं शिरश्छिन्नं कर्तितमिति ।

द्वितीयवचनं ब्रह्मणः, ततः शिवेन कृतशिरश्छेदनजनितदुःखदुखितो
ब्रह्मा शिवमपि शशाप हे विरूपलोचन ! सर्वथापराधरहितस्य मे मम त्वया
कपालीवत् निर्दयोभूत्वा मदीयशिरश्छेदनं कृतवान् तस्मात् कारणात् मम शाप
समाविष्टोभूत्वाऽद्यप्रभृतिकपालिनो रूपं विभ्राणः श्मशानात् श्मशानान्तरं भ्रमन्
भवेति ।

एतावता प्रदर्शितपौराणिकवचनेन हिरण्यगर्भशिवप्रभृतिप्राथमिकजीवा
नामपि जगदन्तर्गतत्वेन कर्मपराधीनत्वं तथा कर्माधीनत्वेन दुःखादिमत्वं च
प्रदर्शितं भवति ततश्चावृतज्ञानाः शिवादयो विशिष्टतत्तद्गुणवन्तश्चेतनाभ-
वन्तोऽपि न जगत उत्पत्यादिकरणे समर्थाः, इतरजीवादिवत् यथेतरे जीवाः
संकुचितविज्ञानत्वेन कर्मवशाद्दुःखादिमन्तश्च जगत उत्पादनादिकं कर्तुं न समर्था

अपितु संकोचरहितविज्ञानवान् कर्मानधीनः कर्मणोऽपि प्रेरकः सर्वान्तर्यामी सर्व शक्तिः परमेश्वरः श्रीसीतानाथो जगन्नायकः कर्तुमकर्तुं समर्थः सन् फलविशेष माप्तसर्वकामतयाऽनभिसन्धाय जगद् व्यापारेऽधिकृतो भवतीति विज्ञेयम् ।

अयं च भगवान् यज्जगतः कारणं भवति तत् स्वेच्छया नत्वेतस्य जगत् कारणत्वमविद्याकर्मपरनियोगादिकारणकं भवति अयं तु स्वेच्छातिरिक्तं सर्वम विद्यादिकं तिरस्कृत्य पुरस्कृत्य च स्वकीयेच्छां जगदुत्पादयन्भवति सर्वशक्ति-मत्वात् ।

अर्थात् यदिदं कारणत्वमविद्याकर्ममूलकं तत्सकलजीवसाधारणम् । लोके कार्यकारणभावतयाऽवगते कारणत्वं विषयसंपर्कजनितसुखकारणेना-विद्यया च भवति । तत्र शास्त्रानुकूलं फलं कर्मप्रधानकं भवति, लौकिकानां फलमविद्याप्रधानकमेव । ये च सर्गादौ परमेश्वरेणाधिकारिहिरण्यगर्भादय-स्तत्कार्ये विनियोजितास्तेषां तत्तत्कार्ये कारणत्वंस्वेतरपरमेश्वरनियोगगम्यं भव तीति विवेकः । तदुक्तं-

'प्राजापत्यं त्वया कर्म मयि पूर्वं निवेशितम् ।
एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधजौ स्मृतौ ॥'
'तदा दर्शितपन्थानौ सृष्टिसंहारकारकौ ॥' इति ।

अर्थात् हे भगवन् ! पूर्वं सर्गादिकाले एव त्वया सर्वान्तर्यामिणा सर्व शेषिणा च प्राजापत्यं प्रजापतित्वसंपादकं कर्मपुण्यविशेषलक्षणं मयि हिरण्य गर्भे निवेशितम्, अर्थाद् भवन्निवेशितकर्मबलेन जीवोप्यहं प्रतिबद्धज्ञानबलेन यथावत् सर्वमुत्पादयामि विष्णुश्च सर्वं यथावत् परिपालयति, रुद्रश्चविनाशकाले मत्कृतसर्गस्य विनाशं करोतीति । एतौ ब्रह्मरुद्रौ द्वावपि विबुधश्रेष्ठौ देवविशेषौ परमेश्वरस्य प्रसादांशेन क्रोधांशेन च समुत्पन्नाविति शास्त्रे प्रतिपादितौ यत इमौ परमेश्वरेण जातौ तस्मात् परमेश्वरप्रदर्शितमार्गौ सर्गस्य संहारस्य च संपादकौ भ वतः । एतावता ज्ञायते यत् आधिकारिकहिरण्यगर्भादीनां जगदुत्पादनस्थिति संहारकर्मणि यत्काणत्वं तत्परमेश्वरनियोगेनैव भवति न तु स्वातन्त्र्येणेति ब्रह्मादिवाक्यादेव ज्ञायते । परमेश्वरश्रीराम जगदुत्पत्यादिकारणत्वं तु न तथा तत्तु स्वातन्त्र्येणेति ।



अयमर्थः-यदयं परमेश्वरो जगतः सर्गादिव्यापारं करोति स व्यापारः अविद्या कर्मपूर्वको भवति यथा लौकिकानाम् ? अथवा व्यसनितया जगद् व्यापारं करोति अथवा केचनित् प्रेरितः सन् करोति आधिकारिकपुरुषवदिति शङ्कायामुत्तरं दत्तवान् स्वेच्छयैव करोति जगद्व्यापारं परमेश्वरः । अयमाशयः परमेश्वरस्य सर्गादिकरणे किमविद्याकारणं व्यसनो वा कारणं कस्यचिदीश्वर व्यतिरिक्तस्यादेशविशेषो वा आधिकारिकादिवत् यथा लौकिकपुरुषस्य लौकि कसुखाद्यर्थं मिथ्याज्ञानं कर्म वा हेतुर्भवति, यथा वा कस्यचिद्व्यसनिनस्तमा लभक्षणादौ प्रवृतिः, हिरण्यगर्भादि वा सगोत्रोत्पादनाय परमेश्वरप्रवर्तितः प्रवर्तते इति । उत्तरंतु स्वेच्छा न कर्मादितो व्यसनतः परप्रेरितो वा किन्तु परमेश्वरप्रवृत्तौ तदीयेच्छैव केवलम् । अर्थात् 'निरवद्यं निरञ्जनम्, अमृतस्य परं सेतुर्दग्धेन्धनमि वानलम्' 'अपहतपाप्मा विजरो विमृत्युर्विजिघित्सोऽपिपासः, 'न तस्येशकश्चन' 'नतस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्चदृश्यते । परास्य शक्तिर्वि विधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इत्यादिश्रुतिकथितप्रकारेण अवि द्यादिदोषप्रतिकूलस्य नियमकान्तररहितस्येश्वरस्य स्वकीयेच्छातिरिक्तं कार-णान्तरं न भवतीति । तदत्रानुसन्धेयाः-

'संक्षिप्य हि पुरा लोकान्मायया स्वयमेव हि ।
महार्णवे शयानोऽप्सु मां त्वं पूर्वमजीजनः ॥
पद्मे दिव्येऽर्कसंकाशे नाभ्यामुत्पाद्यमामपि ।
प्रजापत्यं त्वया कर्म मयि सर्वं निवेशितम् ॥
सोऽहं संन्यस्तभारो हि त्वामुपास्य जगत्पतिम् ।
रक्षां विधास्यन्भूतानां विष्णुत्वमुपजग्मिवान् ॥'

श्रीमद्रामायणस्योत्तरकाण्डस्था ब्रह्मणः सर्वेश्वरश्रीरामंप्रतिनिवेदिताः श्लोकाः सावधानेन विशेषतत्त्वार्थिभिः ।

ननु तथापि तस्येच्छोत्पादनायासः स्यादेवेतिचेत् संकल्पमात्रेण संपादना देतस्य सर्वथाऽयासरहितत्वात् । यद्यपीश्वरः सर्गादिकं करोति तत्र प्रयत्नरूपका यिकव्यापारं न कदापि करोति अयत्नरूपमानसव्यापारात्मकसंकल्पेन निस्पा दयति अतोऽस्य जगत्सर्जनादिव्यापारोऽयत्नसिद्ध एव । अर्थात् सङ्कल्पस्य कार

णत्वकथनेन कायिकवाचिकव्यापाररहित्यं दर्शितम् । अनुदराकन्येतिवक्लेश-तोप्यायासो न भवति ।

'सोऽकामयत बहुस्यां प्रजायेय' तथा-

'मनसैव जगत्सर्गं संहारञ्च करोति यः'

तस्यारिपक्षक्षपणे कियानुद्यम विस्तरः'

'विकारञ्च रामो दयाब्धिस्तथात्वे दयाशून्यतां पक्षपातञ्च नैति ।

प्रकारे विकारस्तथा चित्रसृष्टौ च हेतुर्यतः प्रणिनां प्राच्य कर्म ॥'

इत्यादिश्रुतिस्मृत्या परमेश्वरस्य जगत्सर्जने आयासराहित्यं दर्शितं भव-तीतिसारः ।

अथैवमपि विचित्रानेकजगत्सर्गादिकं कुर्वत ईश्वरस्य तेन किञ्चित्प्रयोजनं विद्यते नवा ? आद्ये सकलकामावाप्तस्य तदसम्भवात्संभवे वा अस्मदादिवदनीश्वरत्वप्रसङ्गात् श्रूयते हि सकलकामावाप्त इति । यदि प्रयोजनं नास्तीति पक्षस्तदा निष्फले कर्मणि प्रवृत्तेरसम्भावात्, 'न कुर्यान्निष्फलं कर्म नात्यायामसुखोदय-मित्यादिस्मृस्या निष्फलकर्मकरणस्य निषेधात् । 'प्रयोजनमनुद्दिस्य मन्दोऽपि न प्रवर्तते' इतिन्यायाच्चेति, चेदत्रोच्यते, अवाप्तसकलकामस्य लीलामात्रस्यैव प्रयोजनसद्धावात्, राजबालवत्, यथा कश्चिद् राजा सर्वर्द्धिसंपन्नोपि प्रयोजनविशेषमनभिसन्धायैव द्यूतादिके कर्मणि मनोरंञ्जनाय प्रवर्तते, यथा वा बालः प्रयोजनान्तरमनभिसन्धायैव बालुकादिगृहं निर्माय वयस्यैः सहक्रीडति, तथैव परमेश्वरस्यावाप्तसकलकामत्वेन प्रयोजनान्तराभावेपि जगत्सर्गादिकं कृत्वा भृत्यैःसह क्रीडति । एतत्तत्वं 'लोकवत्तुलीलाकैवल्यमितिसूत्रे विशेषतो निर्णीतवन्तोऽस्मदाचार्या जगद्गुरुश्रीरामानन्दाचार्यश्रीरामप्रपन्नाचार्याः श्रीआनन्दभाष्यव्याख्यानावसर इतिततोऽनुसन्धेयम् । 'क्रीडतोबालकस्येव चेष्टास्तस्य निशायेत्यभिधाय ।' प्रस्फुटितमिदं तत्त्वं महर्षिश्रीपराशरेण । 'अप्रमेयोऽनियोज्यश्च यत्रकामगमोवशी । मोदते भगवान् भूतैर्बालः क्रीडनकैरिव' इति च भगवान् व्यासः । तस्मादीश्वरस्य जगद्व्यापारं कुर्वतः प्रयोजनं लीलैव नान्यत्तदतिरिक्तम् ।

न च जगत् सर्गादिव्यापाराणां लीलामात्रप्रयोजनकत्वे प्रलयकाले लीलाया अवसानं स्यादितिवाच्यम् ? संहारस्यापि लीलारूपत्वादेवादोषात् ।



यथा कश्चिद्बालको लीलाकरणायबालुकादिगृहं निर्माय क्रीडति क्रीडयति च वयस्यान्तरमपि, तादृशगृहोद्यानादिनिर्माणं लीलाभवति यथा तादृशक्रीडार्थ निर्मितबालुकागृहादीनां विनाशो लीलैव भवति बालानां तथैवेश्वरस्य सर्गसंहारोऽपि लीलैवेति ।

अथ 'यतोवा इमानि भूतानि जायन्ते येन जातानि जीवन्ति' इत्यादि श्रुत्या परमेश्वरस्य जगदात्मककार्यं प्रति कारणत्वं कथितम् । तत्र कारणत्वं त्रिविधमुपादानं निमित्तं सहकारि च यथा घटादिकार्ये जनयितव्ये मृद्द्रव्यं कार्यसजातीयमुपादानं भवति कुलालादिकं चेतनः निमित्तमर्थात् कर्तृकारणं भवति, तत्र स्वेतरसकलकारकाप्रयोज्यत्वे सति स्वेतरसकलकारकप्रयोजकत्वरूपमेव कर्तृत्वमितिकर्तृलक्षणात् अथवोपादानविषयकापरोक्षज्ञानचिकीर्षादिमत्वमेव कर्तृत्वम् तादृशं निमित्तान्तर्गतकर्तृत्वं घटादिकंप्रति कुलालतन्तुवायादीनाम् । दण्डवेमादिकमेतस्य सहकारिकारणं भवति तद्वत्प्रकृते घटादिकंप्रति कुलालस्येव निमित्तत्वं भवति परमेश्वरस्य अथवा कारणान्तरत्वमपि भवतीतिचेत् ? अत्रोच्यते, परमेश्वरः स्वयमेव जगदाकारेण परिणमनात् कर्तृवदुपादनकारणमपि भवति अर्थात् लौकिकघटादिकार्ये मृद्द्रव्यमुपादानम् कुलालः कर्त्ता दण्डादिकं सहकारि च भवति प्रकृते तु मृद्द्रव्यवत् परमेश्वर एवोपादानम् जगदाकारेण परिणतत्वात् ।

न चान्यत्र उपादानकारणात् व्यतिरिक्तं निमित्तकर्ता भवति तद्व्यतिरिक्तं च सहकारी निमित्तं भवति तथैवात्र प्रकृतेप्रि भाव्यं कार्यकारणभावस्य सर्वत्र समानत्वात् तत्कथमत्र परमेश्वर एव त्रितयं भवति, अन्यत्र सिद्धकार्यकारणभावस्य विलोपयितुमशक्यत्वात् । अर्थात् यदीश्वरः कर्त्ता तदोपादानं न स्यात्, तदुपादानं स्यात् तदा कर्त्ता नस्यात्, सहकारिकारणमपि न स्यात् त्रयाणामपि काणानां परस्परभेददर्शनादितिवाच्यं भावानभिज्ञत्वात् । अयंभावः लोके लोकसिद्धकार्यकारणभावो भवतु नाम ? परन्तुशास्त्रसिद्धकार्यकारणभावे तु शास्त्रमेव प्रमाणं नतु लौकिकं कारणं कारणं भवति, किन्तु ततो विलक्षणमेव कारणं कारणं भवति । इह च शास्त्रप्रमाणं परमेश्वरश्रीरामस्यैव त्रिवीधकारणत्वं दर्शयति ततो न कस्यापि विरोधस्यावकाशो भवति । तथा च-लोके

उपादाननिमित्तसहकारिणां लोकसिद्धत्वात्परस्परं भेदो भवतु, अर्थात् यदुपादानं तदन्य निमित्तं ततोपिभिन्नं सहकारि प्रकृते तु त्रिविधमपिकारणं सर्वशरीरी सर्व शक्तिको भगवान् श्रीसीतानाथ एव भवति । लोके सामान्यतः कार्योत्पत्तौ निमित्तोपादानसहकारिरूपेण त्रिप्रकारकं भवति । तत्र कर्तृव्यतिरिक्तं निमित्तमुपादानं च कार्यरूपेणपरिणामयिता कर्त्ता भवति, कार्यरूपेण परिणामयोग्य द्रव्यंमुपादानं भवति तथा कार्योत्पत्तौ यदुपकरणं तत्सहकारिकारणम् । तत्र घटपटादीनां कर्त्तृकारणं कुलालादयः, मृदादिकमुपादानं दण्डवेमादयस्सहकारिकारणं भवति । प्रकृते तु स्थावरजङ्गमात्मककार्योत्पत्तौ परमेश्वर एव त्रिप्रकारकमपि कारणं भवति तथाहि-'एकोहं बहुस्यां प्रजायेय' इत्यादिश्रुतिसिद्धविलक्षणसङ्कल्पविशिष्टो भगवान् 'सर्वेषामवताराणामवतारी रघूत्तमः' 'परान्नारायणाच्चैव कृष्णात्परतरादपि । यो वै परतमः श्रीमान् रामो दाशरथिः स्वराट्' इत्याद्यागमप्रतिपादितः सर्वशरीरी सर्वेश्वरश्रीरामः कर्तारूपो निमित्तकारणं भवति, सङ्कल्पविशिष्टत्वेन कर्तृत्वात्, 'तर्ह्येदमव्याकृतमासीत्' इत्यादिश्रुतिसिद्धनामरूपविभागानर्हतयास्वविशेषणीभूतसूक्ष्मचिदचिद्विशिष्टः सन् स भगवान् श्रीराम एव जगदुपादानकारणं भवति तथा 'परास्यशक्तिर्विविधैव श्रूयते स्वाभाविकीज्ञानबलक्रिया च' इत्यादिश्रुतिशतबोधितज्ञानशक्त्यादिविशिष्टो भगवान् श्रीसीताभिन्नस्वरूपः श्रीदाशरथिः स्थावरजङ्गमात्मकजगतः सहकारिकारणं चापि भवतीत्येवं क्रमेणैक एव भगवान् जगतः त्रिविधं कारणं भवति तदेतच्छास्त्रानुकूलमितिभावय ।

ननु तथापि निमित्तोपादानत्वमेकस्यैव भवतीति न लोकसिद्धं नवा तादृशीकाचनश्रुतिरप्युपलभ्यते यद्बलेन तथात्वं स्वीकुर्मः ? इत्थं सन्दिहानं श्रुतिस्मृतिप्रदर्शनेन परितोषयामि 'सदेवसोम्येदमग्रे आसीदेकमेवाद्वितीयम्' तदात्मानं स्वयमकुरुत सच्च त्यच्चाभवदित्यादि-

'स्त्रष्टा सृजति चात्मानं विष्णुः पाल्यं च पाति च ।
उपसंह्रियते चोपसंहर्ता च स्वयं हरिः ॥
'स एव सृज्यः स च सर्गकर्त्ता स एव पात्यत्ति च पाल्यते च ।
ब्रह्माद्यवस्थाभिरशेषमूर्तिर्विष्णुर्वरिष्ठोवरदोवरेण्यः ॥'



इत्यादिश्रुतिस्मृतिप्रभृतिभिः प्रमाणैर्निमित्तकारणोपादानकारणयोरेकत्वं स्पष्टमेव प्रतिपादितम् । ततश्च कथमैकस्यैव निमित्तत्वमुपादानत्वं चेति प्रश्नोऽश्मक्षिप्तलोष्टवद्विशीर्यत एवेति भावः ।

अथैवमपि यदि परमेश्वरः स्वयमेव परिणमते, तदापरिणामिनो देहगेहादेर्विकारित्वदर्शनेन भगवतोऽपि विकारिता स्यात्, न चेष्टापत्तिः ? तदा 'निर्गुणं निरञ्जनं' 'निष्कलंनिष्क्रियं शान्तं निरवध्यं निरञ्जनम्' 'अस्थूलमनण्वह्रस्वं 'सत्यं ज्ञानमानन्दं ब्रह्म' इत्यादिश्रुतिविरोधप्रसङ्गात् । अर्थाज्जगद्रूपेण परिणमनाद् ब्रह्मणो विकारित्वानित्यत्वेस्याताम् तदा नित्यत्वविशुद्धत्वादिप्रतिपादकश्रुतिविरोधः प्रसज्येतेति चेत् सत्यम् । ब्रह्मजगत्रूपेणपरिणमते तदानैतस्य स्वरूपेण परिणामः । अतः तत्स्वरूपेण न विकारादिदोषो भवति । किन्तु चिदचिद्रूपविशेषणविशिष्टस्वरूपस्य जगद्रूपेण परिणामो भवतीति विशेष्यस्य भगवत्स्वरूपस्य विकाराभावेन निर्विकारत्वप्रतिपादकश्रुत्यादेर्विरोधोनैव भवति । तदाहुः श्रौतप्रमेयचन्द्रिकायां चगद्गुरुश्रीश्रियानन्दाचार्याः-'रामस्य परिणामो हि चिदचिद्द्वारको जगत्' इति । तथैव जगद्गुरुश्रीद्वारानन्दाचार्या अपि परिणामविमर्शे

ब्रह्मणस्तु विकारो यन्न स्वरूप स्वभावयोः ।
व्याकोपावसरः कश्चिच्छ्रुतीनां वर्तते ननत्' 'इति च ।

अर्थात् न शुद्धस्य भगवतो जगत्प्रतिपरिणामित्वं किन्तु जडचेतनविशेषणविशिष्टस्यैवेति विशेषणांशे एव परिणामो विकारित्वं वा भवति नतु विशेष्यांशे परिणामो विकारित्वंवेति । न च यदि स्वरूपस्य विकाराभावे स्वशरीरभूतविशेषणद्वारा कार्यमात्रस्यायं परमेश्वरः कथमुपादानं भवतीति वाच्यम्, लूताकीटवदिति गृहाण । यथाल्पशक्तिकस्य लूताकीटस्यायं भावो यत् स्वरूपे विकाराभावेऽपि स्वकीयशरीररूपविशेषणद्वारेण तन्तुजालरूपकार्यं प्रति उपादानकारणं भवतीति तस्य स्वभावस्तथैव सर्वशक्तिरीश्वरोऽपि स्वविशेषणद्वारा जगत्कार्यंप्रति उपादानकारणं भवतीति स्वस्वभावः । यदा त्वत्यल्पशक्तिकस्य कीटस्यैतादृशः स्वभावस्तदा 'परास्यशक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेत्यादिश्रुतिप्रतिपादितसर्वशक्तिमतो भगवत एतादृशस्वभावस्वीकारे किं तव छीन्नम् ? । तदुक्तं-

'यथोर्णमाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सभवन्ति ।
तथाऽक्षराद्विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति' ।
ऊर्णनाभिर्यथा सृष्ट्वा स्वयं तद्ग्रसते पुनः ।
तथासृष्ट्वेदमखिलं स्वयं तद् ग्रसते हरिः' इत्यादि ।

अर्थात् यथा लूताकीटस्वशरीरद्वारा सहायकान्तनिरपेक्ष एव तन्तूनुत्पादयति तत्र शरीरद्वारेणोपादानं भवति तत्र जीवकीटशरीरं तूलाजीवस्य शरीरतयोपादानं भवति तादृशकटिश्च स्वप्रधानतया कर्तृकारणात्मकनिमित्तं भवति तत्र स्वेतरसहायकान्तरस्यापेक्षा न भवति किन्तु स्वेच्छयैतत्तन्तूनुत्पादयति स्वेच्छयैवान्तः काले स्वस्मिन्नेव संहरति-तथैव परमेश्वरः सर्गकाले सूक्ष्मचिदचित् शरीरकः स्वशरीरचिदचिदपेक्षयोपादानं भवति तथा स्वापेक्षया अर्थात् स्वस्वरूपापेक्षया निमित्तं भवति । ततश्च सूक्ष्मचिदचिद्रूपस्येश्वरशरीरस्यैव परिणामो भवति, नतु भगवत्स्वरूपस्य परिणामो जायते येन भगवति परिणममानत्वेन विकारित्वं स्यात् । परिणममानत्वं तथा परिणममानत्वाद्विकारित्वदोषो भगवति नापततीत्यर्थः । 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरंजनम्' 'सत्यं ज्ञानमानन्दं ब्रह्म' इत्यादिश्रुतयो भगवत्स्वरूपस्य निर्विकारत्वं प्रतिपादयन्ति न तु भगवत् शरीररूपविशेषणभूतयोश्चिदचितोः परिणामित्वविकारित्वयोस्तत्रैव श्रुतत्वात् लुताकीटशरीरवदिति भावः ।

अथैवमपि, 'अजामेकं लोहितशुक्लकृष्णाम्' 'गौरनाद्यन्तवती' त्रिगुणं तज्जगद्योनिरनादिप्रभवाप्ययम्, 'प्रकृतिं पुरुषञ्चैव विद्ध्यनादी उभावपि' 'अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः 'ज्ञाज्ञौ द्वावजावीशानीशौ' 'अजोनित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीर' इत्यादि श्रुतिस्मृतिभ्यां परमेश्वरशरीरभूतयोः सूक्ष्मचिदचितोर्नित्यत्वस्य प्रतिपादनेन तत्परिणामद्वारा जगद्सर्गं करोति भगवान् इति कथं युज्यते अर्थात् नित्ययोः सूक्ष्मचिदचितोरीश्वरेण क्रियमाणः सर्गःकीदृशः अर्थात् नित्ययोरुत्पादनं कथमपि न भवतीति प्रश्नः ।

तत्रोच्यते नहि जडपदार्थमीश्वर उत्पादयति येन नित्यस्य कथं सर्ग इति शंकास्यात् किन्तु परमेश्वरस्य सृष्टिर्जडपदार्थस्य परिणामकरणमेव । यथा



दुग्धावस्थायामपरिदृश्यमानमपिदधि कारणव्यापारेण दध्यात्मना परिणतं भवति दुग्धावस्थां परित्यज्य न तु तत्र दुग्धस्य विनाशो दध्नश्चोत्पादः किन्तु दध्नोऽभिव्यक्तिमात्रं भवति । तथैव प्रकृतेऽचित्पदार्थस्य परिणामकरणमेवेश्वरस्य सृष्टिरिति कथ्यते । अर्थात् सूक्ष्मतयाऽवस्थितमेवाचित्सूक्ष्मं वस्तु स्थूलरूपेणाभिव्यक्तं भवति, येन नित्यस्योत्पादविरोधः स्यात् । तथा चेतनानां शरीरेन्द्रियप्रदानज्ञानशक्तिविकाशकरणं चेश्वरस्यचेतनसृष्टिः । नहि भगवान् कमप्युत्पादयति विनाशयति वा किन्तु तिलेऽवस्थितस्य तैलस्य कारणव्यापारेणाविर्भावयति कर्ता तदा तैलमुत्पद्यते इति कथ्यते पुनश्चविनाशकाले कारणमाविशत् कार्यतिरोभूयते इति विनस्यतीति व्यवहार स्तथैव प्रकृतेऽपि आविर्भावमात्रं सर्गस्तिरोभावमात्रं प्रतिसर्ग इतिसारः ।

अर्थात् जगदुत्पत्तेः पूर्वं प्रलयकाले सृज्यमानजगत् कारणतयाऽभिमतपरमेश्वरेण जडचेतनात्मकजगतः सर्गः । तत्र सर्गो नाम 'तमः परे देवे एकीभवति' इतिकथितप्रकारेण स्वस्मादविभक्ततयास्थितस्य तमःपदप्रतिपादितस्यास्य

ततः स्वयंभूर्भगवान् अव्यक्तोव्यञ्जयन्निदम् ।
महाभूतादिवृत्तौजाः प्रादुरासीत्तमोनुदः ॥'

इति कथितप्रकारेण स्वकीयप्रेरणयाऽस्य जगतः स्वस्माद्विभज्य विभक्तस्य व्यक्तपदप्रतिपाद्य समष्टिव्यष्टिरूपसमस्तकार्यरूपेण परिणमनमेव जगतः सर्गो नाम न तु जगत उत्पादनम् । तथा तत्तुल्यस्यान्धेतसि मज्जमानस्य शरीरेन्द्रियरहितस्य भोगमोक्षवार्तानभिज्ञस्य जीवराशेः प्रलयस्त्रोतसि समुह्यमानस्य भोगाधिष्ठानं देवमनुष्यादिशरीरं भोगसाधनानीद्रियाणि च प्रदाय पूर्वज्ञानसंकुचिततया ज्ञानविकाशं च करोति परमेश्वरः । अयमेव जगत्सर्गोनाम प्रागनवस्थितस्य वस्तुन उत्पादः । नत्वसत उत्पादनं सतो वा विनाशः । तदुक्त-

'नासतो विद्यते भावो ना भावो विद्यते सतः' इतिगीतायां श्रीकृष्णेन तथैवाहुराचार्या गीतार्थचन्द्रिकायम्-

'असतो देहादेर्भावः सद्भावो नैव विद्यते
सत आत्मनश्चाभावोऽसद्भावो न विद्यते ।'

नात्र तन्त्रे आरम्भवादोऽभिममो येनापूर्वस्योत्पादः क्रियेत समर्थितंश्च

स्यात् । किन्तु वेदान्ते सर्वत्र श्रुत्यनुसारेणोपवृंहकपुराणानुसारेण च परिणामवाद स्यैवाद्दतत्वादितिसर्गः क्रमः ।

तदेवं नित्ययोरपि जडचेतनपदार्थयोः परमेश्वरादाविर्भावः प्रदर्शितः । तदनुतत्सृष्ट्वातदेवानुप्राविशदित्यादिश्रुत्यनुसारेण सर्जितसर्वपदार्थेषु अनुकूलतया तदन्तः प्रविश्य सर्वस्य रक्षणकरणमेवस्थितिकरणं पालनं केदारानुप्रविष्टजलवत् । यथा संरोपितकेदारीयधान्यादिषु जलसमुदायोऽनुकूलतयाकेदारान्तर्गत-सस्यानां संरक्षणं करोति पालयति तद्वद् भगवान् स्वसृष्टपदार्थेष्वन्तरनुकूलतया प्रवेशं कृत्वा सस्यादिराशीन्पालयति ।

तथैव संहारकाले समुपस्थिते यथोन्मार्गगामिनं पुत्रं शिष्यं वा बलाद्बध्वा यथाकालमवस्थापयति तथैव लौकिकविषयेष्वासक्तिविशेषं दृष्ट्वा विषयान्तरे संसक्तानीन्द्रियाणि संहृत्य संस्थापनमेव संहारोनामेति ।

जगत एतदुत्पत्तिस्थित्यादिकं त्रयमपि एकैकं चतुर्धाविभिद्यते ।

'चतुर्विभागः संसृष्टौ चतुर्धा संस्थितः स्थितौ ।
प्रलयं च करोत्यन्ते चतुर्भेदो रमापतिः' ॥ इत्युक्तेः ।

ततः सर्गकाले परमेश्वरः चतुर्दशभुवनसर्जकहिरण्यगर्भलक्षणस्तथाहिरण्यगर्भसृष्टानां नियमतः सर्गकर्तृणां दशानां दक्षादिप्रजापतीनां तथा सर्गानुकूलकालस्य तथा परस्परमुत्पादकानां सर्वप्राणिनां च सर्वजगतोऽन्तर्यामीभूत्वा सर्जकरजोगुणविशिष्टः सन् सर्जयति । तदेवं सर्गे चत्वारो विधा भवन्ति। तदुक्तं-

'एकेनांशेन ब्रह्मासौ भवत्यव्यक्तमूर्तिमान् ।
मरीचिमिश्राः पतयः प्रजानामन्यभागतः ॥'
'कालस्तृतीयस्तस्यांशः सर्वभूतानि चापरः ।
इत्थं चतुर्धा संसृष्टौ वर्तते स रजोगुणः ॥ इति ॥

तथास्तिकाले सम्प्राप्ते 'मध्ये विरंचिगिरिशः प्रथमावतार' इत्यादिप्रकारेण स श्रीसीतानाथो विष्णुप्रभृतिकाननेकावतारं कृत्वा 'सर्वेषामवताराणामवतारी रघूत्तमः' इत्यागमोक्तेः । ततो मनुपराशरव्यासादिद्वारेणानेकशस्त्रं शास्त्रञ्च कृत्वा, उन्मार्गगामिनामपि सन्मार्गं प्रदर्श्य रक्षणानुकूलस्य कालविशेषस्य सर्वस्यान्तरात्मतयाऽवस्थितः ज्ञानप्रकाशादिकारणीभूतसत्त्वगुणसमाविष्टः सर्वं पालयति । तदुक्तम्-



एकांशेनास्थितो विष्णुः करोति परिपालनम् ।
मन्वादिरूपीचान्येन कालरूपोऽपरेण च ॥
सर्वभूतेषु चान्येन संस्थितः कुरुते स्थितिम् ।
सत्त्वं गुणं समाश्रित्य जगतः पुरुषोत्तमः ॥ इति ।

तथा संहारे जगतः प्रवृत्ते स संहारकर्तृषु सर्वप्रधानस्य रुद्रस्य तथाऽवान्तरसंहारकर्तृणामग्निकृतान्तकादीनां तथा संहारोपयुक्तस्य समाधेयस्य समयापरनामककालस्य तथा परस्परविनाशकानां सर्वजन्तूनां चान्तर्यामीभूत्वा तमोगुणेनातिक्रमेण सर्वान् संहरति । यत्रोक्तं-

'यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः ।
मृत्युर्यस्योपसेचनं क इत्थावेद यत्र सः ॥ इतिकाठके
आश्रित्यतमसो वृत्तिमन्तकाले तथा प्रभुः ।
रुद्रस्वरूपो भगवानेकांशेन भवत्यजः ॥
अग्न्यन्तकादिरूपेण भागेनान्येन वर्तते ।
कालः स्वरूपोभागोऽन्यः सर्वभूतानि चापरः ॥ इति ।

एवमन्यत्रापि भगवतः स्थित्यादिकारणत्वरूपमाहात्म्यं वर्णितं श्रीपराशरमहर्षिणा-

'ब्रह्मादक्षादयः कालस्तथैवाखिलजन्तवः ।
विभूतयो हरेरेता जगतः सृष्टिहेतवः ॥'
'विष्णुर्मन्वादयः कालः सर्वभूतानि च द्विज ?
स्थितेर्निमित्तभूतस्य विष्णोरेता विभूतयः ॥
रुद्रकालोऽन्तकाद्याश्च समस्ताश्चैव जन्तवः ।
चतुर्धाप्रलये ह्येता जनार्दनविभूतयः ॥ इत्यादि ।

ननु भगवान् जगतः सर्गादिकं लीलायैव करोति सहायकान्तरनिरपेक्ष एवेति एतावता प्रकरणेन परमेश्वरतत्त्वानुकूलं विचारितम् । तत्र यदीश्वरः स्वयमेव करोति तदा कथं कमपि सुखिनं करोति कमपि दुःखिनं कुर्वन् वैषम्य नैर्घृण्यदोषयुक्तो भवेत् मनुष्यादिवत् न च कारणान्तरप्रयोज्यं प्राणिनां सुखादि

सर्वत्र सर्वदा यस्तु जीवांस्त्यक्तुं न च क्षमः ॥३२८॥

'अन्तर्यामि' सविज्ञेयो जीवदोषैरदूषितः ।

देशकालादिनियमै रहितः स महाप्रभुः ॥३२९॥

धातुपाषाणकाष्ठादिकृतविग्रहमाश्रितः ।

श्रीरामः स परं ब्रह्म जानक्या सहितः प्रभुः ॥३३०॥

'अर्चावतारो' विज्ञेयः कृपाशीलो गुणाम्बुधिः ।

एवं पञ्चप्रकारेण ह्येकोऽपि स महाप्रभुः ॥३३१॥

विभक्तो भगवान् रामः सर्वलोकैकरक्षकः ।

सेवितः परया भक्त्या सन्तुष्टः स हरिस्तदा ॥३३२॥

स्वाश्रितेभ्यश्च दासेभ्यः सायुज्यं सम्प्रयच्छति ।

श्रीवाल्मीकिसंहितायामेवं रामोहि पञ्चधा ॥३३३॥ इति ।

एतत्पञ्चप्रकारेषु परत्वं नाम, 'न कालस्तत्र वै प्रभुः' 'कलामुहूर्तादिमयश्च कालो न यद्विभूतेः परिणामहेतुः' इत्यादिवचनप्रतिपादितकालपरिच्छेदरहित निरवधिकानन्दयुक्तश्रीसाकेताख्ये वैकुण्ठलोके 'यत्र पूर्वे साध्याः सन्तिदेवाः' 'यत्रर्षयः प्रथमजा ये पुराणाः' इत्यादिवचनप्रतिपादितप्रकारेण नित्यासंकुचित-ज्ञानानां श्रीहनुमदादीनाम्-

'सूर्यकोटिप्रतीकाशाः पूर्णेन्दुयुतसंनिभाः ।

'यस्मिन् पदेविराजन्ते मुक्ताः संसारबन्धनैः ॥

'इत्यादिवचनप्रमाणेन संसाररहितानां संकोचविरहितविज्ञानवतां मुक्तानां च ज्ञानविषयतयाऽवस्थानम् । तदुक्तम्-

'वैकुण्ठे तु परेलोके नित्यत्वेन व्यवस्थिताः ।

पश्यन्ति च सदादेवं नेत्रैर्ज्ञानेन चामराः ॥ इति ।

तदाहुर्जगद्गुरवः श्रीअनुभवानन्दाचार्याः-तत्र परोनामनित्यधाम्नि श्रीसाकेते जगज्जनन्या श्रीसीताम्बया सहदिव्यसिंहासनोपरि विराजमानो दिव्यायुधालङ्कारविशिष्टविग्रहशाली नित्यं नित्यमुक्तपरिसेवमानः सर्वावतारीपरिपूर्णब्रह्म



भगवान् श्रीरामः ।' (श्रौतार्थसंग्रहः)

द्वितीयो व्यूहोनामसंसारस्योत्पत्तिस्थितिविनाशाय संसारिणांपरिपालनाय भक्तानुग्रहाय च संकर्षणप्रद्युम्नानिरुद्धरूपेणावस्थानम् । तदुक्तम्-

'चतुर्विधः सभगवान् मुमुक्षुणां हिताय वै ।

अन्येषामपिलोकाय सृष्टिस्थित्यन्तसिद्धये ॥

आनन्त्यात्तवसेनाने व्यूह आद्योमयेरितः ।

अनादिकर्मवश्यानां संसारेयततामधः ॥'

इत्यादिशास्त्रे प्रपञ्चितं तत्रैवाधिकं द्रष्टव्यम् ।

तत्र सङ्कर्षणो हि ज्ञानबलयुक्तोऽधिष्ठितजीवस्तत्त्वः जीवं प्रकृतेः पृथक् कृत्य प्रद्युम्नावस्थां प्राप्य शास्त्रं प्रवर्तयति करोति च संसारस्य संहारम् । तत्रोक्तं 'तत्रज्ञानबलद्वन्द्वाद्रूपं सङ्कर्षणं हरेरिति । भगवानच्युतोपीत्थं षड्गुणेन समेधितः । बलज्ञानगुणौ तस्य स्फुटौ कार्यवशान्मुने' ॥ अथ प्रद्युम्नस्तु ऐश्वर्यवीर्येणयुक्तो मनसोऽधिष्ठापकः धर्मोपदेशकः मनुचतुष्टयप्रभृतिकशुद्धवर्गसर्जकश्चेति । तदुक्तं-'ऐश्वर्यवीर्यसंभेदाद्रूपं प्रद्युम्नमुच्यते' इति । तथा-'षूर्णषड्गुणएवायमच्युतोऽपि महामुने । गुणावैश्वर्यवीर्याख्यौ स्फुटौ तस्य विशेषः ॥' इति ।

अनिरुद्धस्तु सर्वदाशक्तितेजोभ्यां समन्तितो लोकरक्षायास्तत्वज्ञानप्रदानस्य कालसृष्टेः मिश्रितसर्गस्य च जनको भवतीति । तदुक्तं-'शक्तितेजः समुत्कर्षादनिरुद्धतनुर्हरिः' इति । तथा-'पुरुषोपि महाध्यक्षः पूर्णषाड्गुण्य उच्यते । शक्ति तेजो गुणौ तस्य स्फुटौ कार्यवशान्मुने ॥' तथा-'शक्त्याजगदिदं सर्वमनन्ताण्डं निरन्तरम् । विभर्ति घाति च हरिर्मणिसानुरिवाण्डकम् ॥'

'तेजसा निखिलं तत्वं ज्ञापयदात्मनो हरिः' इत्यादिवचनेन समस्तस्यापि स्थावरजङ्गमसंसारस्य परिपालनतयोज्जीवनकारणतत्वप्रदानमपि करोत्य-निरुद्धः । एवं 'त्रुट्यादिद्विपरार्द्धान्तं कालसर्गमथाकरोदिति वचनेन लवादिकालादारभ्य द्विपरार्द्धकालपर्यन्तकालस्य सर्गमपि करोति भगवाननिरुद्धः ।

तत्र विभवो द्विप्रकारको भवति गौणोमुख्यश्चेति । तदुक्तं-'विभवोपि

तथाऽनन्तो द्विधैव परिकीर्त्यते । गौणमुख्यविभागेन शास्त्रेषु च हरेर्मुने ? प्रादुर्भावो द्विधा प्रोक्तो गौणमुख्यविभेदतः ।' इत्यादिस्थले कथितप्रकारेणानन्तो विभवोऽसंख्येय एव । संक्षेपतो गौणमुख्यभेदेन द्विप्रकारकः प्रातिस्विकरूपेणानन्तः । तत्र विभवत्वं नाम स्वेतरसजातीयतयाऽविर्भावः । स च गौणमुख्यभेदेन द्विप्रकारक एव तत्र गौण आवेशावतारः मुख्यः साक्षादवतारः । पुनरपि आवेशावतारो द्विप्रकारकः स्वरूपावेशः शक्त्यावेशश्चेति । तत्र स्वरूपावेशः स्वकीयरूपेण सहैवावेशः यथा परशुरामादीनां सचेतनानां देहेषु स्वकीयविग्रहेणैवावेशः शक्त्यावेशस्तु कार्यकरणकाले ब्रह्माशिवादिचेतनशरीरमध्ये शक्तिमात्रेण स्फुरणमिति ।

अत्र गौणविभवस्य मुख्यविभवस्य च समत्वं विषमत्वं भवति, मनुष्यत्वादिवत् गौणत्वमपि तदीयेच्छयैव भवति न तु स्वरूपेण तदुक्तं-

'मदीच्छया हि गौणत्वं मनुष्यत्वमिवेच्छया ।
शूकरत्वं च मत्स्यत्वं नारसिंहत्वमेव च ॥'
'यथा वा दण्डकारण्ये कुब्जाम्रत्वं ममेच्छया ।
यथा वाजिमुखत्वञ्च मम सङ्कल्पतोऽभवत् ।
सेनापते ममेच्छातो गौणत्वं न च कर्मणा ।'

इत्यादिवचनानुसारेण मनुष्यत्वं यथा श्रीवामनकृष्णादिषु मत्स्यावतारादौ तिर्यक्त्वं वृक्षादौ स्थावरत्वम् । एतत्सर्वं यथेश्वरेच्छया जातम् । तथा आवेशरूपं गौणत्वं ममेच्छयैव जातम् । इत्यादिकं बहुतरं सिद्धान्तमन्विष्यैव ज्ञातव्यम् ।

मुख्यप्रादुर्भावस्तु अप्राकृतविग्रहोऽपरित्यक्तस्वभावविभवः प्रदीपात्प्रदीपान्तरवदभिव्यज्यवर्तमानोऽप्राकृतशरीरः । यथोक्तम्-

'प्रादुर्भावास्तुमुख्या ये मदंशत्वाद्विशेषतः ।
अजहत्स्वभावा विभवा दिव्या प्राकृतविग्रहाः ॥
पाद्दीपा इवोत्पन्ना जगतो रक्षणाय ते ।
अर्च्या एव हि सेनेश संसृत्युत्तरणाय ते ॥'



'मुख्या उपास्या सेनेश ? अनर्च्यानितरान् विदुः ॥'

इत्यादिना मुख्यावदस्यैव मुमुक्षूपास्यत्वं शास्त्रे प्रतिपादितम् । गौणप्रादुर्भावास्तु ब्रह्माशिवाग्निव्यासप्रभृतिकाः सन्ति ते सर्वेऽहङ्कारयुक्तजीवाधिष्ठातृत्वान् मुमुक्षुभिरनुपास्या एवेति यदुक्तम्-

अनर्च्यानपिवक्ष्यामि प्रादुर्भावान् यथा क्रमम् ।
चतुर्मुखस्तु भगवान् सृष्टिकार्ये नियोजितः ॥' इत्यारभ्य-
अनर्च्याः सर्व एवैते विरुद्धत्वान्महामते ।
अहंकृतियुताश्चे मे जीवा मिश्रा व्यधिष्ठिताः ॥'

इत्यन्तप्रकरणेन ब्रह्मादीनामनर्च्यत्वं कथितम् । एवं गुणस्वरूपाभ्यां संक्षेपत ईश्वरनिरूपणं कृतम् तदवतारोपदिशितः, भगवतोस्त्रविवेचनन्तु जगद्गुरुश्रीरामभद्राचार्यप्रणीतश्रीरामबाणस्तवश्रीरामचापस्तवप्रभृतितः एवं वस्त्रादिनिरूपणञ्च साम्प्रदायिकान्यग्रन्थेभ्यो ज्ञातव्यम् ।

तत्र यथा लोकमनुष्यादिनां जन्मकर्मनिमित्तकं भवति तथा भगवतो न कर्ममूलकोऽपितु भगवदिच्छैव नान्यदिति । अर्थात्-'अजायमानो बहुधाविजायते' बहुनि मे व्यतीतानि जन्मानि तवाचार्युन' इत्यादिना प्रतिपादितावताराणां भगवदिच्छैय 'इच्छागृहीताभिमतोरूदेहः' इत्यादिवचनप्रामाण्यात् । तथा अवतारप्रयोजनञ्च स्वाश्रितपरित्राणादिकमेव । तथोक्तं-

'परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥' इति ।

तदेवमतिसंक्षेपतस्तत्त्वत्रयान्तर्गततत्त्वशेखरेश्वरतत्त्वस्य निर्वचनमिति-दिक् ॥९॥

卐 इति प्रभाटीकायामीश्वरनिरूपणम् 卐

❋ प्रथमपरिच्छेदश्चसमाप्तः ❋

॥ श्रीरामः शरणं मम ॥

卐 ॥ 卐

पूर्वोक्त षष्ठ तथा सप्तम श्लोकरूप दो श्लोकों से तत्त्वत्रय के अन्तर्गत चित् स्थूल-सूक्ष्म साधारण चेतनवर्ग अर्थात् बद्ध-मुक्त तथा नित्य सूरि साधारण जीववर्ग का तथा अचित् जड़तत्त्व प्रकृति महदहङ्कारादिक स्थूलसूक्ष्म का यथावत् प्रतिपादन करके श्रुतिस्मृति पुराण तथा इतिहास से प्रतिपाद्य सारभूत त्रिरूपात्मक अर्थात् चिदचिद्विशिष्ट तत्त्वशेखर सर्वान्तर्यामी सर्वज्ञ सर्वजगत् कारण सर्वशेषी भगवान् श्रीसीतापति के स्वरूप तथा गुण के निर्वचन द्वारा निर्वचन करने के लिये चिदचिद्विशिष्ट परमेश्वर मुक्त प्राप्य तथा नित्यसूरियों से सर्वदा दर्शन के योग्य परतत्त्व का उपदेश करने लिए उपक्रम करते हैं–**'विश्वं जातं यतोऽद्धा'** इत्यादि अष्टम तथा नवम श्लोकों से ।

स्थूल सूक्ष्म जङ्गमात्मक सकल जायमान विश्व सर्वशक्तिमान् सर्वज्ञ सर्वान्तर्यामी महापुरुष श्रीरामजी से सर्ग के आदिकाल में उत्पन्न होता है। अर्थात् सर्गादि काल में जिससे आविर्भूत होता है। जिस तरह तिलों से तेल का आविर्भाव होता है। और उत्पन्न होने के वाद जिस परतत्व में अवस्थित रहता है। अर्थात् स्थिति मध्य काल में जिससे पालित-पोषित होता हुआ सर्वदा रक्षित रहता है।

एवं आविर्भूत तथा रक्षित जगत् संहारकाल में जिस परमतत्त्व में प्रलीयमान हो जाता है। एतादृश जगत् का अभिन्न निमित्तोपादान कारण जो है वही परमतत्त्व भगवान् का लक्षण है। और जिस परमात्मा के प्रकाश से प्रकाशित होकर के दिन मणि सूर्य, चन्द्रमा, ग्रह, नक्षत्र तथा अग्निदेव, इस जगत् को प्रकाशित करते रहते हैं। तथा जिसके भय से भयभीत होकर के अत्यन्त वेगवान् वायुदेव दिनरात चलते ही रहते हैं। कभी भी अपने कार्य में आलस्य नहीं करते हैं। तथा जिससे विधारित रहने के कारण पृथिवी स्थान को छोड़ करके रसातल में प्रविष्ट नहीं हो जाती है।

और ज़ो परमेश्वर सदा सर्वत्र पर्वत के समान अचल होकर के स्थिर है। अत एव समस्त स्थावरजङ्गमात्मक जगत् का साक्षी अर्थात् द्रष्टा है। और चित् अचित् तथा चिदचिद्विशिष्ट-इन तीनों तत्त्वों में प्रधान है तथा सर्वज्ञत्व शरणागत वत्सलता प्रभृति अनन्त कल्याण गुणों से सर्वदा युक्त रहते हैं। तथा जो जन्ममरणादि विकारों से रहित होकर के सम्पूर्ण जगत् का भरणपोषण कर्त्ता हैं। और जनकजा रूपलक्ष्मी से सम्बद्ध हैं। तथा जगदुत्पादक तथा जगत् संहारक ब्रह्मा रुद्र प्रभृतिक देवों से आराधित रहते हैं। और शरण में आये हुए व्यक्तियों का भेदभाव के विना



रक्षण करने में सदा तत्पर रहते हैं। और जिस करुणानिधान के चरणकमल का परम प्रेमारूप भक्तिवाले पुरुष विशेष ही प्राप्त करते हैं। अर्थात् भगवत्प्राप्ति का साधन केवल शुष्क ज्ञान नहीं है न वा केवल कर्म है। किन्तु ज्ञानकर्म समुचित भक्ति योग सहकृत प्रपत्तिमात्र है। इस बात को अभिव्यक्त किया गया। और भगवान् क्लेशकर्म विपाक और आशयों से अपरामृष्ट हैं। अत एव महानुभाव भगवान् के यश को श्रीवाल्मीकि प्रभृति महामुनियों के द्वारा लोक में उदीरित है।

और जो ज्ञानी श्रेष्ठ नित्यसूरि श्रीहनुमान् प्रभृतिक महाज्ञानियों के ध्यान का केन्द्र हैं। अर्थात् ध्यान का विषय होते हैं। योगियों से ध्येय हैं। तथा जो भगवान् अजन्मा जन्मरूपभाव विकार से सर्वथा रहित हैं। दशरथादिकों के कुलों में प्राकृत मनुष्य के समान आद्य क्षण सम्बन्ध जन्म नहीं हुआ है किन्तु भक्तानुग्रह के लिए आविर्भाव मात्र हुआ है। अत एव भक्त प्रवर श्रीतुलसीदासजी ने कहा है–**'रोदन तब ठाना'** इत्यादि। और जिसका जन्म होता है उसका मरण अवश्यंभावी है।

**'मृत्युर्जन्मवतां वीर देहेन सह जायते ।**
**अद्यवाब्दशतान्ते वा मृत्युर्वै प्राणिनां ध्रुवः'**

इस प्रमाण से सिद्ध होता है कि जन्मशील का मरण अवश्यंभावी है। तथा–**'जातस्य हि ध्रुवो मृत्युः'** यह भी प्रमाण है कि जन्मवान् का मरण होता ही है। परन्तु महर्षि श्रीवाल्मीकिजी ने श्रीमद्रामायण में कहा है कि **'विवेश वैष्णवं तेजः सशरीरः सहानुजः'** अपने छोटे भाइयों तथा शरीर के साथ-साथ वैष्णव तेज स्वदिव्यधाम श्रीसाकेत में प्रवेश कर गये। इस प्रमाण से सिद्ध होता है कि परमेश्वर का मरण नहीं होता है। तब मरण व्याप्त जन्म भी भगवान् का नहीं होता है किन्तु स्वेच्छा से भगवान् का प्रादुर्भाव मात्र होता है। अर्थात् भगवान् का अभिव्यक्त होना ही जन्म कहलाता है।

अत एव मरण रहित होने से जन्म रहित भी है। एतावता भगवान् में जन्म-मरण एतदुभयराहित्य सूचित किया गया। अर्थात् न तो भगवान् प्राकृत पुरुष की तरह अदृष्टादिरूप कारणों से उत्पन्न होते हैं। न वा प्रकृत पदार्थों की तरह आयु समाप्त होने पर अथवा प्रलयकाल में विनष्ट होते हैं। क्योंकि भगवान् कर्माधीन नहीं है यानी उनका शरीर कर्माधीन नहीं है न वा प्राकृत है। किन्तु अप्राकृतिक लोकोत्तर

निर्मल ज्ञानानन्द स्वभावक हैं। भगवान् का वह तादृश शरीर देशकाल तथा वस्तु परिच्छेद रहित होने से उत्पादविनाशशील नहीं है अपितु नित्य है। इसलिए भगवान् का जन्म तथा मरण नहीं होता है। वह सर्वदा अविनाशी अजन्मा हैं।

तथा जिस परमेश्वर श्रीसीतानाथजी के माहात्म्य महत्त्व का समस्त वेदराशि अर्थात् अङ्गोपाङ्ग पुराणादि सहित वेद समुदाय अनुक्षणगान करते आये हैं। तथा अभी भी गान करते हैं और यावत् काल की सत्ता है। तब तक भविष्य काल में भी गान करते रहेंगे। तथा जिस परमेश्वर जगत्कारण के अनन्त समाभ्यधिक विवर्जित ज्ञानादिक स्वाभाविक शक्ति तथा ज्ञानबलवीर्य स्वाभाविक हैं।

तथा जो भगवान् जरा वृद्धावस्था तथा पाप कर्म कुत्सित शास्त्र प्रतिषिद्ध कर्मों से रहित हैं। सर्वथा विवर्जित हैं। ब्रह्मादिक देव देवों के भी मन तथा वाणी का अविषय हैं। क्योंकि '**यतो वाचो निवर्तन्तेऽप्राप्य मनसा सह**' इत्यादिश्रुति समुदाय कहती है कि परमेश्वर मन वाणी के व्यापार का विषय नहीं होता है। इससे सिद्ध होता है कि परमेश्वर वाङ् मनसातीत है। ऐसा जो पुरुष विशेष है जो कि सकल वसुधाधिप होने पर भी अयोध्याधिपति हैं, वे भगवान् श्रीसीतारामजी सकल जगत् का कारण सर्व नियामक सर्वशेषी परमेश्वर हैं। इसप्रकार से भगवान् श्रीरामानन्दाचार्यजी ने श्रीसुरसुरानन्दाचार्यजी को परमतत्त्वज्ञेय ध्येय तथा प्राप्य के स्वरूप का निर्वचन करके समझाया। ऐसा इन दोनों श्लोकों का अन्वयार्थ हुआ।

इसके पूर्व में तत्त्वत्रयान्तर्गत चित् तथा अचेतन जीव प्रकृति रूप दो तत्त्वों का निरूपण किया गया है। इसके वाद जड़चेतन का धारक सर्वनियामक सर्वशेषी सर्वज्ञत्व सर्वशक्तित्वादिक सकल कल्याण गुणों का आकर समाभ्यधिक विवर्जित सकल शास्त्र विहित कर्म के द्वारा आराध्य सकल कर्मफल प्रदाता योगि गम्य तथा ज्ञेय मुक्त प्राप्य समस्त वेदान्तगम्य पुरुषोत्तम मर्यादा सागर तत्त्वत्रयों में तत्त्वशेखर ईश्वरतत्त्व भगवान् श्रीसीतापति रूप परमेश्वर का निरूपण करने के लिए उपक्रम करते हैं-'**विश्वं जातं यतोऽद्धा**' इत्यादि श्लोकद्वय से।

जिस सर्वशक्ति सर्वज्ञ सर्वान्तर्यामी सर्वशेषी भगवान् श्रीसीतारामजी से यह परिदृश्यमान स्थूल जड़चेतन जगत् प्रलयावसान काल में अर्थात् सर्गकाल में उत्पन्न होता है। तथा स्थिति काल में भगवान् से पालित होता है तथा अवसान में अर्थात्



प्रलयकाल में जिस परमात्मा में लीन हो जाता है, वे परमेश्वर भगवान् श्रीरामचन्द्रजी हैं। इस श्लोक के प्रथम चरण से आचार्यश्री ने ईश्वर में जगत्कारणता का प्रदर्शन कराया है। कारण दो प्रकार का होता है निमित्तकारण तथा उपादानकारण उसमें से चैतन्य मूलक निमित्तकारण अर्थात् कर्तृत्व ईश्वर में बतलाया तथा सर्वशरीरक भगवान् में, उत्पत्ति स्थिति प्रलय भगवान् से होता है यह कह करके उपादान कारणत्व का सूचन किया है। क्योंकि घटादि कार्यों का उत्पाद स्थिति और विनाश ये तीनों उपादानकारण मृत्तिका में ही होता है। केवल पदार्थों का उत्पादन तो कर्त्ता कारण तथा सहकारी कारण से भी होता है। जैसे घटादि का उत्पादन कुलाल तथा दण्डादि सहकारी से भी होता है। परन्तु उत्पादविनाश तो उपादानकारण से ही होता है। ऐसा ही लोक में देखा जाता है। ननु मृत्तिका से घट का उत्पाद हो, मृदतिरिक्त में घट का अवस्थान हो तथा मृदतिरिक्त जलादिक में प्रलीयमान होता हो। किन्तु मृत्तिका ही में उत्पादादिक सब होता है। इसलिए उत्पाद स्थित्यादिक मृत्तिका ही में होने से मृत्तिका घट का उपादान सिद्ध होता है। इसी तरह जगत् का उत्पाद स्थिति विनाश जिससे होता है वही परमेश्वर है। ऐसा कहकर जगदाचार्यजी ने बतलाया कि भगवान् से जगत् का उत्पाद स्थिति एवं विनाश है।

इस विषय का समर्थन श्रुति भी करती है-'**सदेव सोम्येदमग्रे आसीदेकमेवाद्वितीयं ब्रह्म**' '**आत्मा वा इदमेकमग्रे आसीन्नान्यत् किञ्चनमिषत्**' यह परिदृश्यमान जगत् उत्पत्ति के पूर्व एक अद्वितीय सजातीय विजातीय रहित ब्रह्मरूप ही था। उत्पत्ति के पूर्व में समाभ्यधिक विवर्जित आत्मा मात्र था। तदतिरिक्त अर्थात् भगवत् शरीर व्यतिरिक्त क्रियाशील कोई भी पदार्थ नहीं था। इत्यादि श्रुतियों से सर्गपूर्व में सत् आत्मादि पदों के द्वारा सदाद्यात्मक ईश्वर सत्ता का प्रतिपादन करके पुनः श्रुति कहती है-'**यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्वतद्ब्रह्म**' जिस सर्वशक्ति समन्वित सदात्मक सर्वशेषी परमेश्वर रूप कारण से प्रलयावस्था में प्रसुप्त के समान यह परिदृश्यमान जगत् जायमान होता है। अर्थात् रात्रि में नीड़ निविष्ट पक्षीगण जिस तरह रात्रि के व्यतीत हो जाने पर प्रभात समय में नीडों से अभिव्यक्त होते हैं। यथा वा तिलों से जिस तरह तेल कारक व्यापार से अभिव्यक्त होता है। उसी तरह यह जगत् जिससे

सर्गावस्था में क्रमिक अभिव्यक्त होता है तथा अभिव्यक्त होकर के स्थिति अवस्था में जिससे पालित पोषित होता है, एवं संहारावस्था में जिसमें विनष्ट हो जाता है अर्थात् तिरोहित हो जाता है, यह जगत् वही ब्रह्म स्वरूप है। तादृश जगत् कारणीभूत ईश्वर की जिज्ञासा करो। इन उपर्युक्त श्रुतियों से सिद्ध होता है। इस विषय का स्मृत्यादिक ग्रन्थों से भी स्पष्टीकरण होता है। तथाहि-

**'यतः सर्वाणि भूतानि भवन्त्यादि युगागमे।**
**यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये ॥'**

**'यतः सर्वाणि भूतानि प्रभवन्त्यहरागमे**
**रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके' इति।**

अर्थात् आदि युग सर्ग के आदिकाल में जिस सर्वशक्ति समन्वित परमात्मा से ये सब भूत अर्थात् जड़चेतन साधारण सकल स्थूल पदार्थ आविर्भूत होते हैं। इन सब पदार्थों का आविर्भाव होता है। तथा पुनः कल्प के विरामकाल में जिस परमात्मतत्व में प्रलय-तिरोभाव को प्राप्त कर जाते हैं वह ईश्वर है। दिन के प्रारम्भ काल में सभी भूत जिस परमेश्वर से अभिव्यक्त होते हैं। रात्र्यागम-कल्पक्षयकाल में जिसमें तिरोभूत हो जाते हैं, वह परमेश्वर है। इन स्मृतियों से सिद्ध होता है कि भूतों का उत्पाद विनाश तथा पालन परमात्मा से हो जाता है। इस बात को प्रथम चरण से बतलाया है।

**'सूर्योयत्तेजसेन्दुः सकलमविरतभासयत्येतदेषः'**

सूर्य तथा चन्द्रमा ग्रहनक्षत्रादिक तैजस पदार्थ जिस भगवान् के प्रकाश से प्रकाशित होकर के इस जगत् को प्रकाशित करते हैं अर्थात् सूर्यादिक देव भगवान् के प्रकाश से स्वयं प्रकाशित होकर के तब अपने-अपने प्रकाशों से सूर्यादिक देवों चराचर सकल जगत् को प्रकाशित करते हैं। न तु सूर्यादिको में पर प्रकाशकत्व सामर्थ्य स्वाभाविक है किन्तु परोपाधिक है। वह श्रीराम तत्त्व ही ईश्वर है।

परमेश्वर से प्रकाशित होकर के सूर्यादिक जगत् को प्रकाशित करते हैं इस विषय का पुष्टीकरण श्रुती करती है-**'न तत्र सूर्यो भाति न चन्द्र तारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनुभातिसर्वं तस्य भासा जगदिदं विभाति।'** इति।



अर्थात् तत्र उस परमात्मा में सूर्य प्रकाशित नहीं होते हैं। अर्थात् सूर्य के प्रकाश से परमात्मा प्रकाशित नहीं होते हैं। तथा चन्द्रमा और तारागण भी अपने-अपने प्रकाश से परमात्मा को प्रकाशित नहीं कर सकते हैं। तथा विद्युत के प्रकाश से भी परमात्मा का प्रकाश नहीं होता है। ये जो भौम काष्ठादिकगत अग्नि है इसकी तो गणना ही क्या है। किन्तु उस परमात्मा के प्रकाशित होने पर ही सभी पदार्थ सूर्यादिक अनुभासित होते हैं। परमात्मा के प्रकाश से ही सारी दुनिया प्रकाशित होती है। अर्थात् प्रकाशरूप धर्म परमात्मा में ही है। तदितर सूर्यादिक में जो देखने में आता है वह परमात्मा की कृपा से ही प्राप्त हुआ है। इसलिए सूर्यादिक के प्रकाश से परमात्मा प्रकाशित नहीं होते हैं। किन्तु परमात्मा के प्रकाश से सब प्रकाशित होते हैं। इसलिए आचार्यश्री ने कहा कि-**'सूर्योयत्तेजसेन्दुः'** इत्यादि।

इसीप्रकार स्मृति भी कहती है कि परमात्मा के प्रकाश का आश्रय लेकर ही सूर्यादिक प्रकाशक कहलाते हैं। तथाहि-

**'यदादित्यगतं तेजो जगद्भासयतेऽखिलम्।**
**यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धिमामकम् ॥'**

आदित्य सूर्य में रहने वाला प्रकाश सकल जगत् को प्रकाशित करती है। तथा चन्द्रमा में, विद्युत में और अग्नि में रहनेवाला जो प्रकाश समस्त जगत् स्थित पदार्थ को प्रकाशित करता है हे अर्जुन! वह विलक्षण प्रकाश मेरा ही है अर्थात् वह प्रकाश परमात्मा का प्रकाश है। पर आदित्य चन्द्रमा प्रभृति का नहीं है। एतादृश गुणगण विशिष्ट जो है वह परमात्मा है। यही ब्रह्म का लक्षण है।

इतना ही नहीं कि भगवान् श्रीरामचन्द्रजी जगत् का कारण है तथा सर्व प्रकाशक है किन्तु स्वस्व अधिकारों में परमात्मा से नियुक्त जो वायु इन्द्रादिक आधिकारिक पुरुष हैं वे सब जिसके भय से भयभीत होकर के अपने अपने अधिकार कार्य में सर्वदा संलग्न रहते हैं इस बात को जगदाचार्यजी कहते हैं-**'यद्भीत्यावाति वातः'** इत्यादि। जिस परमात्मा के भय से स्वकीय अधिकार में नियुक्त वायुदेव जो कि जगत् के आयुरूप है ऐसा कहा है। इस रीति से सम्पूर्ण जगत् के प्राण रूप परम पुरुष वायुदेव देवमनुष्यतिर्यक् प्रभृतिक प्राणी समूह में श्वासोच्छास रूप से संचरित होते रहते हैं। यह वायु दो प्रकार का होता है-बाह्य तथा आभ्यन्तर।

उस प्रस्तर खण्ड में किसी प्रकार का विकार नहीं होता है। उसी तरह परमेश्वर सर्वदा सुखदुःखादि रूप विकार से रहित होने के कारण कूटस्थ कहलाते हैं।

**(सुखदुःखाद्युपाधिसंभेदरहित इति।)** तथा **'एकः'** परमेश्वर एक है। नतु जड़ तथा जीव के समान अनेक अनन्त है। क्योंकि ईश्वर में अनेकता न लोक सिद्ध है न वा शास्त्र सिद्ध है। अथवा एक है अद्वितीय है, सजातीय द्वितीय रहित है अथवा द्वितीय शब्द का अर्थ होता है सहायक, 'असिद्वितीयोनुससारपाण्डवम्' यहाँ द्वितीय शब्द सहायक वाची है। तो ईश्वर अद्वितीय सर्वसहायक रहित है। स्वयमेव सर्व सहाय रूप है। समाभ्यधिक विवर्जित है।

**'बहु शुभगुणवानिति'** तथा सर्वेश्वर वे श्रीरामजी अनेक शरणागतवत्सलत्वादिक रूप जो कल्याण शुभगुण हैं तादृशानन्त कल्याण गुणवान् है। अनन्त कल्याण गुणवान् कथन से हेय सकलगुण रहितत्व अभिव्यञ्जित होता है। तथा वह **अव्यय** है। सर्वप्रकारक विनाश रहित है। न तो गुण द्वारा इनका विनाश होता है नवा घटादिवत् स्वरूप से विनाश होता है। **'अजोपिसन्नव्ययात्मा भूतानामीश्वरोपिसन्'**

इत्यादि स्मृतियों में अव्ययत्व-अविनाशित्व का प्रतिपादन किया गया है। **'विश्वभर्ता'** इति। यह परमात्मा समस्त चराचर जगत् का भर्ता स्वामी है। भरण पोषण करनेवाले हैं अर्थात् उत्पन्न इस जगत् का स्थितिकाल में रक्षक पालक हैं। भक्त के ऊपर आनेवाला आपद से रक्षण करते हुए पालक हैं ॥८॥

**'श्रीमानर्च्यः'** इत्यादि। वह परमेश्वर श्रीमान् है अर्थात् लीलाविभूति, भोगविभूति तथा नित्यविभूति रूप जो श्री, तादृश श्री से नित्य युक्त हैं। श्रीमान् में नित्य योगार्थक मतुप् प्रत्यय है अर्थात् इन विभूतित्रय से भगवान् श्रीरामजी सर्वदा युक्त रहते हैं। नतु लौकिक श्रीमान् की तरह अव्याप्यवृत्ति श्रीमान् हैं, अर्थात् कभी श्रीयुक्त रहते हैं, कभी नहीं ऐसा नहीं किन्तु सर्वदा श्रीसमेत ही रहते हैं। अथवा विदेहजा रूप श्री से सर्वदा संयुक्त हैं।

**'अनन्याराघवेणाहं भास्करेण यथा प्रभा'** इत्यादि वचन प्रामाण्य से श्रीसीता लक्षण श्री से सर्वदा युक्त हैं। अथवा शोभारूप श्री से युक्त हैं। अथवा धनधान्यादिक श्री से सर्वदा सम्मिलित हैं।

**'भगवान् रामचन्द्रोऽर्च्यः पूजनीयः'** वे भगवान् श्रीरामचन्द्रजी अर्च्य हैं। अर्चन पूजन करने के योग्य हैं। अर्थात् सर्वशेषी परब्रह्म के शरीररूप जो ब्रह्मा विष्णु रुद्र प्रभृतिक प्रभावशाली देव हैं उनसे भी पूजनीय हैं। **'तीर्थास्पदं शिवविरञ्चिनुतं शरण्यम्'** (भागवत) इस महर्षि वचन से जब सर्वशरीरी भगवान् श्रीरामजी ब्रह्मादिक के भी पूज्य हैं तब तो साधारण देवों तथा मनुष्य प्रभृतिक सर्व प्राणियों से पूज्य हैं यह बात कैमुतिक न्याय से सिद्ध होता है। तथा भगवान् श्रीरामजी शरण्य हैं। अथवा शरण में आये हुए व्यक्ति को सांसारिक तापों से विमुक्त करके सर्वदा भय वर्जित परम पद को प्रदान करते हैं। ऐसा महर्षि वचन है-



**'सकृदेव प्रपन्नाय तवास्मीति च याचते।**
**अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम ॥'**

ऐसा स्वयं श्रीकोसलेन्द्र सरकार का फरमान है। इससे यह सिद्ध होता है कि श्रीकोसलेन्द्र सरकार के समान अथवा उनसे बड़ा कोई शरणागतवत्सल नहीं है। क्योंकि ये तो अनेक भवोपार्जित दुस्तर संसार सागर से भी पार लगाकर परम पद को प्राप्त करानेवाले हैं।

तथा **'योगिगम्यांघ्रिपद्मः'** इति। योगी जो श्रीसनक श्रीसनन्दन श्रीसनातन एवं श्रीसनत्कुमार प्रभृतिक योगशील महर्षि लोग हैं उन लोगों से गम्य प्राप्य है चरणकमल जिनका, तादृश भगवान् श्रीरामजी हैं। अर्थात् भगवान् का चरणकमल अकृत पुण्यकर्मा, अत एव असंस्कृत अन्तःकरणवाले व्यक्तियों से प्राप्त नहीं होता है। किन्तु पूर्वकथित महापुरुषों से ही प्राप्त होता है। जिस तरह वैदिक कर्मों में द्विजाति का अधिकार है ऐसा नियम है। ऐसा नियम यहाँ नहीं भगवान् श्रीकृष्णजी ने कहा है-

**'येऽपि स्युः पापयोनयः।**
**स्त्रीयो वैश्यास्तथा शूद्रास्तेपि यान्ति पराङ्गतिम् ॥**
**किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा ॥**
**अनित्यमसुखं लोकमिमं प्राप्य भजस्वमामिति ॥'**

अनेक नीच योनिक तथा स्त्री प्रभृतिक भक्तों का उद्धार श्रीकोसलेन्द्र सरकार ने किया है। ऐसा पौराणिक वीर्ता भी लोक में प्रचलित है।

कविकुल कोकिल गोस्वामी श्रीतुलसीदासजी का यह गान तो उनके विश्व

गुरुत्व सडिंडिमनाद फरमा रहा है-

पाई न केहि गति, पतीत-पावन राम भजि सुनु सठ मना।
गनिका, अजामिल, व्याध, गीध, गजादि खल तारे घना।
आभीर, जवन, किरात, खस, स्वपचादि अति अघरूपजे।
कहि नाम वारक तेऽपि पावन होहिं, राम ! नमानि ते। (मानस)

पुनः भगवान् '**अस्पृश्यः क्लेशादि**भिरिति। क्लेश कर्म विपाक आशयादिकों से अस्पृष्ट है! पतञ्जली ने कहा है-**क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः।**

इसमें अविद्याऽस्मिता रागद्वेष और अभिनिवेश ये योगशास्त्रोक्त पांच नाम हैं क्लेश के। अतद्वत् में जो तत्प्रकारक ज्ञान उसको अविद्या कहते हैं। जैसे शरीर में आत्मज्ञान, आत्मा में शरीरत्व प्रकारक ज्ञान वगैरह को अविद्या कहते हैं। अस्मिता-इसका विशेष लक्षण योगसूत्र विवरण में देखिये। राग-अनुराग द्वेष परद्रोह भावना अभिनिवेश मरणत्रास जो कि ब्रह्मा से लेकर कीट पतङ्ग पर्यन्त मरणत्रास समान रूप से होता है। यह अविद्या ही अस्मिता, रागद्वेष और अभिनिवेश इन चारों का कारण है। कर्म शब्द का अर्थ होता है शुभाशुभ पुण्यपाप। इनका जो फल है उसको विपाक कहते हैं। जिसको योगशास्त्र में कहा है-जाति, आयु और भोग सुखादि रूप का अनुभव। तथा आशय संस्कार वासना। इन सबों से असम्बद्ध पुरुष विशेष को ईश्वर कहते हैं। ऐसा पुरुष विशेष को ईश्वर समझना-ऐसा योगमत है। इसका विशेष विवरण योगसूत्रविवरण से जानिए। विस्तार के भय से यहाँ संक्षेप में बतलाया गया है।

'**सत्समुदितसुयशाः**' इति। सज्जन विद्वान् श्रीवाल्मीकि श्रीव्यासादि प्रवर मनिषियों से समुदित है अर्थात् समीचीन रूपसे लोक में वर्णित है सुयश सुश्लोक नतु निन्दा श्लोक जिनका-एतादृश भगवान् श्रीरामचन्द्रजी हैं। श्रीवाल्मीकि मुनि ने श्रीमद्रामायण ग्रन्थ में विस्तार रूप से सबको अपने अधीन करनेवाले रावण वाली प्रभृति का तथा अति दुस्तर समुद्रबन्धन वगैरह अनेक यशस्कर कार्य का वर्णन किया है। इसलिए वर्णनीय नायक में उदात्तत्व तथा लोकोत्तरत्व की अभिव्यक्ति होती है। तथा '**सूरि मान्यः**' इति। वह भगवान् सूरि अर्थात् नित्यमुक्त जो श्रीहनुमान् प्रभृतिक सूरि हैं उन सबों से मान्य पूजनीय हैं। '**सदा पश्यन्ति सूरयः**' इस वचन से सिद्ध



होता है कि नित्य सूरिगण सर्वदा ईश्वर का पूजन करते हैं। तथा **वदान्यः** चतुर्वर्ग धर्मार्थ काममोक्ष फल को देनेवाले हैं। एतादृश ईश्वर गुणसम्पन्न भगवान् श्रीरामचन्द्रजी हैं। '**सुमहित महिमा साधुवैदेरशेषैरिति**' साधु समीचीनरूप से यथा हो तथा शाश्वत सर्वदा अशेषनिखिल सभी वेदों से प्रतिपादित है महिमा महत्त्व जिनका। तथा '**निर्मृत्युः**' जो श्रीरामजी मृत्यु से सर्वदा रहित हैं तदुक्तम्-'**विवेश वैष्णवं तेजः सशरीरः सहानुजः**' शरीर तथा सोदरों के साथ वैष्णव तेज स्वदिव्य धाम श्रीसाकेत में प्रविष्ट हो गए इस वचन से सिद्ध होता है कि भगवान् मृत्यु रहित हैं। और भगवान् मृत्यु जयी हैं। और भगवान् सर्वशक्तिमान् हैं। '**परास्य शक्तिर्विविधैव श्रूयते**' इस श्रुति से सिद्ध होता है कि समाभ्यधिक विवर्जित अत्युत्कृष्ट शक्ति ईश्वर में है। तथा जिस ईश्वर में जरा वृद्धावस्था नहीं है किसी प्रकार का रजोगुण प्रयुक्त मल नहीं है '**अपहत पाप्मा विजरो विमृत्यु**' ईश्वर सकल पाप कर्म से रहित है। जरावस्था से रहित है तथा सकल मलीन कर्म पाप से रहित है।

तथा, '**विधिभवप्रमुखैर्गीर्मनोभ्यामगम्यः**' इति। ब्रह्मा विष्णु महादेव प्रभृतिक महानुभावों के भी वाणी मन से अगम्य हैं। प्राप्त करने के अयोग्य हैं। '**यतो वाचो निवर्तन्तेऽप्राप्य मनसा सह**' इतिश्रुतेः।

अर्थात् जिस परमात्मा से यह मन वाणी के साथ-साथ परम तत्व का अप्राप्त करके निवृत्त हो जाता है। अर्थात् परमात्मा वाणी मन से ग्रहण करने के योग्य नहीं है। प्राकृत रूपादि के सहकार से पदार्थ ग्राहक चक्षुरादिक से परमात्मा का ग्रहण नहीं होता है। जब विधिभव प्रमुख देव भी मनोद्वारा परमात्मा को प्राप्त नहीं कर सकते हैं तब तदीतर व्यक्तियों की तो कथा ही क्या अर्थात् इतर व्यक्तियों के वाणी मन से तो सर्वथा अप्राप्य हैं। इस तरह सर्वनियामक सर्वान्तर्यामी सर्वशेषी चेतनाचेतन शरीरक जगज्जन्मादि कारणीभूत हेयप्रत्यनीक अनन्त कल्याण गुणक सकल वेद प्रतिपादित भगवान् श्रीसीतानाथ सकल लोकाधिपति ही परमेश्वर हैं यह सिद्ध होता है।

इसप्रकार विगत प्रकरण से आचार्यश्री ने परमतत्त्व का निरूपण किया। तथा उससे पूर्व जड़चेतन प्रकृति जीव का भी यथा साध्य निरूपण किया गया। इस तरह '**किं तत्त्वम्**' ऐसा जो प्रथम प्रश्न जगद्गुरु श्रीसुरसुरानन्दाचार्यजी का था, उसका समाधान किया गया ॥९॥

❋ श्रीवैष्णवमताब्जभास्कर किरणे प्रथमपरिच्छेदः ❋

卐 अथ द्वितीयपरिच्छेदे जप्यात्मकरहस्यत्रयनिरूपणम् 卐

**सञ्जप्यस्तारकाख्योमनुवर इह तैर्वह्निबीजं यदादौ-**
**रामो ङेप्रत्ययान्तो रसमितशुभदस्वक्षरः स्यान्नमोन्तः ।**
**मन्त्रो रामद्वयाख्यः सकृदितिचरमप्रान्वितो गुह्यगुह्यो-**
**भूताक्ष्युत्संख्यवर्णः सुकृतिभिरनिशं मोक्षकामैर्निषेव्यः ॥१॥**

एतावता प्रबन्धेन किं तत्वमिति प्रथमप्रश्नविषयीभूतप्रकृतिजीवेश्वरतत्त्वानि स्वरूपगुणाभ्यामुपदिश्य ततः परं 'किं जाप्यमित्याकारकद्वितीयप्रश्नविषय वस्तु यथावदुत्तरयितुमाचार्यः संप्रत्युपक्रमते सञ्जप्यस्तारकाख्यः इत्यादि श्लोकम् ।

'यदादौ' यस्याक्षरसमुदायात्मकमन्त्रस्यादौ प्रथमं मनुवर मन्यते इतिमनुर्मन्त्रः तस्मिन् वर श्रेष्ठतमवह्निबीजं । रामिति भवेत् अन्तेऽवसाने भवेत् नमः इति मध्ये तु चतुर्थ्येकवचन ङे प्रत्ययः ततश्च ङे प्रत्ययघटितो रामः तस्यादौ वह्निबीजमन्ते नमः इति पदम्, एवं च 'रां रामाय नमः' एतादृशो मन्त्राकारः फलितो भवति । अयं च मन्त्रः, 'रसमितशुभदस्वक्षरः' रससंख्यया प्रमितः कल्याणकारिप्रसन्नषड्वर्णसमुदायैरलंकृतः ततश्रुतिस्मृत्यादिषु प्रसिद्धतरः तारकाख्यः तारकनामकोराजमन्त्र एवेह तैः मोक्षेच्छुभिर्मनुष्यैः सञ्जप्यो जपनीयो भवतीति । पुनश्चायं नैतावदेव जपनीयः किन्तु मोक्षकामनावद्भिः पुरुषैः 'सकृदिति चरमप्रान्वितः' 'सकृदेव प्रपन्नाय तवास्मीति च याचते । अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम ॥' इत्यन्तिममन्त्रेण संयुतः । एतादृशोमन्त्रराजोऽतिगोप्यः । स च भूत्ताक्ष्युत्संख्यवर्णः भूताक्षिसंख्यामिलितपञ्चविंशति वर्णसमुदाययुक्तः श्रीरामस्य द्वयनामकोमन्त्रः 'श्रीमद्रामचन्द्रचरणौ शरणं प्रपद्ये श्रीमते रामचन्द्राय नमः' एतादृशो हि तारक मन्त्रराजः श्रेयस्कामैर्विरक्तैर्वा सर्वैरपि सर्वदा जप्तुं योग्यः । फलं च यथाप्रतिज्ञानुसारेणैव भवतीति ।

अयमर्थः-इतः पूर्वं किंतत्त्वमिति प्रश्नस्य तत्त्वं त्रिविधं प्रधानपुरुषपरमेश्वररूपेण । तत्र चेतनाचेतनेश्वराणां तत्वानां स्वरूपं विचिन्त्य प्रथमप्रश्नं समाधाय ततः परम्, 'किं जाप्यमिति द्वितीयं श्रीसुरसुरानन्दाचार्यीयं प्रश्नमुत्तरयितुमुपक्रमते 'सञ्जप्यस्तारकाख्यः' इत्यादि । तारकाख्यो हि मन्त्रराजः श्रुतिस्मृतिपुराणादिप्रसिद्धः धर्मार्थकाममोक्षफलकामैः सर्वैदैवोपासनीयः । कीदृशस्तारकाख्यो मन्त्रस्तत्राहः यदादाविति । यस्य मन्त्रराजस्यादौ पूर्वभागे वैष्णवमन्त्रेष्वपि वर 'मनुते इति मन्त्रः तेषु श्रेष्ठ वह्नि बीजं रामित्याकारकं विद्यते मध्ये चतुर्थ्येकवचन ङे प्रत्ययान्तो रामेति पदं भवति, अवसाने च नम इति अव्ययपदं विद्यते ततश्च 'रां रामाय नमः' इत्याकारकं मन्त्रराजस्वरूपं फलति स च मन्त्रराजः 'रसमितशुभदस्वक्षरः' रसैर्मधुरादिभेदभिन्नषट्त्वसंख्यया मितानि परिमितानि शुभ कल्याणप्रदायकानि अर्थात् मोक्षान्तफलदायकानि अक्षराणि वर्णाः विराजन्ते यस्मिन् मन्त्रराजे स रसमितशुभदस्वक्षरः । तथा च, 'रां रामाय नमः' इत्याकारकं मन्त्रराजस्य रूपनिष्पन्नं भवति । अपि च अयं मन्त्रो रामद्वयाख्यः वारद्वयं रामपदघटितो मन्त्रराजतां लभते, 'श्रीमद्रामचन्द्रचरणौ शरणं प्रपद्ये श्रीमते रामचन्द्राय नमः' एतादृशोऽयं मन्त्रो जपनीयः । यश्च, 'सकृदिति चरमप्रान्वितो भवद् गुह्यगुह्यो भवति । अर्थात् 'सकृदेव प्रपन्नाय तवास्मीति याचते । अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं ममेति । चरमेणान्तिमेन प्रान्वितो युक्तः सन् गोप्यगोपनीयो भवति । अर्थादनधिकारिणेऽसूयकादिभ्यो न कथमपि प्रकाशनीयः । पुनश्च रामद्वयाख्योमन्त्रः पञ्चविंशतिसंख्याकवर्णविशिष्टः सन्नेव धर्मार्थ काममोक्षाख्यपुरुषार्थकामुकैः सर्वैं नियमेन सेवनीयः । अर्थात् संसारविरक्तैर्मोक्ष कामुकैरनुक्षणं मन्त्रोऽयं जपनीय इति भावः ॥१॥

इसके पूर्व में लोकोपकार की इच्छा से जगद्गुरु श्रीसुरसुरानन्दाचार्यजी से पूछा हुआ-तत्त्व क्या है ! इस प्रश्न का चित् अचित् और ईश्वर ये तीन तत्त्व हैं, ऐसा उत्तर देकर के तदनन्तर पूर्वोक्त चिदचिदादि तत्त्वत्रय विषयक ज्ञान का प्रधान साधन जो मन्त्रराज का जप है, तादृश मन्त्रराज विषयक **'किञ्च जाप्यम्'** इत्याकारक जो द्वितीय प्रश्न है, उस प्रश्न का समाधान करने के लिए आचार्यश्री उपक्रम करते हैं **'सञ्जप्यस्तारकाख्यः'** इत्यादि । हे सुरसुरानन्द ! उस मन्त्र का जप करना चाहिए

जिसको सम्प्रदाय के पूर्वाचार्य महर्षियों ने तारक मन्त्र-ऐसा नामकरण किया है। जिस अक्षर समुदयात्मक मन्त्र के आदि में तो सर्वबीज श्रेष्ठ अग्निबीज रां है। और मध्य में चतुर्थ्यन्त रामपद है। और अन्त में 'नमः' इत्याकारक पद है। अर्थात् 'रां रामाय नमः' एतादृश स्वरूप उस तारक मन्त्र का है। वह मन्त्रराज शुभकल्याणकारी सुप्रसन्न अर्थात् मनोहर छ (रां, रा.मा.य. न. मः) इत्याकारक अक्षरों से युक्त मन्त्रराज कहलाता है। तथा, 'सकृदेव प्रपन्नाय तवास्मीति च याचते' इत्यादि चरममन्त्र से युक्त होने पर, 'श्रीमद्रामचन्द्रचरणौ शरणं प्रपद्ये श्रीमते रामचन्द्राय नमः' मन्त्रराज नाम को प्राप्त करता है। यह श्रीरामचन्द्रजी का द्वय नामक मन्त्र पुरुषार्थ प्राप्ति की इच्छा वाले व्यक्तियों से सदैव जप करने के योग्य है अतः इसीका जाप करना चाहिए।

जो व्यक्ति सम्प्रदायान्तर के दुराग्रहरूप वागुरा में फँसकर के कल्पवृक्ष के समान शरणागत व्यक्ति को सद्यः सर्वफल प्रदाता इस मन्त्रराज को छोड़कर अन्य मन्त्र के द्वारा देवतान्तर की उपासना करने के आग्रह को नहीं छोड़ते हैं वे व्यक्ति- 'तृषितो जाह्नवीतीरे कूपं खनति दुर्मति' इस न्याय विषयता का अतिक्रमण नहीं करते हैं। यह मन्त्रराज कल्पवृक्षादिक में भी सर्वफल प्रदातृत्व सामर्थ्य को देनेवाला है। क्योंकि भगवान् श्रीरामजी सर्वशक्ति सर्वशेषी हैं। प्रकृत मन्त्रराज की विशेष चर्चा अन्यत्र की जायगी इति संक्षेपः ॥१॥

### 卐 श्रीमन्त्रराजरहस्यम् 卐

**मन्त्राणां व्यापकानां भगवत इह चाव्यापकानान्तुमध्ये**
**ऽतिश्रेष्ठो व्यापकः स श्रुतिमुनिसुमतः शिष्टमुख्यैर्गृहीतः।**
**नित्यानामाश्रयोऽयं परितउरुशुभो राममन्त्रः प्रधानः-**
**प्राप्योऽथप्रापकश्च प्रचुरतरगुणज्ञानशक्त्यादिकानाम् ॥२॥**

'इह' इदं पदस्य सर्वनामत्वेन सर्वनाम्नः स्वप्रक्रान्तपरामर्शकतया प्रक्रान्त समस्तशास्त्रप्रतिपादितमन्त्रमध्ये जगज्जन्मादिकारणभगवतः सर्वावतारी सर्वेश्वर श्रीरामस्य परमात्मनो ये मन्त्राः श्रेष्ठाः, तेषां वैष्णवमन्त्राणामव्यापकानां मध्ये ये व्यापका मन्त्रास्ते श्रेष्ठाः, एतेषां व्यापकमन्त्राणां मध्येऽपि योऽयं श्रीराममन्त्रः स तु अतिश्रेष्ठः। यतः श्रुतिस्मृतिसंमतः श्रुतिस्मृतिभ्यां प्रमाणितः श्रीअगस्तिव्यास



पराशरप्रभृतिकशिष्टमुनिपुङ्गवैर्गृहीतो लोकेभ्यः समुपदिष्टश्च। नित्यानां प्रचुरतर गुणज्ञानशक्त्यादिकानामयं मन्त्रराज आश्रयोऽधिष्ठानरूपः, अथ प्रापको मोक्षस्य शुभः परमशोभनरूपः। परितः सर्वेभ्योवैष्णवावैष्णवव्यापकमन्त्रेभ्यः प्रधानमतीवश्रेष्ठः श्रेष्ठतम एतादृशोऽयं श्रीराममन्त्रः प्राप्य आचार्योपसत्तिद्वारेण गुरुभ्यः प्राप्तुं योग्यः। एतादृशो महामहिमकः श्रीराममन्त्रस्तारकाख्यो विरक्ताचार्यमुखादेव तिलकतुलसीमालाकण्ठीधारणपूर्वकं गृहीतव्यो यथाशास्त्रं पञ्चसंस्कारीत्या यथाशक्तिप्रतिदिनं श्रीरामकैङ्कर्यसंपादयन् रात्रिंदिवमतन्द्रितो-भूत्वा जपनीयश्चेति।

भावार्थस्तु प्रकृतश्रीराममन्त्रस्य प्राचीनाचार्या इत्थमुद्गिरन्ति तथाहि-इतः परं वैदिकावैदिकवरुणादिमान्त्रिकामान्त्रिकदेवतान्तराणां ये मन्त्राः सन्ति सहस्रसः, तन्मन्त्रापेक्षया वैष्णवमन्त्राणां श्रेष्ठत्वं ख्यापयन् तादृशमन्त्रेष्वपि 'ॐ नारायणाय विद्महि वासुदेवाय धीमहि तन्नो विष्णुः प्रचोदयात्' एतादृशवैष्णवगायत्र्यामुपास्यत्वेन श्रुतस्य, तथा 'नृसिंहार्कवराहाणां प्रसादात्प्रणवस्य च। स्वनाम पूर्वकाश्चेति मन्त्राश्चव्यापकाः स्मृता॥ 'व्यापकेषु च मन्त्रेषु सिद्धारिंनैव चिन्तयेत्' इत्यादिस्मृतिप्रमाणेन व्यापकश्रेष्ठनारायणवासुदेवविष्णुमन्त्राणां तत्वं प्रकाशयत् तत्रापि सर्वप्रथमतया श्रेष्ठनारायणमन्त्रमपेक्ष्यापि तारकाख्यस्य मन्त्रस्य गूढार्थकतया 'नास्तिचाष्टाक्षरात्परः' 'नमन्त्रोऽष्टाक्षरात्परः' इत्यादिस्थले 'श्रीरामः शरणं मम' इतिमन्त्रस्य सद्भिः परिगृहीतस्य मन्त्रान्तरेभ्योऽतिश्रेष्ठत्वप्रतिपादनायाचार्य उपक्रमते 'मन्त्राणां व्यापकानाम्' इत्यादि। भगवद्व्यतिरिक्तदेवतान्तरमन्त्रानपेक्ष्य श्रेष्ठानां परमेश्वरस्वरूपप्रतिपादकत्वेन व्यापकानाम्, तथा परमेश्वरावतार तदीयगुणादि-एकैकप्रतिपादकतयाऽव्यापकानां मध्ये, न चोपास्यस्यैकत्वेन तन्मन्त्रस्याप्येकत्वेनैवभाव्यं तत्कथं मन्त्राणामित्यत्र बहुत्वं कथितमितिवाच्यम्। परमेश्वरगुणराशिवत् गुणपरिवाहरूपतदीयावताराणामनेकत्वेन बहुत्वसंभवात् मन्त्राणामित्यत्र बहुत्वनिर्देशः। परमेश्वरजन्मनोऽनेकत्वं तु 'अजायमानो बहुधाऽभिजायते' 'बहुनि मे व्यतीतानि जन्मानि तवचार्जुन' इत्यतो ज्ञेयम्, एवं च तत्तत्प्रकाशकमन्त्रा अप्यनेका एव, 'अनन्ता वै भगवन्मत्राः' इत्युक्तेः।

एतादृशव्यापकाव्यापकमन्त्राणां मध्ये श्रुतिमुनिसुमतः शिष्टमुख्यैर्व्यासा

दिभिः परिगृहीतस्तारकाख्यो राममन्त्रो व्यापकोऽतीव श्रेष्ठः । गुप्तपरिभाषणात्म कमत्रिगुप्तपरिभाषणे इति धातोरौणादिकप्रत्यये कृतेनिष्पन्नोमन्त्रशब्दः 'अतएव गोप्यगोप्य इतिकथितम् । अयं श्रीराममन्त्रो नित्यानामाश्रयः तथाहि रीयन्ते वि ध्वंसन्ते इति राःक्षयशीलाः पदार्था रीङ्क्षये इतिधातुस्ततोऽप्रत्यये कृते रा इति रूपम् । राः क्षयिष्णवो न भवन्तीति राः नित्यापदार्थाः विनापिप्रत्यये पूर्वोत्तर पदयो लोप इतिव्याकरणनियमात् । अथवा परमेश्वराश्रितत्वात् प्रलयेऽपि निरन्तरं राजन्ते इति रा नित्याः पदार्थाः 'प्रलये न व्यथन्ति ते' इति वचनात् । ते रा पदबोध्यापदार्था इमे ज्ञानानन्दामलत्वादिकाज्ञानशक्त्यादयो वात्सल्यादयश्च दिव्यात्मगुणाः दिव्यमङ्गलविग्रहकान्तिसुकुमारादिकाः, दिव्यमङ्गलविग्रहादि-गुणाः भूषणानि दिव्यायुधानि नित्यसूरयः छत्रचामरप्रभृतिपरिचरणसाधनं द्वार पाला गणाधिपा मुक्ताः परमाकाशो मूलप्रकृतिर्बद्धजीवाः कालो महदादिवि कारा ब्रह्माण्डानि तदन्तर्गतपदार्थास्ते नित्यपदवाच्याः । तत्र ज्ञानाद्यारभ्यकाल पर्यन्तपदार्थाः स्वरूपतो नित्याः कदापि नच्यवन्ते । महदादिकाविकारास्तु प्रवा हतो नित्याः, यथा गाङ्गजलं प्रतिक्षणं प्रवहनशीलं प्रवाहरूपेण विनष्टं न भवति तथैव जन्या महदादिका ब्रह्माण्डान्ताः पदार्थाः प्रातिस्विकरूपेणागमापायिनो भवन्तोऽपि द्रव्यसत्तादिरूपेण स्थिता भवन्तः प्रवाहनित्या इति कथिता भवन्ति । सत्वे सति उत्पत्तिविनाशात्यन्ताभाववत्त्वम्, उत्पत्तिविनाशयोग्यत्वे सति पूर्व रूपानन्यथाभाववत्त्वमित्युक्तेः । इत्यत उपर्युक्ताः पदार्थाः राः पदबोध्या भव न्ति । एतेषामामः, तत्र अम् गत्यादिषु इतिधातोर्निष्पन्नोयम् आमशब्दः स चाम शब्दः प्राप्यवाची ततश्च रा पदबोध्यानाम्, आमः प्राप्यो यः स रामः । अम्य तेऽनेनेति करणव्युत्पत्यात्वयं प्रापकवाची अर्थात् आमः अत्र अमगत्यादिषु इति अमधातोर्निष्पन्नोऽयमामशब्दः 'ये गत्यर्थकास्तेप्राप्त्यर्थकाः' इतिनियमेन अम्य ते प्राप्यते इति आमः 'अकर्तरि च कारके संज्ञायाम्' इतिसूत्रेण अमधातोः कर्म णि घञि कर्मव्युत्पत्तिं कृत्वा आम इति भवति स च प्राप्यवाची । अम्यते प्राप्यतेऽनेनेति करणव्युत्पत्या तु स एव प्रापकवाची भवति । 'यतो वा इमानि भूतानि जायन्ते....यत्प्रयन्त्यभिसंविशन्ति' इतिश्रुत्यनुसारेण अमन्ति गच्छन्ति अस्मिन्नित्यधिकरणव्युत्पत्या तु आश्रयाभिन्नाधिकरणवाचको भवति अयमाम



शब्दः । ततश्च रा पदवाच्यानां ज्ञानानन्दादयारभ्य ब्रह्माण्डान्तानां स्वरूपतः प्रवाहतो नित्यानां प्राकृतिकाप्राकृतिकसर्वपदार्थानाम् आमः प्राप्यः प्रापकस्तथा सर्वाधारश्च यो भवति स रामपदवाच्यो भवति एतावता परिदृश्यमानसर्वप दार्थापेक्षया श्रीरामस्यपरत्वमभिव्यञ्जितम् । ततश्चैतादृशपरमात्मबोधकश्रीराम मन्त्रस्य व्यापकाव्यापकसर्वश्रेष्ठत्वसर्वश्रुत्यादिसंमतत्वशिष्टपरिगृहीतत्वकथनं युक्तियुक्तमेवेतिसारः ।

अपि च रा आम आधारो यस्य भवति स रामः एतावता सर्वान्तर्यामित्वं श्रीरामस्य सिद्ध्यति । न च लक्षणादोषग्रस्तत्वान्न सर्वत्र बहुव्रीहिः साधुरितिवा च्यं श्रुत्यनुरोधात्तथा स्वीकारेऽपि क्षतेरभावात् । कण्ठेकाल इत्यादिप्रामाणिकप्र योगदर्शनेन व्यधिकरणबहुव्रीहेरपि साधुत्वात् । 'अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा 'यः पृथिव्यांतिष्ठन्' 'अन्तर्बहिश्च तत्सर्वं व्याप्यनारायणः स्थितः । 'भवा न्नारायणो देवः श्रीमांश्चक्रायुधोहरिः' 'महार्णवेशयानोऽप्सु मां त्वं पूर्वमजीजनः' इत्यादिसर्ववाक्यानामेकवाक्यत्वे कृते श्रीनृसिंहवराहनारायणादिपदानामपि वा च्यो भगवान् श्रीसीतापतिरेव सर्वशेषितयाभिव्यञ्जितः श्रुतिस्मृत्यादिभिः । देव तान्तरवाचकपदानामेकैकवाचकत्वेनेश्वरत्वासाधकत्वात् । किन्तु ते देवा भग वतो रामस्य प्रकाररूपा इति तेऽपि स्वप्रकारिणमेव बोधयन्ति शरीरवाचकपदा नां शरीरिपर्यन्तबोधकत्वं मनुष्यादिस्थले दृष्टत्वेन सर्वशरीरी श्रीराम एवेश्वरः । तदाहुर्भाष्यकाराः-ब्रह्मशब्दश्चमहापुरुषादिपदवेदनीयनिरस्ताखिलदोषमनवधिका तिशयासंख्येयकल्याणगुणगणं भगवन्तं श्रीराममेवाह, सामान्यवाचकानां पदा नां विशेषार्थे पर्यवसानात् । तदाह वृत्तिकारः-विशेषार्थेन सामान्यार्थोऽवसीयत इति ( बो.वृ.) ( आनन्दभाष्यम् १।१।१ )

एवं श्रीरामतापनीयश्रीवाल्मीकीयश्रीमद्रामायणवशिष्ठसंहितागीतादिश्रुति स्मृतिप्रभृतिग्रन्थेभ्यः सर्वेश्वरश्रीरामस्यैवेश्वरत्वमायाति ॥२॥

अतीत प्रकरण से चित् अचित् तथा ईश्वरतत्व का निर्वचन के द्वारा परम प्राप्य श्रीवैष्णव संमत भगवान् श्रीसीतानाथजी के ईश्वरतत्व का सांङ्गोपाङ्ग विवेचन किया गया है । उस विवेचित परमतत्व-प्राप्य परमेश्वर का जो उपासना है वह ऐहिक तथा पारलौकिक स्वर्गादि फल देनेवाला है, इतना ही नहीं स्वर्ग से भी अत्यधिक श्रेष्ठ

**अकारेणाऽपि विज्ञेयो मध्यस्थेन महामते ! ।**
**स्वस्वामिभावसम्बन्धो मकारेणाथ कथ्यते ॥७॥**

न केवलं प्रपञ्चकारणवाचकपदेन जगत ईश्वरयोः पितापुत्रत्वसम्बन्धस्तथा रक्षकवाचकरेफेण रक्ष्यरक्षकभावः सम्बन्धः प्रतिपादितो भवति, किन्तु रेफादिपदेन सम्बन्धान्तरमपि प्रतिपादितं भवतीति दर्शयितुमुपक्रमते-'शेषशेषित्वसम्बन्धः' इत्यादिश्लोकद्वयेन, हे महामते ! सुरसुरानन्द ! अत्र रामित्यत्र पूर्वमर्थात् 'र. अ. आ. म्.' इत्यत्र पूर्वरेफोत्तरं चतुर्थीविभक्तिरासीत् तस्या 'सुपां सुलुक् इत्यादिसूत्रेण लोपोजातः । ततश्च रेफान्तरलुप्तचतुर्थीविभक्त्या जीवराशि परमेश्वरयोः शेषशेषिभावसम्बन्धः प्रोक्तो भवति, अर्थात् परमेश्वरस्सर्वस्यापि जीवसमुदायस्य शेषी भवति, जीवाश्च तस्येश्वरस्य शेषा भवन्तीति तयोः शेष शेषिभावनामकसम्बन्धः स्पष्टतया भासते । तदयमर्थः-समस्तमलदोषहेय गुणादिप्रत्यनीकानन्तकल्याणगुणमहार्णवाय बीजाय प्रथमाक्षर र पदवाच्याय सकलजगत्कारणाय श्रीमते सीतानाथाय शेषिणे सकलजीवराशिः शेषरूपो भवतीतिसारः । र पदोत्तरलुप्ता या चतुर्थी सा सम्बन्धार्थिका नतु निमितार्थिका, तेन सर्वशेषिणो भगवतः श्रीरामस्य सर्वोपि जीवः शेषरूप इत्यर्थो मे प्रतिभाति स च युक्त एवेति हार्दम् ।

अत्रोत्तरार्द्धस्योत्तरश्लोकीयपूर्वार्द्धेनान्वयस्तत्राह-'भार्याभर्तृत्वसम्बन्ध' इति । अनन्यार्हत्ववाचिना मध्यस्थाकारेण रेफाकारमध्यस्थिताकारेणापि जीवेश्वरयोर्भार्याभर्तृत्वसम्बन्धः प्रोक्तो भवति । आकारेण वात्सल्यादिसम्बन्धः प्रोक्तो भवति । अथचान्तिमेन मन ज्ञाने इत्यतः ड्विव प्रत्ययेन निस्पन्नः-मन्यते इति म् इति ज्ञातृत्ववाचिना मकारेण जीवेश्वरयोः स्वस्वामिभावः सम्बन्धः प्रोक्तो भवति । भार्याभर्तृत्वादिसम्बन्धस्तत्तत्पदेन कथं किमर्थं वा प्रत्याय्यते इत्याकारकविशेषचर्चा जगद्गुरुश्रीरामानन्दाचार्यश्रीरघुवराचार्यकृतश्रीमन्त्रराजमीमांसा नामकग्रन्थविवरणे निरुच्यते ॥६-७॥

जगत् के कारण का कारण वाचक पद से केवल जीव ईश्वर में पितापुत्रत्व सम्बन्ध मात्र का ही कथन होता है इतना ही नहीं किन्तु सम्बन्धान्तर का भी बोध होता है, इस बात को बतलाने के लिए आचार्य उपक्रम करते हैं-'**शेषशेषित्व-**



**सम्बन्धः**' इत्यादि ।

हे महामते सुरसुरानन्द ! 'रां' इत्याकारक जो बीजमन्त्र है इसमें '**र. अ. आ. म्.**' इत्याकारक चार अक्षर हैं । इसमें जो बीज का प्रथमाक्षर '**र**' है उसके बाद में चतुर्थी विभक्ति थी । उस चतुर्थी विभक्ति का 'सुपां सु लुक्' इत्यादि सूत्र से लुक् हो गया है । वह लुप्त जो चतुर्थी विभक्ति है तादृश विभक्ति से जीव समुदाय तथा परमेश्वर में शेषशेषिभाव सम्बन्ध प्रतिपादित होता है । ऐसा विद्वान् लोग कहते हैं । तथा अनन्यार्हत्व रूप अर्थ का वाचक जो मध्यस्थित बीज का द्वितीय अक्षर **अकार** है उस अकार से जीवेश्वर में भार्याभर्तृत्व सम्बन्ध कहा जाता है । एवं बीज का जो तृतीय अक्षर **आकार** है उससे वात्सल्य शौर्यादि सभी सम्बन्ध का प्रतिपादन होता है । और बीज का चतुर्थाक्षर **मकार** से स्व स्वामिभाव सम्बन्ध प्रतिपादित होता है ऐसा समझो ॥६-७॥

**आधाराधेयभावोऽपि ज्ञेयो रामपदेन तु ।**
**सेव्यसेवकभावस्तु चतुर्थ्या विनिगद्यते ॥८॥**

श्रीराममन्त्रराजस्य बीजाक्षरघटकरेफादिवर्णचतुष्कस्य व्याख्यानं कृत्वा तदनन्तरं तत्सम्बन्धितश्रीरामस्वरूपस्य तत्प्रतिपादितसम्बन्धञ्च दर्शयितुमुपक्रमते 'आधाराधेयभावोपीत्यादि' जड़ाजड़सकलप्रपञ्चकारण 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति' 'यस्मिंश्च प्रलयं यान्ति पुनरेवयुगक्षये' इत्यादिश्रुतिस्मृतिप्रसिद्धसर्वाधारभूतश्रीरामात्मकेश्वरप्रतिपादक श्रीरामपदेन जीवराशिपरमेश्वरयोराधाराधेयभांवः प्रतिपादितो भवति । श्रुत्यादिभिः श्रीरामस्य सर्वाधारता प्रतीयते तदन्यस्य सर्वस्य वस्तुन आधेयता प्रतीयते, इतिप्रकृतश्रीरामपदं विश्वविश्वेशयोराधाराधेयभावसम्बन्धं बोधयति । तथा मन्त्रघटकश्रीरामपदोत्तरविद्यमानचतुर्थी विभक्त्या अर्थात् रामाय इत्यत्र रामेति पदमाधाराधेयभावं प्रतिपादयति अलुप्तचतुर्थीविभक्तिस्तु जीवेश्वरयोः सेव्यसेवकभावसम्बन्धो बोधयति । अर्थात् सर्वाधारभूतः श्रीरामः सेव्यः कायिक वाचिकमानसिकव्यापारेण । जीवराशिस्तु सेवकः । सेवनक्रियायाः कर्मीभूतो भगवान् श्रीरामः । तथा सेवनात्मिका क्रियायाः कर्त्ताजीवः । इत्युभयोः सेव्यसेवकतया वद्धमुक्तनित्यसूरिजीवैः श्रेयस्कामैरवश्यमेव सेव्योनान्यथा

**गत्यन्तरमिति व्यक्तं चतुर्थीविभक्तिर्वदतीतिभावः । नहि तृषितो जाह्नवीतीरे कूपखननन्यायो ऽनुसरणीय इतिसारः ॥८॥**

छ अक्षरवाला 'रां रामाय नमः' इस मन्त्रराज में जो प्रथमाक्षर बीज है उसका व्याख्यान करके तादृश 'रां' बीज से सम्बन्धित जो बीज स्वरूप उसका सम्बन्ध क्या है ? इस बात को समझाने के लिए उपक्रम करते हैं-'**आधाराधेयभावो-पीत्यादि**'-

'**रामाय**' यहाँ चतुर्थी प्रत्यय का जो प्रकृति श्रीरामपद है उस श्रीराम पद से चेतनाचेतन अर्थात् जीव जड़ महाभूत से लेकर प्रकृत्यन्त पदार्थ तथा 'आत्मा ज्ञानमयो ऽमलः' 'प्रज्ञानं ब्रह्म' इत्यादि श्रुति बोधित जो परमकारण श्रीरामात्मक आत्मा है इन दोनों में आधाराधेयभाव सम्बन्ध का प्रतिपादन किया जाता है ।

आधेयत्व, एकमात्र में रहता है द्विष्ठ नहीं है । और सम्बन्ध वह होता है जो दो में रहनेवाला हो । तब आधारत्वाधेयत्व को सम्बन्ध कहना तो समीचीन जैसा नहीं लगता है । तथापि आधारतानिरूपिताधेयत्व तथा आधेयतानिरूपित आधारत्व की सम्बन्ध मानने से कोई क्षति नहीं है । इसलिए आचार्यश्री ने आधाराधेयभाव को सम्बन्ध मान लिया है ।

और 'रामाय' में जो विद्यमान चतुर्थी विभक्ति अर्थात् जिसका लोप नहीं हुआ है उस विद्यमान चतुर्थी विभक्ति से जीव तथा ईश में सेव्य सेवक भाव बोधित होता है । इसमें श्रीराम सेव्य हैं तथा जीव समुदाय जो कि वद्ध मुक्त और नित्यसूरि विभाग से त्रिधा विभक्त हैं, सेवक हैं । तादृश भगवान् श्रीरामजी सर्वदा जीवों से सेवनीय हैं ॥८॥

**नमः पदेनाखण्डेन त्वात्मात्मीयत्वमुच्यते ।**
**षष्ठ्यन्तेन मकारेण भोग्यभोक्तृत्वमप्युत ॥९॥**

**न केवलमाधाराधेयभावसम्बन्धस्तथा सेव्यसेवकभावसम्बन्धो जीवराशिपरमेश्वरयोरपितु तदतिरिक्तोऽपि जीवेश्वरयोः सम्बन्धो विद्यते इतिसम्बन्धान्तरमपिदर्शयितुं प्रकृतश्लोकमवतारयन्नाह** 'नमः पदेनाखण्डेनेत्यादि । **तत्र नमः पदं द्विविधं सखण्डमखण्डञ्च, यत्रावयवार्थस्य श्लेषो भवति तत्सखण्डम् । यत्रत्ववयवार्थो पार्थक्येन नाववुध्यतेऽपितु समुदायार्थप्रतीत्यैवार्थबोधो जायते**



**तदखण्डम् । अर्थात् खण्डश्छेदः स यत्र न भवति तदखण्डम् । यत्र खण्डछेदोभवति तत्सखण्डम् । तत्राखण्डेन छेदरहितेन नमः पदेन जीवेश्वरयोरात्मात्मीयत्वाख्यसम्बन्धः प्रतिपादितो भवति । 'रां रामाय नमः' इति मन्त्रे रां रामाय इत्यनेन पूर्वकथितोऽनेकप्रकारकः जीवेशयोः सम्बन्धः । संप्रति नमः पदेन कीदृशः सम्बन्ध इति तद्दर्शितं भवतीति भावः । अर्थात् अखण्डेन नमः पदेन यथोक्तः सम्बन्धोऽर्थादात्मात्मीयत्वरूपः सम्बन्धः प्रतिपादितो भवति । नमो घटकेन षष्ठीविभक्त्यन्तेन खण्डेन मकारेण तु भोग्यभोक्तृत्वसम्बन्धः कथितो भवतीति हे सुरसुरानन्द ! श्रुतिस्मृत्यादिद्वारा त्वयापि ज्ञायताम् । अहं तु तादृश सम्बन्धं जानामि त्वामपि मद्वचनात्तथा श्रुत्यादिकमन्विष्य जानीयाः ज्ञात्वा च मननादिना तन्निर्णयं कुरु नात्र संशयस्यावसरो दातव्य इति तात्पर्यः ॥९॥**

'रां रामाय नमः' यह जो मन्त्रराज है जिसको महर्षिगणों ने श्रुतिस्मृति का आलोडन करके तारक मन्त्र कहा है । उस मन्त्र के आदि में **रां. रा. मा.** तथा य. इन चार पदों के अर्थ को बलता करके **नमः** इत्याकारक जो पञ्चम तथा षष्ठ पद हैं उनकी व्याख्या बतलाने के लिए आचार्यजी कहते हैं-'**नमः पदेनाखण्डेन**' इत्यादि ।

अखण्ड जो नमः पद है, तादृश नमः पद से चेतनाचेतन साधारण सकल जगत् तथा श्रीरामात्मक परब्रह्म में आत्मात्मीयत्व सम्बन्ध प्रतिपादित होता है ऐसा महर्षि गण कहते हैं । अर्थात् आत्मात्मीयत्व सम्बन्ध घटक प्रथम आत्मा पद ईश्वर वाचक है । क्योंकि 'अन्तर्यामी ब्राह्मण में 'एष ते आत्माऽन्तर्यामी अमृतः' इस वाक्य से कहा है । तो आत्मा स्वरूपतः व्यापक तथा जगत् कारण ब्रह्म का आत्मीय जीव है । इसलिए जीवेश्वर में आत्मात्मीयत्व रूप सम्बन्ध घटता है । हे सुरसुरानन्द ! तुम इस बात को मद्वचन तथा श्रुति स्मृति पुराणों से जानो ।

और सखण्ड नमः पद घटित षष्ठ्यन्त **म** पद से जड़चेतन साधारण जगत् तथा सर्वकारण परमेश्वर में भोग्य भोक्तृत्वादिक सम्बन्ध प्रतिपादित होता है । इसमें सकल जगत् भोग्य है तथा परमेश्वर भोक्ता है । क्योंकि जड़चेतन सकल जगत् भगवान् श्रीरामजी को सुख पहुँचानेवाले हैं एतदर्थ इन सर्व विषयों का निर्माण हुआ है । हे सुरसुरानन्द ! तुम भी भोग्य भोक्तृत्वादि सम्बन्ध जगत् तथा ईश्वर में है, ऐसा

श्रुत्यादि के द्वारा जानो ॥९॥

ज्ञानानन्दस्वरूपोऽवगतिसुखगुणोमेनवेद्योऽणुमानो-
देहादेरप्यपूर्वो विविदितविविधस्तत्प्रियस्तत्सहायः ।
नित्यो जीवस्तृतीयेन तु खलुपदतः प्रोच्यते स्वप्रकाशो-
जिज्ञासूनां सदेत्थं शुभनतिसुमते शास्त्रवित्सज्जनानाम् ॥१०॥

हे शुभनतिसुमते सुरसुरानन्द ! पूर्वकालिकमुनिभिस्तृतीयेन मेन इत्याकारकपदेन शास्त्रवित्सज्जनानां जिज्ञासूनां जीवस्वरूपज्ञातुमिच्छताम्, सदा वेद्यः ज्ञानानन्दस्वरूपः अवगतिसुखगुणक, अणुपरिमाणवान् देहादेरपूर्वः विविदित विविधः, तत्प्रियः तत्सहायः नित्यः सदैकरूपः स्वप्रकाशः जीवः प्रोच्यते तु स तु जीवः इत्थमुक्तप्रकारेणत्वया जीवस्वरूपजिज्ञासुना ज्ञातव्यः । अष्टावयवपक्षे तु तृतीयेन मेन चतुर्थावयवमकारेण पदतः नित्यजीवादविशिष्ट बद्धमुक्तजीवाः प्रोक्ता भवन्ति ते च नित्यंमुक्तबद्धजीवाः सदा इत्थं ज्ञानानन्दादिवक्ष्यमाण विशेषविशिष्टतया जिज्ञासूनां वेद्या भवन्तीतिभावः ।

तदत्र षडक्षरश्रीराममन्त्रे तृतीयपदमकारेण कस्य बोधो भवतीति शिष्यजिज्ञासामपनेतुं तृतीयेन मकारात्मकपदेन ज्ञानादिगुणको जीव एवोक्तो भवतीति प्रतिपादयितुमाचार्य उपक्रमते 'ज्ञानानन्दस्वरूपः' इत्यादि । शुभे परमेश्वरे नति प्रणामविषयकमतिर्विद्यते यस्य स शुभनतिसुमतिस्तत्संबुद्धौ हे शुभनतिसुमते सुरसुरानन्द ! अर्थात् सर्वकल्याणदायकतया सर्वेभ्यः शुभः परमेश्वर इति बुद्ध्या परमेश्वरनमस्कारे विमला मतिः यस्येति । पदतः अत्र तृतीयार्थे तसिल् प्रत्ययस्तेन पदतः तृतीयेन मेन नमस्कारात्मकपदेन जिज्ञासूनां जीवस्वरूपविषयकज्ञानेच्छावताम् शास्त्रवित् शास्त्रजनितज्ञानवतामत एव सज्जनानां प्रत्युपकारानपेक्षोपकारकर्तॄणाम् सर्वदाऽनवरतं बीज एव वेद्यो ज्ञातुं योग्यस्तृतीयेन मकारात्मकपदेन प्रोच्यते कथितो भवति । कीदृशः स जीवो यस्तृतीयपदवाच्यस्तत्राह-'ज्ञानानन्दस्वरूपः' 'आत्माज्ञानमयोऽमलः' 'सत्यं ज्ञानमानन्दम्' इत्यादि श्रुतिबोधितज्ञानानन्दमय इत्यर्थः । पुनश्च 'अवगतिसुखगुणः' तत्रावगतिर्ज्ञानमनुकूलवेदनीयं च सुखं तदुभयगुणो यस्य स ज्ञानसुखादिगुणवानिति । ननु



जीवो ज्ञानादिस्वरूपो ज्ञानगुणवानितिकथं स्यात् स्वस्मिन् स्वस्याभावात् इति चेन्न भावानवबोधात्, ज्ञानं द्विविधं धर्मरूपं धर्मिरूपञ्च । तत्र धर्मिभूतज्ञानं जीवाधिकरणं तथा धर्मभूतज्ञानादिकं गुण आधेयादिरूपः । यथा प्रदीपस्तदीयप्रभयोः प्रकाशरूपत्वेन सजातीयत्वेऽपि प्रदीपात्मके तेजोऽधिकरणं प्रभारूपं च तेज आधेयं भवति न तत्र तयोराधाराधेयभावे कश्चन विरोधो भवति तथैव प्रकृते उभयोर्ज्ञानत्वेपि आधाराधेयभावेन व्यवस्था सूपपादिता भवति न कोऽपि विरोध इति ध्येयम् ।

पुनश्च कीदृशोजीवस्तत्राह-'अणुमानः' अणुर्मानं परिमाणं यस्य सोऽणुमानः । 'एषोणुरात्मा चेतसा वेदितव्यः' बालाग्रशतभागस्य शतधा कल्पितस्य च । भागोजीवः स विज्ञेयः' इत्यादिश्रुत्या जीवस्याणुत्वसिद्धेः । तस्य मध्यमपरिमाणे तु देहादिविनाशेन जीवस्यापि विनाशित्वं प्रसज्येत । व्यापकपरिमाणवत्वे तु चन्द्रलोकादौ गमनागमनानुपपत्तेः । व्यापके वस्तुनि गमनादिक्रियाया अनुपपत्तेः नहि भवति गगनं गच्छत्यागच्छतीति प्रतीतिस्तस्मात्तदुभयपक्षस्य दोषदुष्टतया जीवस्याणुपरिमाणवत्वमेव सिद्धान्तः साधुरिति शास्त्रमर्यादा । न च जीवस्याणुत्वे शरीरैकदेशे एव सद्भावेन निदाघे जाह्नवी सलिले निमज्जतां सर्वाङ्गीणशैत्योपलब्धिः कथं स्याज्जीवस्याणुत्वादितिवाच्यम् ज्ञानगुणव्यापित्वे नैकसमये सकलशरीरगतशैत्याद्यनुभवे वाधकाभावात् यथा गृहैककोणेऽवस्थितो प्रदीपः सर्वत्र प्रसृमरप्रकाशेन सम्पूर्णं गृहं प्रकाशयति । तथैव शरीरैकदेशेऽवस्थितोऽपि जीवः ज्ञानगुणव्याप्त्या एकस्मिन्नेव काले सर्वमनुभावयति । यथा वा एकत्रविद्यमानं कुसुमं गन्धव्याप्त्या सर्वानिवामोदयति, तद्वत् प्रकृतेऽपि । एतत्तत्वं, 'गुणाद्वा लोकवत्' तद्गुणसारत्वात्तद् व्यपदेशः' इत्यादिब्रह्मसूत्रे विस्तरेणानन्दभाष्यकारा अवोचन् । विशेषजिवृक्षुभिस्तत्रैवाधिकं द्रष्टव्यम् । तस्मादणुपरिमाणक एव जीव इति सिद्धमतः सूष्ठूक्तम् 'अणुमानः' इति । तदत्र-

'अकर्ता विभुर्नाथवा मध्यमानो, नवा ज्ञानशून्यो जडो दुःखरूपः ।
अणुर्ब्रह्मणोंऽशः शरीरश्च शेषः, परं रामचन्द्रस्य दासश्चिदात्मा ॥'

इत्यादिकं जगद्गुरुश्रीचिदानन्दाचार्योक्तमनुसन्धेयमितिदिक् ।

पुनश्च कीदृशः स जीवो यो हिः इहलोकयात्रापथिकस्तत्राह-'देहादेरपूर्वः' श

रीरेन्द्रियमनोबुद्धिविषयेभ्योऽपूर्वो विलक्षणो भिन्न इत्यर्थः । अर्थात् नायं जीवो देहादिरूपोऽपितु शरीरादिभ्यो विभिन्न एव अन्यथा शरीरादेर्विनाशदर्शनेन तद भिन्नस्य जीवस्यापि शरीरादेर्विनाशे विनाश एव स्यात् । ततश्च यागादिक्रिया जनितपारलौकिकफलभोक्तुरभावेन स्वर्गादिफलमुदिश्य, स्वर्गकामो यजेत इत्यादि विधिप्रतिषेधादिशास्त्राणामानर्थक्यमेव स्यात् । तथा मोक्षस्यापि वार्तमानिकशरीरपातानन्तरमेव प्राप्तेः प्रतिपादनात् शरीरनाशेन तदभिन्नस्य जीवस्यापि विनाशेन मोक्षप्रयोजनकभगवत्कैङ्कर्यादिक्रियास्वपि लोकानामप्र वृत्तेर्मोक्षशास्त्रमपि निरर्थकमेव भवेत् तस्मान्नशरीरादिरूपो जीवोपितु देहा-दिभ्योऽत्यन्तभिन्न एवेति ज्ञेयम् ।

न च स्थूलोऽहं कृशोऽहमित्यादिप्रतीत्या स्थूलत्वाहंत्वयोः सामानाधिक रण्यदर्शनेन स्थूलत्वादिधर्मस्य देहादिनिष्ठत्वस्य प्रत्यक्षतोऽनुभवेन अहंत्वस्यापि शरीरनिष्ठत्वेनैव भवितव्यमिति शरीरादिरूप एव जीव इति वाच्यम्? बाल्ये वि लोकितस्य स्थाविरे स्मरणानुपपत्तेः, भवति च प्रतिसंधानं यदहं मातृपितरमन्व भूवं सोहं बृद्धे प्रणमामीत्याकारकस्मरणम् तत् शरीरेन्द्रियादिना जीवस्य ता-दात्म्ये सर्वथैव वाध्येत तस्मादेहादिभ्यो विलक्षण एव जीव इति ध्येयम् । तदाहुर्जगद्गुरुश्रीश्रुतानन्दाचार्याः-

सुखज्ञाणुचिज् ज्ञातृरूपोस्ति जीवः परब्रह्मणोंऽशस्तनुर्नित्यशेषः ।
न देहेन्द्रियप्राणबुद्धिस्वरूपो विकारी जडो ब्रह्मरूपोऽपि नैव ॥

पुनश्च जीवः कीदृशस्तत्राह-'विविदितविविधः' विविशेषेण विदितोज्ञा तश्चासौ विविधश्च बद्धमुक्तनित्यादिभेदेनानेकप्रकारकश्चासाविति विविदितविवि धः । अर्थादयं जीवः प्रथमतो बद्धमुक्तनित्यसूरिभेदेन त्रिविधः, पुनश्च बद्धोप्य नेकप्रकारकः तदेकत्वे सुखित्वदुःखित्वादिव्यवस्थानुपपत्तेः । तथा जन्ममरणादि व्यवस्थाया अनुपपत्तेश्च तथा मुक्तोपि जीवोऽनेक एव । नित्यसूरयोप्यनेका एव । श्रुतिस्मृतिभ्यां तथैव प्रसिद्धेः । जीवस्यैकत्वेऽनेकत्वप्रतिपादकश्रुतिनां तदुपबृंह णपरकशास्त्राणां च नैरर्थक्यमापद्येत तस्मादनेकविध एव जीवो नत्वेकः । न च जीवैकत्वेप्युपाधिभेदादेव जन्ममरणादिव्यवस्था बद्धमुक्तादिभेदादिसर्वापिव्य वस्थोपपादिता स्यात् घटाद्युपाधिभेदेनाकाशादिव्यवस्थावदितिवाच्यम्? शरीरादे



प्रतिक्षणविनाशितया एकस्मिनपि जन्मनि भेदप्रसङ्गात् । तथा च कृशशरीरकस्य स्थौल्ये जात इति प्रतीतिस्तथा स्थूलस्य कृशत्वे मृत इति एकस्मिन्नपि जन्मनि प्रसज्येत तस्मान्नैकजीववादोऽपित्वनेकजीववाद एव श्रेयान् तदेव विविदित विविध इत्यनेन प्रदर्शितवानाचार्यः ।

पुनः कीदृशो जीवस्तत्राह-'तत् प्रियः' तस्य परमात्मनः सर्वेश्वरश्रीरामस्य प्रियोऽतिशयेन प्रेयानिति तत्प्रियः । तदुक्तं गीतायाम् 'प्रियो हि ज्ञानिनोत्यर्थमहं स च मम प्रियः' इति । अत्र ज्ञानिनामतिप्रियत्वकथनेन जीवमात्रस्य परमेश्व रप्रियताया अर्थत एव प्राप्तेः । तथा परमेश्वरः सूर्यवत् सर्वस्यापि मित्ररूप इति मित्रस्यैकस्यापरं प्रति स्वाभाविकप्रेमदर्शनेन परमेश्वरप्रियत्वस्य सुतरामेवजीवे संभवेन 'तत्प्रियः' इति कथनमाचार्याणामतिसमीचीनमेवेति तत्त्वम् ।

पुनश्च कीदृशो जीवस्तत्राह-'तत्सहायः' स जगत्कारणसर्वशक्तिमान् सर्वज्ञः परमात्मा श्रीरामः सहायः सहाय्यकारकः सखा वा यस्य स तत्सहायः पर मात्मसहायो जीवः मोक्षार्थं प्रवृत्तस्य भगवतः साहाय्येनैव तत्सिद्धेः । एष एव उ साधु कारयतीतिश्रुतेः । 'द्वासुपर्णा सयुजासखायाः समानं वृक्षं परिषस्वजाते' इत्यादौ जीवसखित्वेन भगवति प्रयोगदर्शनात्, भवति जीवः परमात्मसहायः । नात्र षष्ठी तत्पुरुषोऽपितु बहुब्रीहिः समास एवादर्तव्यः अतएव परमात्मनः सहा यको जीव इत्यर्थो न किन्तु परमात्मैव सहायको भवति यस्यैवार्थः सुष्ठुतरः ।

अथ ज्ञानानन्दादिविशेषणवैशिष्ट्यजीवस्य तदैवसार्थक्यं स्यात् यदि जीवो नित्यो भवेत् जीवस्यानित्यत्वे प्रतिक्षणोत्पादविनाशवत्वे जलबुद्बुधवत् ज्ञानादिविशेषणवैशिष्ट्याभिधानं सर्वं निरर्थकमेव भवेदित्याशंकां निराकर्तुं तस्य नित्यत्वसाधनायोपक्रमते, 'नित्यः' इति स जीवो नित्यो नत्वनित्यः प्रतिक्षणविनाशी वा 'अजोह्येकोजुषमाणोनुशेते' अजोनित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे' 'नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः' । हन्ताचेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम् । उभौ तौ न विजानीतो नायं हन्ति न हन्यत' इत्यादिश्रुतिस्मृतिभ्यां जीवस्य नित्यत्वश्रणवात् । देवदत्तो जातो मृतश्चेत्यादिव्यवहारस्तु स्वकृतकर्मोपाधिविषयको नतूपधेयविषयक इतिताद्दश प्रतीतीनां न विरोधोऽतोजीवो नित्य एवेति स्थितमित्यत्र यद्वक्तव्यं तदन्यत्र

**प्रपञ्चितमिति विरम्यते ॥१०॥**

बीजघटित अर्थ को बतलाने के बाद, 'रां रामाय नमः' यह जो छ अक्षर वाला तारक मन्त्रराज है उसका प्रथम पद जो 'र' है उस 'र' के वाच्य जो परमात्मा श्रीरामचन्द्रजी हैं उन श्रीरामजी के साथ 'अ' 'आ' 'म्' 'राम' 'आय' 'न' तथा 'म' इन अवयवों के सम्बन्ध को बतलाने के बाद अब अग्रिम श्लोक से 'म' मकार के अर्थ को बतलाने के लिए उपक्रम करते हैं **'ज्ञानानन्दस्वरूपः'** इत्यादि परमेश्वर को सर्वभाव से नमस्कार करने से विमलमतिवाले हे सुरसुरानन्द ! शास्त्रजनित परोक्ष ज्ञानवान् सज्जन विरक्त जिज्ञासु अधिकारियों के जानने के योग्य जीव को तृतीय अक्षर 'म' पद से श्रीवशिष्ठ व्यास वाल्मीकि प्रभृति महर्षियों ने कहा है। अर्थात् मन्त्र घटक तृतीय मकार का वाच्य जीवराशि है जो मुमुक्षुओं से अवश्य ज्ञातव्य है। अन्यथा जीव के स्वरूप ज्ञान के बिना मोक्षादि शास्त्र में प्रवृत्ति नहीं होगी। तो वह म पद वाच्य जीव किस प्रकार का है ? इस जिज्ञासा के उत्तर में कहते हैं **'ज्ञानानन्द स्वरूपः'** वह जीव ज्ञान तथा आनन्द स्वरूप ही हैं। न तु जड पदार्थवत् रूपरसादि मान् 'सत्यं ज्ञानमानन्दम्' 'प्रज्ञानधनः' इत्यादि श्रुति सिद्ध आनन्द स्वरूप है। तथा वह जीव अवगति ज्ञान तथा सुखादि गुणों का न्याय सिद्धान्तवत् अधिकरण है। 'ज्ञानाधिकरणमात्मा' 'ज्ञोऽत एव' इत्यादि संसिद्ध हैं। पुनः वह जीव अणु परिमाणवाला है। किन्तु शरीर परिमाणवान् नहीं है। नवा व्यापक परिमाणवान् है। यदि शरीर परिमाणवान् अर्थात् मध्यम परिमाणवान् माना जाय तब घटादिवत् अनित्य होने से स्वर्गमोक्षादि शास्त्र का वैयर्थ्य हो जायेगा। तथा व्यापक परिमाणवान् मानने पर व्यापक में क्रिया नहीं होती अतः जीवों का चन्द्रलोकादिक लोकों में गमनागमन का जो प्रतिपादन किया है वह निरर्थक हो जायेगा। अतः जीव अणु परिमाणक हैं।

जीव को अणु परिमाणक होने में श्रुति प्रमाण है 'बालाग्रशतभागस्यशतधा कल्पितस्य च। भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते' एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेश' इत्यादि। यदि अणु परिमाणक जीव को न माने तब तो अति सूक्ष्म नाडियों में जो जीव का चलन होता है ऐसा शास्त्रों में कहा है वह बाधित हो जायगा।



तथा वह जीव शरीरेन्द्रिय मन बुद्धि प्रभृतिक प्राकृत जड पदार्थों से सर्वथा भिन्न है। अर्थात् जीव शरीरादि रूप नहीं है। अन्यथा शरीरादिक के अनित्य होने से जीव भी अनित्य होगा, तब. 'जो मैंने बाल्यालस्था में माता पिता का अनुभव किया वह मैं अभि पौत्र दौहित्र का अनुभव करता हूँ। ऐसा अनुसंधान नहीं होगा, इसलिए जीव देहादि से भिन्न है। पुनः यह जीव बद्ध मुक्त नित्यसूरि भेद से अनेक है। इस विशेषण से एकात्मवाद का खंडन करने के तरफ आचार्य का आशय प्रतीत होता है। यदि जीव को एक माना जाय, तब अमुक जीव बन्धन में है, अमुक जीव मुक्त है अमुक जीव नित्यमुक्त है। यह जो विभाग श्रुति पुराणादिक में आया है। वह प्रमत्त गीत प्राय हो जायेगा। अतः जीवानेकवाद ही शास्त्र संमत है। एवं बद्ध जीवों में एकता माना जाय, तब जन्ममरण अन्धत्वादिक की व्यवस्था नहीं होगी। यहाँ 'जननमरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च। पुरुषबहुत्वं सिद्धं त्रैगुण्य विषर्य याच्चैव' इत्यादि सांख्यकारिकोक्त युक्ति का भी अनुसरण करना चाहिये।

पुन यह जीव **तत्प्रिय** है। अर्थात् परमात्मा का अत्यन्त प्रिय है। 'प्रियोहि ज्ञानिनोऽत्यर्थ महं स च मम प्रियः' इस गीता वचन के अनुसार जीव परमात्मा का परम प्रिय है। पुनः यह जीव परमात्मा सहाय है। अर्थात् परमात्मा है, सहायक जिसका एतादृश जीव है जो कि परमात्मा का अनुचर सेवक है। तथा मवाच्य जो जीव है वह नित्य है न तु करण कलेवरवत् अनित्य है। क्योंकि 'देहीनित्यमवध्योयं देहे सर्वस्य भारत' 'नैनं छिन्दन्ति शास्त्राणि नैनं दहति पावकः' 'नित्यः सर्वगतः स्था णुरचलोयं समातनः' 'अजोह्येकोजुषमाणोऽनुशेते' 'हन्ताचेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम्' उभौ तौ न विजानीतोनायं हन्ति न हन्यते' इत्यादि श्रुति स्मृति प्रमाणों से सिद्ध होता है कि जीवनित्य त्रिकाल में रहनेवाला है। और यह जीव स्वयं प्रकाश है। 'अत्रायं पुरुषः स्वयंज्जोतिर्भवति' यह श्रुति कहती है कि जीव स्वयं प्रकाश है स्वकीय स्वरूप के प्रकाशन करने में स्व प्रकाश है। और विषय का प्रतिपादन करने में इन्द्रियादि जनित धर्म ज्ञान सापेक्ष है। हे सुरसुरानन्द ! ऐसा महर्षियों ने मकार वाच्य जीव के स्वरूप को बतलाया है। तुम भी इसी प्रकार जीव स्वरूप को जानो ॥१०॥

## मवाच्योऽहं रवाच्याय शेषभूतोऽस्मि सर्वदा ।

## इतीत्थमेवबोध्यो ज्ञैर्वाक्यार्थस्तद्विवित्सया ॥११॥

अथ सम्पूर्णमन्त्रघटक 'र' आदिप्रत्येकपदार्थं पूर्वश्लोकादिभिर्निरुप्य तदनु सम्पूर्णमन्त्रस्य वाक्यार्थं बोधयितुमुपक्रमते 'म वात्योऽहं र वाच्याय' इत्यादि। अयमाशयः शाब्दबोधे घटादिपदज्ञानं करणं भवति तथा तादृशपदस्मारित पदार्थज्ञानं द्वारं भवति स्मारकत्वात् शक्त्यादिज्ञानं सहकारिकारणं भवति ततश्च शाब्दबोधात्मकं कार्यमुत्पद्यते इतिशाब्दिकानां नियमः। ततश्च पदार्थज्ञानेजाते तद्वारीकृत्य वाक्यार्थज्ञानं ततो महावाक्यार्थबोधो भवतीति प्रक्रियामाश्रित्य जगदाचार्यो मन्त्रघटकप्रत्येकपदार्थस्यार्थं कृत्वा शब्दद्वारीकृत्य समस्तमन्त्रस्य वाक्यार्थनिरूपणाय प्रक्रमते 'मवाच्योहं रवाच्याय' इत्यादि। हे सुरसुरानन्द! 'विवित्सया' पदार्थज्ञानपूर्वकसम्पूर्णमन्त्रस्य वाक्यार्थं बोधयिमुमिच्छया, ज्ञैः मन्त्रार्थज्ञानवद्भिः इतिवक्ष्यमाणप्रकारेण बोद्धव्यः। केन प्रकारेण ज्ञातव्यस्त त्राह-'मवाच्यः' इत्यादि। मवाच्यो मेन मकारात्मकमन्त्रावयवेन वाच्योऽहं जीवः, रवाच्याय मन्त्रघटकरेफात्मकवर्णेन वाच्यः तस्मै रवाच्याय सर्वशेषिणे श्रीरामचन्द्राय सर्वदा त्रिकालेपि शेषभूतोस्मि अर्थात् कुसुमदामादिवद्यथेष्टविनियोगार्हो भवामि। एवं च 'राम' इत्यत्र श्रीरामघटकपदार्थत्रयबोधपूर्वकमहावाक्यार्थो भवतीति स्पष्टीकृत इति जिज्ञासुभिर्ज्ञातव्य इत्यर्थः ॥११॥

बीज घटक प्रत्येक पद का अर्थ बतला करके इस श्लोक से सम्पूर्ण वाक्य के अर्थ को बतलाते हैं। क्योंकि वाक्यार्थ बोध में पदार्थज्ञान को कारणत्व होता है। पदार्थज्ञान होने के वाद ही वाक्यार्थ बोध होता है। क्योंकि शब्द बोध में पदज्ञान कारण होता है। तथा पदजनित पदार्थ ज्ञान व्यापार होता है। तथा शक्त्यादिरूप वृत्ति सहकारी कारण है। तब शब्द बोध रूप कार्य होता है। हे सुरसुरानन्द! सम्पूर्ण श्रीरामतारक मन्त्रराज का वाक्यार्थ जानने के लिए या शिष्यादि को जनाने के लिये महर्षि पराशरादिक महापुरुषों ने बीज के वाक्यार्थ को इस वक्ष्यमाण प्रकार से कहा है-'मवाच्योहम्' म पद वाच्य मैं अधिकारी जीव 'र' पद वाच्य सर्वशेषी परमात्मा भगवान् श्रीरामजी का शेष रूप हूँ। जैसे चन्दन वनमाला प्रभृति उपभोग्य वस्तुओं का भगवान् यथेष्ट विनियोग करते हैं उसी तरह भगवान् के उपभोगार्ह मैं भी हूँ। इस तरह प्रत्येक जीवों को परमात्मा का शेष अपने को समझना चाहिए। हे सुरसुरानन्द! तुम भी अपने को ऐसा ही मानो ॥११॥



## रामायेति चतुर्थेन श्रियादेव्यास्तु सर्वदा।
## चेतनाऽचेतनानां च रमणाश्रयतेर्यते ॥१२॥

मन्त्रराजघटकचतुर्थरामायेति पदार्थविवरितुमुपक्रमते 'रामायेति चतुर्थे ने' त्यादि। हे सुरसुरानन्द! चतुर्थेन रामायेति पदेन-

'मित्रमौपयिकं कर्तुं रामः स्थानं परिप्सता।
बधं चानिच्छता घोरं त्वयाऽसौ पुरुषर्षभः॥
विदितः सर्वधर्मज्ञः शरणागतवत्सलः।
तेन मैत्री भवतु ते यदि जीवितुमिच्छसि॥
प्रसादयस्व त्वं चैनं शरणागतवत्सलम्।'

इत्यादिरूपेण श्रीवाल्मीकिमहर्षिप्रदर्शितपथा बाहुलकात्कर्मणि क्विवन्त श्रिञ् धातोः श्रीयते ब्रह्मादिगणैः सेव्यते इति श्रीः, तथा या हिंसार्थकश्रृधातो रौणादिकडीप्रत्ययनिष्पन्नेन श्रृणाति स्वाश्रितदोषान् हिनस्तीति श्रीः यद्वा अन्तर्भावितण्यर्थात् श्रृणोतेरौणादिके ड्विप्रत्ययनिष्पन्नेन श्रावयति स्वाश्रितजन सर्वविज्ञापनादिकं वात्सल्यैकस्वरूपत्वात्स्वयं च श्रृणोतीति श्रीः, तया देव्याः विदेहजायाः, तथा चेतनाचेतनात्मकसकलजगतो रमणाश्रयता, ईर्य्यते कथ्यते सर्वदा सर्वकाले श्रीरामे अर्थात् 'रामोरमयताम्वरः' इत्यादिवचनेन श्रीसीताया रमयितृत्वं तथा स्वजातसकलजगतोपि सर्वदैव रमयितृत्वं श्रीरामेऽस्तीति चतुर्थ रामायेति पदेनोक्तं भवतीतिसारः ॥१२॥

अब आचार्यजी 'रामाय' इत्याकारक जो चतुर्थ पद है, उसके अर्थ को बतलाते हुए कहते हैं-'रामायेति चतुर्थेन' इत्यादि। हे सुरसुरानन्द! पूर्वकालिक महर्षियों ने मन्त्रघटक चतुर्थी विभक्त्यन्त चतुर्थ पद से विदेहजा श्रीसीताजी तथा समस्त जड़ चेतनात्मक हिरण्यगर्भ से लेकर के कीटपतङ्ग स्थावरात्मक प्रपञ्च को अति विलक्षण भोग्य वस्तु देने के कारण भगवान् श्रीरामजी में रमणाश्रयत्व को प्रतिपादन किया है। यह 'रामो रमयताम्वरः' इत्यादि वचनों से सिद्ध होता है ॥१२॥

## स सर्वविधबन्धुत्वं सर्वप्राप्यत्वमेव च।

**सर्व प्रापकता तेन तथा चोभयलिङ्गता ॥१३॥**

हे सुरसुरानन्द ! हिरण्यगर्भादारभ्य स्थावरान्तसकलजड़चेतनात्मक प्रपञ्चेषु, 'यः पृथिव्यां तिष्ठन्' इत्यादिश्रुतिसिद्धान्तर्यामितया सर्वान् रमयतीति यः स रामः इत्यर्थकतच्छब्देन तेन रामायेति चतुर्थ्यन्तचतुर्थपदेनैव भगवतो रामाख्येश्वरस्यैव सर्वप्रकारकबन्धुत्वं सर्वप्राप्यत्वं सर्वप्रापकत्वं च महर्षिभिः कथ्यते। तथा च तस्य रामस्योभयलिङ्गत्वं सर्वत्रावस्थितस्य सर्वदोषराहित्यं सर्वकल्याण गुणाकरत्वमेतदुभयत्वमपि कथ्यते । अर्थात् प्रत्युपकाराननपेक्षतया सर्वस्य बन्धुः तथा सर्वप्राप्यः सर्वस्य मोक्षादिप्रापको भगवान् श्रीराम एवेति चतुर्थेन रामायेति पदेन कथितं भवतीति श्रीपराशरादिका वदन्तीतिभावः प्रकृतोभय-लिङ्गत्वमन्यत्रप्रपञ्चयिष्यते इतिदिक् ॥१३॥

हे सुरसुरानन्द ! चतुर्थ्यन्त मन्त्रघटक जो चतुर्थ '**रामाय**' पद है उससे सर्वान्तर्यामी होकर के सकल स्थावरजङ्गमात्मक प्रपञ्च को आनन्द देनेवाले भगवान् श्रीराम का बोधक रामाय इस पद से भगवान् श्रीरामजी में सर्वप्रकारक बन्धुत्व सर्वप्राप्यत्व तथा सर्वमोक्षादिफलप्रापकत्व बोधित होता है ऐसा ऋषि लोग कहते हैं तथा उसी चतुर्थ्यन्त **रामाय** इस पद से भगवान् श्रीरामजी में उभयलिङ्गत्व भी प्रतिपादित होता है । अर्थात् सर्वान्तर्यामी होने के कारण सर्वत्र अवस्थित होने पर भी भगवान् में प्राकृत सकल दोष रहितत्व तथा सकल हेयप्रत्यनीक मङ्गल गुणाकरत्व रूप उभय लिङ्गत्व भी सिद्ध होता है ॥१३॥

**उच्यते तत्पदेनैव सच्चिदानन्दरूपता ।**
**यावद्विभूतिनेतृत्वं श्रीरामब्रह्मणो मतम् ॥१४॥**

**अनेन चतुर्थ्यन्त** रामायेति तत्पदेनैव भगवतः परब्रह्मरूपस्य श्रीरामस्य सच्चिदानन्दरूपत्वं कथितं भवति, तथा तेनैव चतुर्थ्यन्तेन रामायेति पदेन यावद्विभूतिनेतृत्वं नायकत्वमपि कथितं भवति । अर्थात् 'रमन्ते योगीनो यस्मिन् सत्यानन्दे चिदात्मनि । इति रामपदेनासौ परंब्रह्माभिधीयते' इत्यादि श्रीरामतापनीयादिश्रुतिस्तथा 'सत्यंज्ञानमानन्दं ब्रह्म' 'प्रज्ञानं ब्रह्म' इत्यादि श्रुतिप्रतिपादिताया सत्यज्ञानादिरूपता भगवती विद्यते सा रामायेति पदेन तस्मिन् श्रीरामे एवाभिव्यञ्जिता । एवं लीलाविभूतिभोगविभूतिप्रकृतत्रिपाद्विभूतेर्नायकत्वमपि भगवतो रामस्य परब्रह्मरूपस्य प्रतिपाद्यते श्रीरामविभूतिस्वरूपन्तु श्रीबोधायन मतादर्शादवधेयम् ॥१४॥



'रमन्ते योगिनोऽनन्ते सत्यानन्दे चिदात्मनि । इति रामपदेनासौ परं ब्रह्माभिधीयते' [जिस अनन्त सच्चिदानन्द परमात्मा में योगी लोक रमण करते हैं। इस कारण से श्रीरामपद के परम ब्रह्म परमात्मा ही कहे जाते हैं ।] एतदर्थक श्रीरामाय इस चतुर्थ्यन्त रामपद से परब्रह्म श्रीरामजी में सच्चिदानन्दत्व का कथन किया जाता है । एवं, 'सत्यं ज्ञानमानन्दंब्रह्म' इत्यादि अनेक श्रुति स्मृत्यादि सिद्ध सच्चिदानन्द रूपता का श्रीरामजी में चतुर्थ्यन्त रामाय पद से बोधित होता है। तथा लीलाविभूति सहित त्रिपाद विभूति का नायकत्व भी रामाय पद से श्रीरामजी में कहा जाता है ॥१४॥

**रागादि कारणे बन्धौ तेनैव विनिवर्त्यते ।**
**बन्धुत्त्वप्रतिपत्तिश्च भासमाना विचारतः ॥१५॥**

हे सुरसुरानन्द ! अविचारितो मिथ्याज्ञानेन यथा शुक्तिकादौ स्वेच्छेऽधिकरणे रजतं प्रतिभासमानं भवति वस्तुतस्तु न तत्र रजतम् । तथैव बन्धौ भ्रातृपुत्रकलत्रादिबान्धवेषुरागादिकारणवशात् जायमानबन्धुत्वप्रकारको निश्चयः तेनैव सर्वप्रकारकश्रीरामे बन्धुत्वप्रतिपादकेनैव चतुर्थ्यन्त रामायेति पदेनैव विनिवर्त्यते पराक्रियते । अयं भावो यथा रज्वादौ रज्जुत्वाज्ञानेन सर्पबुद्धिर्भवति, तावदेवयावदज्ञानं भवति जातेतु वस्तुतत्वज्ञानेऽज्ञानवलप्राप्तं रज्जु तदीयज्ञानं च स्वकारणज्ञानविनाशाद्विनिवृत्तं भवति, तथैव प्रकृतमिथ्याज्ञान मूलरागादिकारणजनितपुत्रकलत्रादिषु जायमानबुधुत्वज्ञानं चतुर्थ्यन्त श्रीरामपदेनैव विनिवारितं भवति । यतश्चतुर्थ्यन्तश्रीरामपदं सर्वप्रकारकबन्धुत्वं श्रीराम भिन्ने विनिवारयत् श्रीरामे एव प्रतिपादयतीति श्रीरामादन्यत्र भार्यापुत्रादौ मिथ्या ज्ञानेन संजातबन्धुत्वंप्रति कारणाभावात्स्वयमेव निवर्तते ॥१५॥

हे सुरसुरानन्द ! रागादि के कारण से माता पिता पुत्र कलत्रादिक स्वजनों में विचार के बिना अर्थात् अज्ञान मूलक जो बन्धुत्व स्वकीयत्व ज्ञान है वह भगवान् श्रीराम में सर्वप्रकारक बन्धुत्व प्रतिपादक रामाय इस चतुर्थ्यन्त पद से विनिवृत्त हो

जाता है अर्थात् भगवान् श्रीराम ही सर्वप्रकारक बन्धु है इसका प्रतिपादक **रामाय** पद से अविचार द्वारा जायमान कलत्रादि में बन्धुत्व व्यापार निवृत्त हो जाता है ॥१५॥

**तच्चतुर्थ्या सानुरूपकैंकर्यप्रार्थनोच्यते ।**
**विषयान्तरसेवापि प्राप्ता सा विनिवर्त्त्यते ॥१६॥**

अथ चतुर्थीविभक्त्यन्तरामपदेन श्रीरामे सर्वविधवन्धुत्वं प्रतिपाद्य तथा तदन्यकलत्रपुत्रादौ रागप्राप्तबन्धुत्वमपि विनिवर्त्य संप्रति श्रीरामपदोत्तरश्रूयकाण चतुर्थी विभक्त्या यदुच्यते तत्प्रदर्शयितुमुपक्रमते तच्चतुर्थ्या सानुरूपेत्यादि । चतुर्थ्या श्रीरामपदोत्तरश्रूयमाणचतुर्थ्येकवचनङेविभक्त्या 'सानुरूपकैङ्कर्य प्रार्थना' अर्थात् जीवस्याधिकारानुगुणप्राप्ता या सर्वप्रकारकबन्धुरूपश्रीराम परब्रह्मणः कैङ्कर्य सेवा तस्याः समुत्कृष्टप्रार्थानायाः स्वरूपं तेनैव प्रतिपाद्यते, यावान्ममाधिकारस्तदनुकूलं भगवत्सेवा मे भवतु इति प्रार्थनैव चतुर्थ्या निर्दिष्टा भवति । यद्यपि 'सेवाश्ववृत्तिराख्याता तस्मात्तां परिवर्जयेत्' इत्यादिना सेवा-कार्यस्य निषेधात् तादृशसेवाया विधानं नोचितम्, तथापि भगवत्सेवाभिन्न सेवाया एव यथोक्तस्मृत्या निषेधात् 'अयाज्ययाजनं कृत्वा जायते ग्राम्यशूकारः' इतिवत् । तथा रागवशात् विषयान्तरे श्रीरामव्यतिरिक्तब्रह्मेन्द्रादिप्रभृतिनां देवता न्तराणामितरमनुष्यादीनाञ्च या सेवा प्राप्ता सापि चतुर्थीविभक्त्या विनिवार्यते । अर्थात् यदि सेवाकरणीया तदा सर्वप्रकारबन्धुरूपस्य सर्वनियामकसर्वेश्वरश्री रामस्यैव तदन्यदेवतादीनां सेवा नकर्त्तव्येति नियमविधिः फलति । श्रीरामसेवा या विधिबोधितत्वात्तदन्यसेवाया रागप्राप्तत्वादिति सा विषयान्तरसेवा निवर्त्य ते । अतो निराहृत्य मातापितरं प्रवजन्ति श्रीरामभक्ताः 'रामं दशरथं विद्धि मां विद्धि जनकात्मजाम् । यश्च रामं न पश्येत्तु यञ्च रामो न पश्यति । निन्दितः स भवेल्लोके स्वात्माप्येनं निगर्हते, इत्यादिश्रीवाल्मीकीयश्रीमद्रामायणोक्तेः ॥१६॥

**रामाय** घटक प्रकृतिभूत श्रीरामपद से भगवान् श्रीरामजी में सर्वविधबन्धुत्व का तथा तदन्य माता-पिता में रागप्राप्त बन्धुत्व की निवृत्ति का प्रतिपादन करके तदनन्तर श्रीराम पदोत्तर श्रूयमाण चतुर्थी विभक्ति से जिस वस्तु का प्रतिपादन होता है उस वस्तु का प्रतिपादन करने के लिए उपक्रम करते हैं **'तच्चतुर्थ्या सानु रूपेत्यादि ।'** राम पदोत्तर श्रूयमाण चतुर्थी विभक्ति से अर्थात् चतुर्थ्येक वचन ङे



प्रत्यय से **स्वानुरूप कैङ्कर्य** की प्रार्थना का अर्थात् स्वकीय अधिकार के अनुकूल नतु प्रतिकूल परम ब्रह्म परमात्मा श्रीरामजी के अनूरूप कैंकर्य की प्रार्थना याचना का प्रतिपादन किया जाता है । तथा श्रीराम भिन्न ब्रह्मादिक देवों का रागवशात् प्राप्त जो सेवा तादृश सेवा का निवर्तन किया जाता है । अतएव भगवान् के अनन्य प्राचीन कालिक तथा वर्तमान में भी अनेकों महात्मागण ब्रह्मादिक देवों की तो क्या कथा ? माता-पिता की रागतः प्राप्त सेवा का परित्याग करके प्रव्रजित हो गये तथा होते हैं । तदुक्तं 'प्रव्रजन्त्यकृतोद्वाहा परवैराग्यमाश्रिताः' इत्यादि । अर्थात् **रामाय** यहाँ चतुर्थी विभक्ति जो है वह श्रीरामातिरिक्त वस्तु में प्राप्त सेवा की निवृत्ति का प्रतिपादन करती हुई सार्थिका होती है । इस विषय का विशेष निरूपण अन्यत्र किया जायगा यहां केवल निदर्शन मात्र है ॥१६॥

**पदेन नेनात्रतु पञ्चमेन प्रकथ्यतेऽथो तदनन्यशेषता ।**
**हेयं तदन्यार्थ्यमपि स्वतन्त्रता निवर्त्यतेऽतःसततं स्वकीया ।१७।**

रामायेति पदपर्यन्तपदानां व्याख्यानं कृत्वा नमः पदस्य सखण्डतामवलं व्य पञ्चम नमः घटक 'न' पदस्यार्थं विवरितुमुपक्रमते 'पदेननेनात्रतुपञ्चमेन' इत्यादि । अथ रां रामाय चतुर्थपदस्य ङे विभक्तिरूपस्यार्थकरणानन्तरम् पञ्च मेन नेन नकारेण अर्थात् नमः पूर्वाक्षरनकारेण तदनन्यशेषता कथ्यते, न अन्य स्य शेषस्तदनन्यशेषः तस्य भगवतो रामस्यानन्यशेषस्तदनन्यशेषस्तस्य भावस्त दन्यशेषतेति कथ्यते हेयं त्याज्यं तदन्यार्थं तदन्यप्रयोजनकत्वम् त्याज्यमिति कथ्यते । अतः स्वकीया स्वतन्त्रता सततं सर्वदैव सर्वत्रापि यथास्यात् निवर्त्यते जीवस्य स्वकीयशरीरादावपि स्वातन्त्र्यं विनिवर्तितं भवति । यदिदं मम देहगेहा दिकं तत्सर्वं भगवत एव न तत्रमनागपि स्वातन्त्र्यमस्तीति निषेधार्थकनञा वोध्यते ।

'भजामि सीतापतिमेव केवलम् रटामि सीतापतिमेव केवलम् ।
श्रयामि सीतापतिमेव केवलम् प्रयामि सीतापतिमेव केवलम् ॥'

इत्याचार्योक्तेर्व्यज्यते ॥१७॥

षडक्षर महामन्त्र घटक नमः में यहाँ पाँचवां अक्षर जो न है उसका अर्थ बतलाने के लिए उपक्रम करते हैं **'पदेन नेनात्र तु पञ्चमेन'** इत्यादि ।

हे सुरसुरानन्द प्राचीन महर्षियों ने पाँचवां पद जो 'न' है उससे जीव को परब्रह्म भगवान् श्रीरामजी के तदनन्य शेषतारूप से एकमात्र विनियोग के योग्य कहा है। तथा उनसे अतिरिक्तों के प्रयोजन को त्याज्य बतलाया है। इसलिए स्वकीय स्वतन्त्रता का सर्वदा निराकरण किया है। अर्थात् जीव की स्वतन्त्रता नहीं है ॥१७॥

**पदेन षष्ठेन म इत्यनेन स्वस्वाम्यनन्यार्हकशेषतापि ।**
**समुच्यते चेतन वाचिना तु तत्किङ्करत्वैकफलत्वमेव ॥१८॥**

चेतनवाचिना-चैतन्यं धर्मज्ञानं तादृशधर्मज्ञानं घटादिविषयकं विद्यते यस्य स चेतोऽज्ञानाधिकरणं जीवः तादृशजीवस्य वाचकेन बोधकनमः पदघटकेन षष्ठेन मकारात्मकेन मन्त्रस्थपदेन, स्वस्वाम्यनन्यार्हकशेषतापि समुच्यते प्रज्ञाप्यते स्वस्य जीवस्य स्वाम्यनन्यार्हशेषता अर्थात् परमेश्वरानन्यार्हशेषत्वं जीवस्य प्रतिपादितं भवति । परमेश्वरमात्रस्य शेषता जीवेऽस्ति न तदन्यस्य शेषतेत्यर्थः । एतादृशानन्यार्हशेषताजीवनिष्ठा षष्ठ पदेन बोधिता भवतीति । ततो भगवत् किङ्करैकफलत्वमेव तस्य परमेश्वरस्य किङ्करः तत्किङ्करः तस्यभावस्तत्वम् तदेवैकं मुख्यं फलं यस्य जीवस्य स तथा, तस्यभावस्तत् किङ्करैकत्वफलत्वमिति एवशब्देनान्यकैङ्कर्यं व्यवच्छिद्यते ॥१८॥

हे सुरसुरानन्द ! प्राचीन आचार्य लोग चेतन जो जीव तादृश जीव का वाचक जो छठवां 'मः' पद उससे जीवमात्र को भगवान् श्रीसीतानाथजी का कैङ्कर्यत्व सेवकत्व ही एकमुख्य फल-प्रयोजन मानते हैं । इसी को स्वस्वामिभाव निरूपित अनन्यार्ह शेषता कहते हैं । अर्थात् यह जो जीव है वह अन्य का नहीं किन्तु केवल भगवान् श्रीरामजी का ही विनियोग्य है ॥१८॥

**उपयार्थपरेणासावखण्डनमसोच्यते ।**
**उपायो हि मवाच्यस्य रवाच्यो राम एव सः ॥१९॥**

नमः शब्दस्य सखण्डतामवबुध्य तत्र नकारमकारयोः पञ्चमषष्ठपदयोरर्थं प्रदर्श्य नमः शब्दस्याखण्डार्थत्वे तदर्थं प्रतिपादयितुमाह-'उपयार्थपरेण' इत्यादि । हे सुरसुरानन्द ! अखण्डनमः शब्दस्योपायार्थवाचकत्वम्, तत्र उपायः कारणमसावर्थश्चेत्युपायार्थः तत्परः तद्बोधनेच्छया समुच्चारितस्तादृशेनोपायार्थपरेण



उपायार्थबोधकेन, अखण्डनमः पदेन म वाच्य जीवस्य र पदवाच्य जीवराशेः, असौ सकलकारणीभूतः श्रीराम एव इहलौकिकपारलौकिकसाध्यस्योपायः साधनम् नतु तदतिरिक्तः क्रियामात्रस्य कारणम् । एतादृशोपायत्वं हीति निश्चयेन प्रतिपादितं भवति । अपि च 'रां' इत्यनेनानन्यार्हशेषता 'रामाय' इत्यनेनानन्य भोग्यत्वं 'नमः शब्देन चानन्योपायत्वं कथितं भवति एवं च मपदवाच्यो जीवः श्रीरामायैव नान्यार्थः परमेश्वरभोग्यभूतस्तच्छेषभूतस्तदीयदास इत्येवं विजानीयात् । यद्यपि दासपदं शूद्रवाचकं न तु ब्राह्मणादेः । दासनाम तु शूद्राणामिति वचनादितिचेत् 'दासोऽहंकौशलेन्द्रस्य रामस्याऽक्लिष्टकर्मणः । हनुमान् शत्रु-सैन्यानां निहन्ता मारुतात्मजः' इतिश्रीमद्रामायणे तथा 'ब्रह्मदासा ब्रह्मदासा' ब्रह्म मे कितवाः' अथर्व ब्रह्मसूक्ते षष्ठाध्याये 'अरं दासो न मीढुषे पराण्याहं देवाय भूर्णयेऽनागाः' इत्यादिश्रुत्या च सर्वेश्वर श्रीरामदासातिरिक्तपरकत्वात्तस्येतिदिक् ॥१९॥

नमः शब्द को सखण्ड भी माना जाता है तथा अखण्ड भी मानते हैं । इसमें नमः शब्द को सखण्ड अर्थात् न. अलग पद है तथा मस् अलग पद है । उसमें न पद पाँचवां है मस्. पद छठा है । इसमें सखण्ड नमः पद के अर्थ को बतला करके अखण्ड नमः पद का क्या अर्थ है उसको बतलाते हैं-'**उपायार्थपरेण**' इत्यादि । हे सुरसुरानन्द ! उपायार्थपरक साधनरूप अर्थ का वाचक अखण्ड नमः पद से सवका प्रतिपालक रक्षक भगवान् श्रीरामजी को ही म. पद प्रतिपाद्य जीव का उपाय कहते हैं । अर्थात् जीव का जितना कोई कार्य है ऐहिक वा पारलौकिक उन सबका साधन भगवान् श्रीरामजी ही हैं ऐसा प्राचीन महर्षिलोग कहते हैं ॥१९॥

**बीजेनैवाथ जीवस्य स्वरूपं प्रतिपाद्यते ।**
**रामायेति परस्यापि चतुर्थ्या तत्फलस्य च ॥२०॥**

एतावता प्रकरणेनोपर्युक्तकथितार्थस्योपसंहाररूपेण श्लोकद्वयेनार्थपञ्चकस्वरूपप्रदर्शनं करोति 'बीजेनैवाथ जीवस्य' इत्यादि । अथ अनन्तरं षडक्षर मन्त्रराजघटकबीजेन 'रां' इत्यनेन जीवस्याधिकारिणः स्वरूपं प्रतिपाद्यते चित्पदार्थस्य करणकलेवरादिभिन्नं ज्ञानानन्दादिमयं यत्स्वरूपं तदेव प्रतिपादितं भवति । अथ च रामायेति चतुर्थ्यन्तपदावयव राम घटकप्रकृतपदेन परस्य श्रीरा

मात्मकपरमेश्वरस्य 'ज्ञानानन्दमयोऽमलः' इत्यादिवचनसिद्धं यत् सकलेतर विलक्षणं समाभ्यधिकविवर्जितं स्वरूपं तत्प्रतिपाद्यते । तथा रामायेत्यत्र विद्य मानचतुर्थीविभक्त्या तत्फलस्य जीवकृतकर्मणः फलं पुण्यपापादिकं सुख दुःखादिकञ्च प्रतिपादितुं भवति ॥२०॥

**उपायस्य त्वखण्डेन नमः खण्डेन चोच्यते ।**

**सखण्डेन मकारेण षष्ठ्यन्तेन विरोधिनः ॥२१॥**

अथ अखण्डेन नमः शब्देनोपायस्य भगवत्प्राप्तिसाधनस्य भक्तिप्रपत्त्या देः स्वरूपं प्रतिपादितं भवति । तथा नमः पदस्य सखण्डत्वे सखण्डे नमः पदे विद्यमानषष्ठ्यन्तमकारेण विरोधिनो भगवत्प्राप्तिविरोधिनोऽहङ्कारममकारादेः स्वरूपं प्रतिपादितं भवति । तथा च बीजादितत्तत्पदेन चेतनजीवेश्वरतत्प्राप्त्यु पायफलविरोधिरूपपदार्थपञ्चकस्य प्रतिपादनं श्लोकद्वयेनकृतमिति संक्षेपः । एतदीयप्रपञ्चस्तुपण्डितसम्राट् स्वामीश्रीवैष्णवाचार्यकृतार्थपञ्चकग्रन्थतोऽनु- सन्धेयः ॥२१॥

हे सुरसुरानन्द महर्षियों ने कहा है कि षडक्षर जो **'रां रामाय नमः'** मन्त्रराज है तद्घटक जो **'रां'** इत्याकारक बीज है । तादृश बीज से जीव के स्वरूप का प्रतिपादन होता है । तथा **रामाय** में जो प्रकृतिरूप श्रीरामपद है तादृश श्रीरामपद से परब्रह्म परमात्मा श्रीरामजी के स्वरूप का प्रतिपादन होता है । और श्रीरामपदोत्तर विद्यमान जो चतुर्थीविभक्ति है उससे जीव द्वारा सम्पादित जो शुभाशुभ कर्म हैं उनके फल के स्वरूप का प्रतिपादन होता है । तथा अखण्ड **नमः** पद से उपाय का भगवत् प्राप्ति में जो साधन हैं भक्ति प्रपत्ति वगैरह उसके स्वरूप का प्रतिपादन किया जाता है । और **नमः** पद को सखण्डता पक्ष में नमः पद घटक षष्ठ्यन्त मकार से भगवान् की प्राप्ति में जो विरोधी अहङ्कार ममकार हैं उनका स्वरूप प्रतिपादित होता है ॥२०।२१॥

**तात्पर्याथोऽशेषवेदशास्त्राभिरुचिसंश्रयः ।**

**वाक्यार्थः प्राप्यसम्बन्धिः स्वरूपाभिनिरूपणम् ॥२२॥**

**तारकस्यप्रधानार्थः स्वस्वरूपनिरूपणम् ।**



**सम्बन्धस्यानुसन्धानमनुसन्ध्यर्थ इष्यते ॥२३॥**

योऽयं तारकाख्यो मन्त्रराजः तस्यतात्पर्यार्थः कः को वा वाक्यार्थः ? कश्च प्रधानार्थः ? को वा अनुसन्धानार्थ इत्यपेक्षायां प्रथमतो मन्त्रराजस्य षट् पदार्थान् अर्थपञ्चकञ्च प्रदर्श्य तात्पर्यार्थादिकं दर्शयितुं प्रकरणमुपसंहरन्नाह-तात्प र्यार्थोऽशेषवेदेत्यादि । तारकषडक्षरमन्त्रराजस्य तात्पर्यार्थः 'अशेषवेदशास्त्राभि रुचिसंश्रयः, अशेषाणां सर्वेषां वेदानां तदनुयायिनां शास्त्राणां हितानुशासका नाम् । अभिरुचेरभिप्रायस्य संश्रयः एव तारकमन्त्रराजस्य तात्पर्यार्थ इष्यते । एवं प्राप्यस्य जीवेनेति शेषः श्रीरामचन्द्रस्य यद्विलक्षणं ज्ञानानन्दमयलक्षणं स्वरूपं तादृशस्य निरूपणं प्रतिपादनमेव तारकषडक्षरमन्त्रराजस्य वाक्यार्थो ज्ञा तव्यः, भगवत्स्वरूपप्रतिपादनमेव वाक्यार्थः । तथा स्वस्वरूपस्य ईश्वरशेषरूप जीवस्वरूपस्य करणकलेवरादिविलक्षणस्य निरूपणं प्रतिपादनमेव मन्त्रराज स्य प्रधानार्थ इष्यते । एवं जीवस्य तथा परमात्मनश्चैतदुभयोरनेकप्रकारक सम्बन्धस्यात्मात्मीयादिकस्य कथितप्रायस्य सम्बन्धस्यानुसन्धानमेवानुसन्धेयार्थ इष्यते ।

तदत्र जगद्गुरुश्रीगङ्गाधराचार्यकृतश्लोकानुसन्धेयाः-

**'सर्वेषां वेदशास्त्राणां रुचेश्च संश्रयो हि यः ।**
**स एव मन्त्रराजस्य तात्पर्यार्थो मतो बुधैः ॥**
**प्राप्यस्य रामचन्द्रस्य स्वरूपस्य निरूपणम् ।**
**वाच्यार्थो राममन्त्रस्य रहस्यज्ञैः प्रभाषितः ॥**
**जीवात्मनः स्वरूपस्य यच्चात्र प्रतिपादनम् ।**
**तदेव मन्त्रराजस्य प्रधानार्थतया मतम् ॥**
**सम्बन्धार्थावबोधो यो जीवात्मपरमात्मनोः ।**
**तत्र हि मन्त्रराजस्यानुसन्धानार्थता मता ।** इति ॥२२-२३॥

गत प्रकरण से तारकमन्त्रराज, 'रां रामाय नमः' इसके छ पदार्थ का तथा पाँच संक्षिप्त पदार्थ का निर्वचन करके अग्रिम श्लोकद्वय से तारकमन्त्रराज का तात्पर्यार्थ वाक्यार्थ प्रधानार्थ तथा अनुसन्धानादिक अर्थ को बतलाने के लिए उपक्रम करते हैं **तात्पर्यार्थ** इत्यादि हे सुरसुरानन्द ! महर्षिलोग कहते हैं कि-सकल वेद तथा

तदनुयायि शास्त्र हितानुशासकों को जो अभिरुचि है तादृश अभिप्राय विशेष का आश्रय ही मन्त्रराज का तात्पर्यार्थ है । अर्थात् सकल वेद स्मृति इतिहास पुराणों का पर्यवसान जिसमें है वही षडक्षर मन्त्र का तात्पर्यार्थ है । और परमप्राप्य सर्वेश्वर भगवान् श्रीराम जी षडक्षर तारक महामन्त्र का वाक्यार्थ हैं । तथा जीव का जो देहादि विलक्षण स्वरूप है उसका समुचित रूपसे प्रतिपादन करना यही मन्त्रराज का प्रधान अर्थ है । एवं जीवात्मा तथा परमात्मा के जो अनेक प्रकारक शेषशेषीभावादिक पूर्व प्रदर्शित सम्बन्ध हैं, उन सम्बन्धों का अनुसन्धान करना ही मन्त्रराज का अनुसन्धेयार्थ है । इसप्रकार से प्राचीनाचार्य लोग निरूपण करते हैं ॥२२।२३॥

卐 अथ मन्त्ररत्नरहस्यम् 卐

**उक्त्वेत्थं तारकार्थं तु द्वयार्थः प्रतिपाद्यते ।**
**विमत्सराः प्रपश्यन्तु प्रगृह्णन्त्ववयन्तु च ॥२४॥**

**अथ प्रथमरहस्यान्तर्गततारकमन्त्रस्य विशदरूपेणार्थं प्रतिपाद्य द्वितीय रहस्यं व्याख्यातुमुपक्रमते । अर्थात् प्रथमे रहस्ये** 'जाप्यस्तत्तारकाख्य' इत्यारभ्य **तारकस्य प्रधानार्थप्रतिपादकान्तप्रकरणं विशेषरूपेण प्रतिपाद्य तदनन्तरं द्वयमन्त्र स्य विस्तररूपेणार्थं दर्शयितुमुपक्रमते** 'उक्त्वेत्थम्' इत्यादि । **इत्थं पूर्वकथितप्र कारेण तारकार्थम् तारकाख्यषडक्षरमन्त्रराजस्य विस्तृतरूपेणार्थमुक्त्वा कथ यित्वा तु पुनः द्वयार्थः द्वयनामकमन्त्रस्यार्थो विस्तृतरूपेण प्रतिपाद्यते कथ्यते तदुक्तं द्वयमन्त्रार्थं विमत्सराः सर्वथामत्सररहिताः सरलहृदयाः द्वेषरहिता इत्यर्थः प्रपश्यन्तु समीचीनतया** जानन्तु **विचारयन्तु ततस्तमेवार्थं गृह्णन्तु स्वीकुर्वन्तु । तथा तमेवार्थम् अवयन्तु तस्यैव ध्यानं कुर्वन्तु तदुक्तं**-'श्रीमद्रामचन्द्रचरणौ शरणं प्रपद्ये श्रीमते रामचन्द्राय नमः' **इति श्रीरामद्वयाख्यमन्त्रस्यार्थम् विचारयन्तु स्वी कुर्वन्तु स्वीकृत्य तदर्थस्य ध्यानं कुर्वन्तु स्वजीवनं सफलयन्तु च ॥२४॥**

परमपूज्य चरण श्रीरामानन्दाचार्यजी महाराज **'जाप्यस्तत्तारकाख्य'** यहाँ से प्रारंभ करके, तारक प्रधानार्थ एतत्पर्यन्त प्रकरण से षडक्षर मन्त्रराज का विशद व्याख्यान करके तदनन्तर **'श्रीमद्रामचन्द्रचरणौ शरणं प्रपद्ये श्रीमते रामचन्द्राय नमः'** इस द्वय मन्त्र का विस्तृत व्याख्यान करने के लिए उपक्रम करते हैं- **'उक्त्वेत्थम्'** इत्यादि । हे सुरसुरानन्द ! **'जाप्यस्तत्तारकाख्यः'** यहाँ से लेकर



'तारकस्यप्रधानार्थः' एतदन्त श्लोकों से षडक्षर **'रां रामाय नमः'** इस मन्त्रराज के अर्थ का प्रतिपादन किया अब द्वयमन्त्र **'श्रीमद्रामचन्द्रचरणौ शरणं प्रपद्ये श्रीमते रामचन्द्राय नमः'** के अर्थ का मैं प्रतिपादन करता हूँ । अतः विमत्सर रागद्वेषरहित होकर के द्वयमन्त्र के अर्थ को जानो तथा जान करके उस मन्त्र का ग्रहण करो और उस मन्त्र से प्रतिपाद्य इष्टदेव का ध्यान करो मन्त्र का निरन्तर जप करो अर्थात् श्रवण मनन निदिध्यासन करो ॥२४॥

**श्रीरामद्वयमन्त्रमद्भुततमं वाक्यद्वयंषट्पदम्**
**वाणाक्षिप्रमिताक्षरन्तु खलु विद्धित्वंदशार्थान्वितम् ।**
**युक्तं तत्त्रिपदैस्तु तत्र सुमते पूर्वं शुभस्यास्पदं**
**वाक्यं पञ्चदशाक्षरं तदनुदिग्वर्णात्मकं तूत्तरम् ॥२५॥**

**वक्ष्यमाणद्वयमन्त्रघटकवाक्यपदवर्णादिनां तत्र न्यूनाधिकतानिरासाय तथा तेषां वर्णादिनां स्वरूपविज्ञापनाय तद्धटकवाक्यादीन् दर्शयितुमुपक्रमते** 'श्रीरामद्वय' इत्यादि । **हेसुमते सुरसुरानन्द ! त्वं श्रीरामद्वयमन्त्रमुक्तस्वरूपकं खलुनिश्चयेन वाक्यद्वयं विद्धि । कीदृशं वाक्यद्वयं तत्राह षट्पदयुक्तम् अर्थात् षट् संख्याकानि पदानि यस्मिन् वर्तमानानि सन्ति तादृशम् बाणाक्षिभिः पञ्चविंशतिसंख्यया प्रमितानि संमितानि अक्षराणि यस्मिन् तत् बाणाक्षिप्रमिता क्षरम् पञ्चविंशतिवर्णघटितानीत्यर्थः । तथा दशार्थान्वितम्पुरुषकारलक्षणश्रीसी तादिभिर्दशभिरर्थैर्युक्तमिति दशार्थान्वितम् । तत्र द्वयोर्वाक्ययोर्मध्ये आद्यं यद्वाक्यम्** श्रीमद्रामचन्द्रचरणौ शरणं प्रपद्ये' **इत्याकारकम् तत् पञ्चदशवर्णैर्घटि तम् । तथा श्रीसीतादिदशभिरर्थैः समन्वितम् । सुवन्ततिङन्तसमुदायात्मकं पूर्वार्द्धं तत्त्रिभिः पदैरन्वितं तद्विशिष्टम् । पुनः कीदृशं पूर्ववाक्यम् तत्राह पञ्चदशव र्णैयुक्तम् । तथा शुभास्पदं शुभस्यमोक्षस्यास्पदं स्थानम् । तदनुतत्पश्चात् विद्य मानं** श्रीमतेरामचन्द्राय नमः **इति तु दिग्वर्णात्मकम् दशसंख्याकवर्णेन युक्तं शुभास्पदं च भवतीतिसारः ॥२५॥**

इसके बाद द्वयमन्त्र घटक तत्तद्वर्ण तथा वर्णसमुदाय पद के अर्थ को बतला करके मन्त्र में अवश्य ग्राह्यत्व को बतलाने के लिए कहते हैं-श्रीरामद्वयमन्त्रेत्यादि

हे सुतीक्ष्ण बुद्धिक सुरसुरानन्द ! सकल श्रुतिस्मृति प्रभृतिक शास्त्र समुदाय के वास्तविक अभिप्राय को जाननेवाले सांप्रदायिक महापुरुष कहते हैं कि दो वाक्य छः पद पञ्चविंशति वर्णो से द्वय मन्त्र युक्त है। और जिस में श्रीसीताजी पुरुषकार का अर्थ रूपसे है। उनका भगवान् श्रीरामचन्द्रजी के साथ में नित्य संबन्ध है। इत्यादि दश अर्थ से युक्त है। तो परमकारण भगवान् के चरणकमल में मन को लगा देने के कारण बहुत शीघ्र अधिकारी को अत्याश्चर्योत्पाद इस द्वय मन्त्र से निदर्शन प्राप्त हो जाता है ऐसा महर्षिगण ने कहा है।

जिस भगवान् श्रीरामजी के आश्चर्यजनक द्वयमन्त्र मे दो वाक्य है उन में से एक तो '**श्रीमद्रामचन्द्रचरणौ शरणं प्रपद्ये**' यह है। तथा द्वितीय वाक्य है '**श्रीमते रामचन्द्राय नमः**' इन द्वयमन्त्र में जो प्रथम वाक्य है वह शुभगुण-मोक्ष का आश्रय स्थान है। तीन पद से युक्त है तथा पन्द्रह अक्षर वर्णवाला है। तथा जो द्वितीयवाक्य है वह भी तीन पद तथा दश अक्षरवाला है। शुभगुण मोक्ष का स्थान आश्रय है ऐसा तुम समझो, इसमें श्रद्धा करो ॥२५॥

## सर्वाधीशेश्वरस्याप्तिर्हेतुरत्राभिधीयते ।
## सीतापुरुषकारार्था श्रीत्यनेन पदेन तु ॥२६॥

अथ द्वयमन्त्रगतवाक्यपदवर्णविभागं पूर्वं प्रदर्शितवान् तदनुवाक्यार्थज्ञाने पदार्थज्ञानस्य कारणत्वस्यान्यत्रावधारितत्वेन वाक्यार्थबोधोत्पादनाय तादृशवाक्यान्तर्गततत्तत्पदानामर्थं प्रतिपादयितुमाह-'सर्वाधीशेत्यादि । अयमाशयः 'पदज्ञानंतु करणं द्वारं तत्र पदार्थधीः । शाद्बबोधः फलं तत्र शक्तिधीः सहकारिणी' इतिनियमः । शाद्बबोधात्मककार्योत्पादनाय प्रथमं पदज्ञानम्, तत एकसम्बन्धिज्ञानमपरसम्बन्धिनं बोधयतीति घटादिपदज्ञानात् कंवुग्रीवादिमत्वरूपार्थस्योपस्थितिर्जायते, ततः आकांक्षायोग्यतादिकरणबलेन वाक्यार्थज्ञानरूप शाब्दबोधः समुत्पद्यते । पदज्ञानात् यत्पदार्थोपस्थितिः सा वृत्तिज्ञानसहकृतपदजन्यैव अन्यथा घटादिपदेन कारणवशात् आकाशरूपार्थस्मरणे जाते तस्यापि शाब्दबोधापत्तेरित्येवंक्रमेण पदार्थज्ञानात् वाक्यार्थज्ञानं भवतीति मनसिनिधाय वाक्यद्वयात्मकद्वयश्रीराममन्त्रस्यार्थं निरूपणाय प्रथमं तादृशवाक्यद्वयघटितपदानामर्थं दर्शयितुमाह 'सर्वाधीशेत्यादि ।'



**अत्र श्रीरामस्य द्वयाख्यमन्त्रे श्रीतिपदेन पुरुषकारोऽर्थः प्रयोजनं यस्याः पुरुषकारार्था श्रीसीता या च भक्तस्य काठिन्यं प्रयोजनं च श्रीरामाय श्रावयति सैव श्रीपदेन कथिता भवति कीदृशी सा श्रीसीता तत्राह 'सर्वाधीश' इति, सर्वस्य ब्रह्माद्यारभ्यस्तम्भपर्थन्तपदार्थमात्रस्ययोऽधीशः स्वामीश्रीसीतापतिः तस्य श्रीसीतापतेः प्राप्ते हेतुः कारणम् । एतदुक्तं भवति आश्रितभक्तजनदोषान् श्रृणाति विनाशयति या सा श्रीः अथवा भक्तजनस्य प्रार्थनां स्वयं श्रृणोति श्रीरामाय वा श्रावयतीति सा श्रीः । एतादृशी श्रीपदवाच्या श्रीसीता श्रीपदेन कथिताः श्रीरामप्राप्तौ कारणमितिभावः ॥२६॥**

वाक्यार्थबोध शाब्दबोध में पदार्थबोध कारण होता है। क्योंकि पद ज्ञान द्वारा जब तक पदार्थ का कंबुग्रीवादिमत्वादि रूप अर्थ का स्मरण नहीं होता है तब तक पद समुदाय रूप 'घटमानय' इत्यादि वाक्य से घटानयनादि कार्य को मध्यम वृद्ध नहीं जान सकता है। इसलिए वाक्यार्थ बोध में कारणीभूत पदार्थों का स्मरणादि रूप ज्ञान के उत्पादन करने के लिए प्रथमतः आचार्यजी उस बात को जानने केलिए उपक्रम करते हैं '**सर्वाधीश**' इत्यादि। हे सुरसुरानन्द ! भगवान् श्रीरामजी का जो द्वय मन्त्र है उसमें सर्वप्रथम जो श्रीपद है उस श्रीपद से सर्वाधीश ब्रह्मविष्णु महेशादिक जीवों का अधीश्वर श्रीरामचन्द्र जी हैं उनकी प्राप्ति करने में कारण पुरुषार्थ स्वरूप श्रीसीतादेवी के स्वरूप का वर्णन किया जाता है। इस प्रकार से प्रथम पद के अर्थ का निर्वचन किया गया है ॥२६॥

## मता पुरुषकारस्य नित्यसम्बन्ध उच्यते ।
## रामचन्द्रेति पदतो वात्सल्यादिगुणस्य च ॥२७॥

तत्र द्वयमन्त्रघटकप्रथमश्रीपदस्यार्थं प्रतिपाद्य द्वितीयस्य मतुप्प्रत्ययस्यार्थमभिधातुमुपक्रमते 'मता पुरुषकारस्य इत्यादि तत्र मता-मतुप्प्रत्ययेन अयं मतुप्प्रत्यय भूमनिन्दा प्रशंसा नित्ययोगातिशयसम्बन्धरूपार्थेषु विनियुज्यमानो भवतीति, यथोक्तलक्षणकमतुप्प्रत्ययेन 'अनन्या च मया सीता भास्करेण प्रभा यथा 'इतिवचनेन प्रदीपतदीयप्रकाशयोरिव जातिव्यक्त्योर्नित्यसम्बन्धवत् वा परमकारणेन श्रीरामेण सह श्रीसीताया नित्ययोगो नित्यसम्बन्धो मतुपा उच्यते कथितो भवति । तथा तृतीयेन श्रीरामचन्द्रेति पदेन श्रीरामस्य वात्सल्यादिगुणस

मुदाय उच्यते प्रतिपाद्यते । तत्र वात्सल्यं नाम-स्वाश्रितप्रपन्नदोषाणामस्मर्तृत्वलक्षणमेव अर्थात् प्रपन्नः सदोषो भवतु निर्दोषो वा तदविगणैय्य तस्य साहाय्य करणम् । तदुक्तं श्रीमद्रामायणे-'न स्मरत्यपकाराणां शतमप्यात्मवत्तया' इति । अन्ये तु स्वाश्रितापराधतिरस्कारबुद्धिरेवेति । तदुक्तं भागवते 'अहं भक्तपराधीनो ह्यस्वतन्त्रइवद्विज ? साधुभिर्ग्रस्तहृदयो भक्तैर्भक्तजनप्रियः । नाहमात्मानमाशासे मद्भक्तैः साधुभिर्विना' इत्यादिकं विभावनीयम् । आदिशब्देन भगवतः स्वामित्व, सौशिल्य सौलभ्य, सर्वज्ञत्व, सर्वशक्तित्व, दया, कृपा, अनुकम्पा, करुणावत्व, सौन्दर्य, सौहार्द, क्षमाप्रभृतयोऽनुसन्धेयाः । ते च जगद्गुरुश्रीमधुराचार्य कृतः श्रीभगवद्गुणदर्पणनामकप्रबन्धतः पण्डितसम्राट्स्वामीश्रीवैष्णवाचार्य कृतः श्रीभगवद्गुणषोडशीतोऽनुसन्धेया विशेषार्थिभिः ॥२७॥

हे सुरसुरानन्द ! द्वय श्रीराममन्त्र घटक जो प्रथम मन्त्रान्तर्गत श्रीपदोत्तर में विद्यमान मतुप्प्रत्यय है उस मतुप्प्रत्यय से पुरुषकार स्वरूप जो भगवती श्रीसीताजी हैं, उन श्रीसीताजी का भगवान् दशरथनन्दन श्रीरामजी के साथ जाति व्यक्ति के समान नित्य सम्बन्ध है । यहाँ मतुप्प्रत्यय नित्य योगार्थक है । और 'श्रीमद्रामचन्द्र चरणौ' यहाँ जो 'रामचन्द्र' पद है, इस रामचन्द्र पद से भगवान् सर्वेश्वर परमात्मा श्रीकोशलेन्द्र सरकार में वात्सल्यादि अनन्त कल्याण गुणों का नित्य सम्बन्ध है, ऐसा ऋषि लोग कहते हैं । यहाँ वात्सल्यादि पद से वात्सल्य स्वामित्व सुशीलता अतिसुलभता सर्वतत्त्व सर्वशक्ति दया कृपा अनुकम्पा करुणा सौहार्द और क्षमा इत्यादि जो भगवान् श्रीरामजी के अनन्त कल्याण गुण समुदाय हैं उन सबका आदि पद से ग्रहण होता है । इसमें वात्सल्य शब्द का यह अर्थ होता है कि-जो भगवान् श्रीरामजी के आश्रित व्यक्ति हैं उनके अन्दर जो क्रूरत्व मुर्खता जाति से नीचता प्रभृतिक दोष हैं, उनका स्मरण न करना ऐसा श्रीमद्रामायण में कहा है-'न स्मरत्यपकाराणां शतमप्यात्मवत्तया' इत्यादि । अथवा स्वाश्रित व्यक्तिगत जो अपराध हैं तादृश अपराध में तिरस्कार बुद्धि को वात्सल्य कहते हैं ऐसा कहा है-'अहं भक्त पराधीनो ह्यस्वतन्त्र इवद्विज ! । साधुभिर्ग्र स्तहृदयो भक्तैर्भक्तजनप्रियः' इत्यादि । इसी तरह सौशील्य, सौहार्द क्षमादिक भगवान् के गुणों का साम्प्रदायिक महापुरुषों से जानना । यहाँ संक्षेप किया गया है॥२७॥



**चरणावित्यनेनैव वात्सल्यादिकसीतयोः ।**
**विलक्षणस्य दिव्यस्य विग्रहस्याश्रयस्य च ॥२८॥**

स भ्रातुश्चरणौ गाढं निपीड्य रघुनन्दनः ।
सीतामुवाचातियशा राघवञ्च महाव्रतम् ॥

इतिश्रीमद्रामायणे तथा-

यत्पादुकार्चनपरो भरतोऽतिभक्त्या यद् दर्शनावधिबहिर्नगरादतिष्ठत् ।
आदेशमाप्य तत एव प्रजाः शशास सोऽन्तः स्फुरत्वविरतं मम राघवाङ्घ्रिः ।

इति च श्रीराघवाङ्घ्रिवर्णने देशिकसम्राट् जगद्गुरुश्रीसदानन्दाचार्योक्त दिशा ये ये गत्यर्थास्ते ते प्राप्त्यर्था इतिशब्दशास्त्रीयनियमात् चरति प्रापयति स्वाश्रितसर्वजनान् चतुर्वर्गादिकमिति गत्यर्थकश्चरधातोर्निष्पन्नद्वितीयान्तचरण शब्देन वात्सल्यादिकसीतयोः श्रीरामवद्वात्सल्यादिगुणविशिष्टाया श्रीजनकनन्दिन्या आश्रयस्य नित्यसम्बन्धः प्रोच्यते चरणावित्यनेनैव च-

'यथा रामस्तथाऽहं च भेदः कश्चिन्न चावयोः'
सर्वेश्वरी यथा चाहं रामः सर्वेश्वरस्तथा
षड्गुणो भगवान् रामः षड्गुणाहं स्वभावतः'
'सर्वफलप्रदौ चावां नित्यौ च सर्वशेषिणौ'
'मम विना वदन् रामं रामं विना वदंश्च माम् ।
वदत्यावां यतश्चावामभिन्नावेव सम्मतौ'

इत्यादिश्रीवशिष्टसंहितोक्तप्रकारेण विलक्षणानन्तदिव्यश्रीविग्रहाश्रयत्वं नित्यसम्बन्धत्वञ्च प्रोच्यतेऽतः सर्वकामेप्सुभिः श्रीरामचन्द्रचरणावाश्रयणीयाविितिभावः ॥२८॥

हे वत्स ! चरणौ पदसे वात्सल्यादिक अनन्तगुण तथा श्रीसीताजीका आश्रय रूप श्रीरामचन्द्रजी का विलक्षण अनन्त दिव्य श्रीविग्रह है उसका एकत्व प्रतिपादन किया जाता है ऐसा श्रीवशिष्ठ प्रभृतिक पूर्वाचार्य का मत है ॥२८॥

**शरणेतिपदेनैवोपायस्तद्विग्रहो बुधैः ।**
**उपायाध्यवसायस्तु प्रपद्य इति वर्ण्यते ॥२९॥**

हे सुरसुरानन्द ! बुधैर्विद्वद्भिः मन्त्रघटकशरणेति पदेन तद्विग्रहो भगवतः श्रीरामचन्द्रस्य विग्रहस्तदीयो देहं शरीरमुपायः सर्वाधारस्य परमात्मनो देहादभिन्न एव भगवतः प्रापकोऽर्थाद् भगवत्प्राप्तेरुपायः कारणं भवतीति शरणं पदेनाभि व्यक्तं भवति, तथा 'प्रपद्ये' इति पदेन तादृशभगवद्विग्रहस्योपायभूतस्याध्यवसायो दृढनिश्चय एव प्रपद्येन क्रियापदेन वर्णितो भयति । तत्र भगवद्विग्रहोभगवत्प्राप्तौ कारणं ध्यानविषयतया, ततश्चभगवत्स्वरूपनिश्चयो भगवत्प्राप्तौ कारणमिति 'प्रपद्ये' इतिक्रियापदेनैवोक्तं भवतीति भावः ॥२९॥

हे सुरसुरानन्द ! द्वयमन्त्रघटक **'शरण'** इस पद से परमात्म स्वरूप भगवान् श्रीकोशलेन्द्रसरकार के विग्रह शरीर को प्राप्य श्रीरामजी की प्राप्ति का उपाय विद्वान् लोग कहते हैं । यद्यपि स्वप्राप्ति का उपाय स्व हों ऐसा देखने में अन्यत्र नहीं आता है । तथापि भगवद्विग्रह को भगवत्प्राप्ति में उपाय कथन का यह अभिप्राय है कि भगवत्स्वरूप का जो अनुचिन्तन है, वह भगवत्प्राप्ति में उपाय है, प्रापक है । योग सूत्रकार ने कहा है-'यथाभिमतध्यानाद्वा' 'तज्जपस्तदर्थानुभावनम्' इति । और मन्त्र में जो **'प्रपद्ये'** इत्याकारक क्रिया पद है उस क्रिया पद से तादृश उपाय का अर्थात् परमात्मा स्वरूप श्रीरामचन्द्रजी के प्रापक जो भगवद्विग्रह है, उस विग्रह का दृढ निश्चय कर भगवान् के स्वरूपानुचिन्तन ही प्राप्ति का साधन है, एतादृश अविपरीत निश्चय ही प्राप्ति कारण है ऐसा जो ज्ञान उसको प्रपद्ये पद बतलाता है ऐसा प्राचीन श्रीपराशरादिक विद्वान् महापुरुषों ने कहा है ॥२९॥

**प्राप्यं मिथुनमेवेति श्रीमते पदतो मतम् ।**
**रामचन्द्रेति पदतः स्वामित्वं प्रतिपाद्यते ॥३०॥**

हे सुरसुरानन्द ! द्वयश्रीराममन्त्रघटकद्वितीयवाक्ये 'श्रीमते' इति पदतः अर्थात् श्रीमते इति चतुर्थ्यन्त पदेन मिथुनं श्रीसीतारामस्वरूपमेव मुमुक्षुभिः साधनेन प्राप्यं भवतीति मतम्, महर्षीणाम् । अर्थात् साधनसाध्यं श्रीसीताराम स्वरूपमेव, तत्प्राप्यैव कृतार्थो भवतीति मुनीनां मतमिति ! तथा 'रामचन्द्रेति पदतः' रामचन्द्रपदेन तु तस्य श्रीरामस्य प्राप्यस्य सर्वं प्रतिस्वामित्वमिति प्रति पादितं भवतीति रहस्यविदामाचार्याणां मतम् । नात्र केवलं श्रीराम एव प्राप्यः किन्तु प्रभाप्रभावतोरिव युगलमूर्तिरेव प्राप्याविति । यद्यपि श्रीरामप्राप्तौ तन्नित्य



संवद्धा श्रीसीतापि प्राप्तैव स्यात्, तयोर्नित्यसम्बन्धत्वात्, तथापि तत् स्फुटी करणायैव पुनस्तदुक्तिरितिभावः ॥३०॥

प्रियशिष्य ! द्वितीय मन्त्र घटक **श्रीमते** चतुर्थ्यन्त इस पद से श्रीसीतारामजी की युगल मूर्ति स्वरूप ही प्राप्य है, अर्थात् अशेष साधनों से प्राप्य है, ऐसा महर्षिगण कहते हैं । भगवान् श्रीसीतारामजी के विग्रह का चिन्तन उपाय है । तथा तादृश विशिष्ट ज्ञानानन्दादिमय जो स्वरूप है वह प्राप्य हैं और **रामचन्द्र** पद से भगवान् श्रीरामजी में सर्वजीव निरूपित स्वामित्व है ऐसा प्रतिपादन होता है । ऐसा प्राचीन आचार्यों ने कहा है जो कि श्रुत्यादि समर्थित है ॥३०॥

**विभक्त्यायेति पदतः शेषवृत्तिर्महात्मभिः ।**
**विरोधिनो निरासस्तु नमः पदेन वर्ण्यते ॥३१॥**

हे वत्स ! रामचन्द्रेतिनामोत्तरचतुर्थीविभक्त्येकवचनङेस्थानिकादिश्यमान आय, इति श्रूयमाणविभक्त्या, शेषवृत्तिर्व्यापारः, सर्वशेषिणो रामस्य शेष लक्षणजीवानां वृत्तिर्व्यापारोवर्णितो भवति, इति महात्मभिर्वर्ण्यते कथ्यते । तथा द्वयाख्यद्वितीयान्तिमनमः पदेन नम इत्याकारकपदेन विरोधिनो भगवतो राम स्य परब्रह्मणः प्राप्तये विरोधिनोऽहङ्कारममकारादिककामक्रोधादयस्तेषां निरासो वर्ण्यते प्रतिपाद्यते । अर्थात् 'शान्तोदान्त उपरतस्तितिक्षुः श्रद्धावित्तोभूत्वा आत्मन्येवात्मानं पश्येत्' इत्यादिश्रुतिवचनेन शान्त्यादिगुणानामधिकारिनिष्ठाना मुपासनाङ्गत्वप्रतिपादनेन अर्थतः कामक्रोधादीनां भगवत्प्राप्तौ प्रतिबन्धकत्वमा यातीति यावत्कामादीनां निवृतिर्नस्यात्तावद् भगवत्प्राप्तेराशादुराशैवेत्यतः तन्नि वृत्तेरुपवर्णनं नमः पदं कुर्वन् चरितार्थो भवतीति महात्मभिरुपवर्णितमिति संक्षे पो विस्तरस्त्वन्यत्रावधेयः ॥३१॥

महर्षिलोग **'रामचन्द्राय'** में जो आय है अर्थात् रामचन्द्र इस प्रकृति से विहित जो चतुर्थी एकवचन ङे विभक्ति है तादृश ङे के स्थान में आदिश्यमान व्याकरण परिभाषा से **'आय'** है, उससे सर्वशेषी भगवान् श्रीरामजी वा शेष रूप जो जीव समुदाय हैं उन जीवों के व्यापार का प्रतिपादन किया जाता है ऐसा मुनिलोग कहते हैं । और मन्त्र का जो चरमपद **नमः** शब्द है, उस नमः पद से भगवान् की प्राप्ति होने में जो विरोधी अहङ्कार ममकार से जायमान क्रोध कामादिक पदार्थ हैं उन

कामादिकों के अभाव का प्रतिपादन किया जाता है। क्योंकि कार्यमात्र के प्रति प्रतिबन्धाकाभाव कारण होता है। अतः जबतक प्रतिबन्धक रहता है तबतक कार्य नहीं होता है। ऐसा दाहादि स्थल में मणिविगेरे को देखा गया है। इसलिए भगवत् विरोधी के अर्थात् कामादिकों का अभाव का प्रतिपादक नमः पद है ऐसा मुनिलोगों ने कहा है ॥३१॥

**तात्पर्यार्थोस्य विज्ञेय आचार्यरुचिसंश्रयः ।**
**वाक्यार्थो मन्त्ररत्नस्य त्वथ निर्णीयते बुधैः ॥३२॥**
**प्राप्यप्रापकसम्बन्धस्वरूपाभिनिरूपणम् ।**
**प्रधानार्थस्तु यद्युगमकैङ्कर्यस्य प्रधानता ॥३३॥**
**स्वदोषाभ्यनुसन्धानमनुसन्ध्यर्थ उच्यते ।**
**एवमेवानुसन्ध्येयं मोक्षकामैरहर्दिवम् ॥३४॥**

अथ 'श्रीमद्रामचन्द्रचरणौ शरणं प्रपद्ये श्रीमते रामचन्द्राय नमः' इति द्वयमन्त्रस्य कः तात्पर्यार्थः ? कश्च वाक्यार्थः ? कश्च प्रधानार्थः ? कोवाऽनुसन्धानार्थः इतिजिज्ञासमानंप्रति तत्तत्स्वरूपं प्रतिपादयितुमुपक्रमते-'तात्पर्यार्थोऽस्य' इत्यादिश्लोकत्रयम् । तत्र बुधैः साम्प्रदायिकविद्वद्भिः आचार्यरुचिसंश्रयः आचार्याभिप्रेतश्रीरामद्वयमन्त्रस्य तात्पर्यो निर्णीयते तथा प्राप्यप्रापकसम्बन्धस्वरूपाभिनिरूपणम् एतदपि निर्णीयते अर्थात् तत्र प्राप्यो भगवान् श्रीरामः प्रापको जीवराशिः तयोः जीवपरमात्मनोः यः सम्बन्धस्तस्य तथा जीवपरमात्मनोः स्वरूपस्य च प्रतिपादनम् एष एव तु वाक्यार्थः तदपि निर्णीयते। तद् युगमस्य श्रीसीतारामस्य यत्कैङ्कर्यं सेवा तस्याः श्रीसीतारामसेवायाः प्रधानता तदेव प्रधानार्थः सोपि निर्णीयते । तथा स्वदोषाभ्यनुसन्धानम् स्वस्य जीवस्य स्वकीयदोषाणां रागमोहादीनामनुसन्धानं सर्वदाविचारणमनुसन्ध्यर्थोऽनुसन्धानार्थ उच्यते कथ्यते। मोक्षकामनावद्भिः पुरुषधौरेयैः, एवमेव यथोक्तप्रकारेणैव अहर्दिवं सन्ततमनुक्षणमनुसन्धेयमनुसन्धातुं योग्यं विचारणीयम्। मोक्षकामैरनुसन्ध्यातव्यमिति कथितम् ।



**तत्र मोक्षप्रकारोऽनेकप्रकारको मतभेदेन निरूपितस्तथाहि तत्र चार्वाका देहविनाशमेवमोक्ष इति वदन्ति । जैनास्तु निरावरण एवमोक्षः । सिद्धशिलाप्राप्तिर्वा । एकविंशतिदुःखप्रध्वंसोवेति न्यायविदः । लिङ्गभङ्गोवेति केचित् । अविद्यया निवृत्तिर्वेत्यन्ये । स्वस्वरूपावस्थानमिति केचन । चिच्छक्तिर्वेति सांख्यवृद्धाः । परमानन्दस्वरूपो वा मोक्ष इति विशिष्टाद्वैतिनः । सर्वेश्वरश्रीरामकैङ्कर्यप्राप्तिरेवमोक्ष इति श्रीपराशरादिमुनयस्तदनुयायिमहर्षिश्रीपुरुषोत्तमाचार्यबोधायनप्रभृतिकाः श्रौतविशिष्टाद्वैतमतप्रवर्धका इच्छन्ति । तदुक्तम् 'विष्णोरनुचरत्वं हि मोक्षमाहुर्मनीषिणः' इति । श्रीमद्रामायणे-कुरुष्वमामनुचरं वैधर्म्यं नेह विद्यते। कृतार्थोऽहं भविष्यामि तव चार्थ प्रकल्पते' इति । स्कान्दे च**

**'द्वयाख्यं रामचन्द्रस्य मन्त्ररत्नमनुत्तमम् ।**
**पञ्चविंशाक्षरं विद्वान् स याति परमाङ्गतिम् ॥' इति ।**

तदाह श्रुतिः-प्रथमं श्रीमदिति ततो रामचन्द्रचरणाविति ब्रूयात्। अनन्तरं शरणमिति पदं पश्चात्प्रपद्ये इति वदेत्। पुनश्च श्रीमते इति, अथ रामचन्द्रायेति तदग्रे नम इति यो दाशरथेर्द्वयाख्यं मन्त्राणां प्रवरं मन्त्ररत्नमधीते, स सर्वान् कामानश्नुते विपश्चित्तेन सह मोदते इति ।'

यो वै ब्रह्माणं विदधाति पूर्वं यो वै वेदाश्च व्रहिणोति तस्मै ।
तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये' इति च ।

भगवता व्यासेन मन्त्ररत्नव्याख्यानरूपमेव निबद्धमधस्तनीयश्लोकं भागवते-

'यस्याऽमलं नृपसदः सुयशोऽधुनाऽपि
गायन्त्यघघ्नमृषयोदिगिभेन्द्रपट्टम् ।
तन्नाकपाल वसुपाल किरीटजुष्टं
पादाम्बुजं रघुपतेः शरणं प्रपद्ये ॥'

इति व्याख्यातञ्च जगद्गुरुश्रीगङ्गाधराचार्येण-

'मर्यादापुरुषोत्तमस्य लीलाप्रयोजनमतिसमासेन प्रदर्शयन् स्वशरण्यत्वाच्छरणं गच्छति-यस्यामलमित्यादि ।' ततश्च सर्वानुग्राहकसर्वेश्वरश्रीरामशरणागतस्यतदनुग्रहेण गुणाष्टकाविर्भावरूपस्वस्वरूपावाप्तिरूपमोक्षप्राप्तिर्भवतीति । तदत्र जगद्गुरुश्रीगङ्गाधराचार्याः-

**वैष्णवाचार्यवर्याणां यो रुचेः संश्रयो हि सः ।**
**मन्त्रज्ञैर्मन्त्ररत्नस्य तात्पर्यार्थः समीहितः ॥**
**प्राप्यप्रापकयोर्यच्च निरूपणं स्वरूपयोः ।**
**तदेव मन्त्ररत्नस्य वाक्यार्थो बुधसम्मतः ।**
**कैङ्कर्यस्य प्रधानत्वं श्रीसीतारामयोश्च यत् ।**
**मन्त्ररत्नस्य तत्प्राज्ञैः प्रधानार्थतया मतम् ॥**
**स्वीयदोषानुसन्धानं क्रियते साधकेन यत् ।**
**तत्र च मन्त्ररत्नस्यानुसन्धानार्थता मता ॥ इत्याहुः ।**

**एतादृशमोक्षकामैः साधुभिः सर्वदैव द्वयमन्त्ररत्नमेवोपासनीयमिति संक्षेपः ॥३२-३३-३४॥**

भगवान् श्रीरामजी जगत्कारण सर्वज्ञ का जो द्वयमन्त्र हैं उस मन्त्र का स्वरूप तथा तद्घटक पदों का अर्थ कहकर अग्रिम श्लोकत्रय से द्वयमन्त्र का तात्पर्यार्थ वाक्यार्थ प्रधानार्थ तथा अनुसन्धानार्थ स्वरूप का प्रतिपादन करने के लिए उपक्रम करते हैं-'**तात्पर्यार्थोऽस्य**' इत्यादि । हे सुरसुरानन्द ! सम्प्रदाय को विशेष रूपसे जाननेवाले विद्वान्, आचार्य की जो आज्ञा है तादृश आज्ञा का पालन करना ही इस द्वयमन्त्र का तात्पर्यार्थ है ऐसा कहते हैं तथा परमात्मा श्रीरामचन्द्रजी तथा शेष लक्षण जीवात्मा का जो सम्बन्ध है उस सम्बन्ध का तथा स्वरूप का निरूपण करना यही इस द्वयमन्त्र का वाक्यार्थ है । श्रीसीताराम रूप जो युगल मूर्ति हैं उनके सेवा की प्रधानता ही प्रधानार्थ है ऐसा कहते हैं । तथा जीव स्वकीय सकल दोषों का पूर्ण रूपसे अनुसन्धान करे, यही द्वयमन्त्र का अनुसन्धेयार्थ है ऐसा विद्वान् लोग कहते हैं । जो मोक्ष कामनावाले व्यक्ति हैं उन लोगों से इसीप्रकार से यह द्वयमन्त्र अनुसन्धान करने के योग्य है अर्थात् जप करने के योग्य है । यह मोक्ष यद्यपि मतभेद से अनेक प्रकारक है तथापि '**विष्णोरनुचरत्वं हि मोक्षमाहुर्मनीषिणः**' इस वचन के अनुसार श्रीपराशरादि मुनिलोग भगवत्कैङ्कर्य को ही मोक्ष कहते हैं । अतः कैङ्कर्यत्व लाभ ही मोक्ष है । यद्यपि सालोक्य, सामीप्य, सारुप्य और सायुज्य नामक चार मोक्ष का प्रकार है तथापि इन चारों में कैङ्कर्य की ही प्रधानता रहने से भगवान् की निरन्तर सेवा ही परममोक्ष है ऐसा महर्षिलोग कहते हैं इति संक्षेपः ॥३२-३३-३४॥



卐 अथ चरममन्त्ररहस्यम् 卐

**प्रोक्तावत्सक ! मन्त्ररत्नविवृतिः सन्मानसाभिष्टदं-**
**सद्वेद्यं सकृदित्यवेहि चरमं निर्णीतवाक्यार्थकम् ।**
**रामीयं हि तदीयमन्त्रनिरतैरुद्बोधनीयं परं-**
**द्वात्रिंशत्प्रमिताक्षरं मनुपदं द्व्यर्द्धं जगद्विश्रुतम् ॥३५॥**

**तदित्थं पूर्वोक्तप्रकारेण द्वितीयं रहस्यं विस्तारपूर्वकमर्थसहितं प्रतिपाद्य तदनुतृतीयं रहस्यसार्थसविस्तरं प्रतिपादयितुमुपक्रमते श्रीआचार्यः-'प्रोक्तावत्सक' इत्यादि । हे वत्सक सुरसुरानन्द ! द्वयाख्यमन्त्ररत्नस्य विवृतिर्विवरणं प्रोक्ता कथिता सर्वं प्रतिपादितम् निर्णीतवाक्यार्थकम् । रामीयं रामस्येदं श्रीरामात्प्राप्तम् सकृत् 'सकृदेव प्रपन्नाय तवास्मीति च याचते' इत्यादिचरमश्लोकमन्त्रमतः परं श्रृणुः । कीदृशं तन्मत्रं तत्राह-'सद्वेद्यम्-महात्मभिर्ज्ञातुं योग्यम् तथा सन्मानसाभीष्टदम्-सतां मनोभिलषितफलप्रदायकम् रामीयं श्रीरामसम्बन्धिश्रीरामादागतमित्यर्थः तन्मन्त्रनिरतैराचार्यैरेव उद्बोधनीयमुब्दोधयितुं योग्यम् द्वात्रिंशत् प्रमिताक्षरं द्वात्रिंशदक्षरयुतम् । पुनः मनुमितानि चतुर्दशसंख्यकानि पदानि यस्मित्तादृशम् । द्व्यर्द्धं द्विखण्डकम् जगद्विश्रुतं जगत्प्रसिद्धं चरमं मन्त्ररत्नमिदमिति-भावः ॥३५॥**

पूर्व कथित प्रकार से द्वितीय रहस्य का विवेचन करके तदनन्तर वक्ष्यमाण श्लोकों से तृतीय रहस्य विवेचन करने के लिए आचार्यश्री उपक्रम करते हैं-'**उक्तावन्सक**' इत्याकारक । हे वत्सक सुरसुरानन्द ! मन्त्ररत्न द्वय मन्त्र श्रीराममन्त्र का व्याख्या न हो गया । और '**सकृदेव प्रपन्नाय**' इत्यादिक जो चरम मन्त्र है जोकि बत्तीस वर्ण चौदह पदों से तथा पूर्वार्द्ध उत्तरार्द्ध दो खण्डों से प्रमीत युक्त है । सज्जन पुरुषों के मनोभिलषित फल को देनेवाला है एवं सज्जन महापुरुषों से ही जानने के लायक है । और जिसका वाक्यार्थ निर्णीत है । एतादृश मन्त्ररत्न को तुम सुनो ! श्रीराममन्त्र में निरत परमभक्त को ही इसका उपदेश देना इतर को नहीं ॥३५॥

**अत्रोपायान्तरस्याथो निवृत्तिः प्रतिपाद्यते ।**
**सकृदित्येवकारेण तूपायनिरपेक्षता ॥३६॥**

**अथ चरममन्त्रघटकपदानां विचारं कृत्वा तदनुतेषां पदानां तत्तदर्थान् प्रतिपादयितुमुपक्रमते-'अत्रोपायान्तरस्य' इत्यादि । अथ तृतीयरहस्यान्तर्गतपद विचारानन्तरम्, आत्रान्तिमे तृतीयरहस्यान्तर्गतचरममन्त्रे सकृदित्याकारकप्रथम पदेन, उपायान्तरस्य प्रयत्नातिरिक्तयागादिकारणान्तरस्य निवृत्तिः प्रतिषेधः प्रतिपाद्यते कथ्यते, पुरुषार्थप्रापकयागादिहेतूनुपेक्ष्य भगवत्प्रपत्तिः शरणागतिरेव धर्मादीनां कारणभूतेत्यर्थः । एवकारेण एवेत्यव्ययपदेन, मन्त्रघटकद्वितीयपदेन, देवतान्तरोपासनाकारणयागादिसाधनानां भगवदुपासनायां निरपेक्षत्वमेव प्रतिपाद्यते प्रपत्तिमात्रं प्रकृतेकारणं नततो व्यतिरिक्तं कारणान्तरं मन्त्रोपयोगि इति भावः ॥३६॥**

चरम मन्त्र घटक पदों का विचार करके तदनन्तर तत्तत्पदार्थों का विचार करने के लिए उपक्रम करते हैं-**'अत्रोपायान्तरस्य'** इत्यादि । अथ वर्ण पद का विचार करने के वाद इस चरम मन्त्र घटक सकृत् इस पद से प्रपत्तिभिन्नोपाय यागादिकों की निवृत्ति का प्रतिपादन किया जाता है । तथा द्वितीय पद जो एवकार है उससे अन्य देवोपासन यागादिकों का निरपेक्षत्व बतलाया जाता है अर्थात् सर्वोपाय निरपेक्ष प्रपत्ति मात्र भगवत्प्राप्ति में कारण है ॥३६॥

**प्रपन्नायेति पदतस्तूपायस्थानमुच्यते ।**
**उपायत्वं भगवतस्तवेति पदतस्तथा ॥३७॥**

**चरममन्त्रघटकप्रथमद्वितीयपदयोरर्थं प्रतिपाद्य तृतीयचतुर्थपदयोरर्थं दर्शयितुमुपक्रमते-प्रपन्नायेति पदतः' इत्यादि । चरममन्त्रघटकतृतीयेन चतुर्थीविभक्त्यन्तप्रपन्नायेति पदेन, उपायस्थानमाश्रय इत्युच्यते । यः प्रपत्तिं स्वीकरोति तादृशोपासकाय उपायस्य वक्ष्यमाणषड्प्रकारकशरणागतिरूपस्य परमोपायस्य तिष्ठति यस्मिन्निति स्थानमर्थादाश्रय इत्युच्यते प्रतिपादितो भवति । तथा तवेति पदतः-तवेत्याकारकपदेन यथात्वं कृपयाभूत्वा तेजसा महितौजस । जुष्ट ईशगुणैः सर्वैस्ततोसि भगवान् प्रभुः' इत्यादिवचनेन कृपादिसकलगुणाकरो भगवान् श्रीरामएव सकलफलप्रदाता उपाय इति कथितो भवति, प्रपत्तिं सफलयितुं स सर्वेश्वरसर्वाधारश्रीराम एव परमोपाय इतिसारः ॥३७॥**



चरम मन्त्र घटक जो तृतीय पद प्रपन्नाय है तादृश तृतीय पद से उपाय अर्थात् वक्ष्यमाण जो छ प्रकार की शरणागति है उसके स्थान-आश्रय का प्रतिपादन किया जाता है । तथा षष्ठ्यन्त तव इत्याकारक चतुर्थ पद से परमात्मा श्रीकोसलेन्द्र सरकार को ही उपाय रूपसे कथन किया जाता है ॥३७॥

**अस्मीत्यनेन चोपायस्वीकारः प्रतिपाद्यते ।**
**समाप्त्यर्थेति शब्देन तूपायानन्यतोच्यते ॥३८॥**

**हे सुमते सुरसुरानन्द ! अस्मीत्याकारकपञ्चमपदेन उपायस्य स्वीकारः प्रतिपाद्यते कथितो भवति । तथा समाप्त्यर्थबोधकेन षष्ठेति पदेन उपायानन्यता, उपायस्य प्रतिपत्तेरनन्यता कथिता भवति, यदि किञ्चिद्भगवत्प्राप्तौ उपायो विद्यते तदा षट्विधप्रपत्तिरेव नतु तद्व्यतिरिक्तं भगवत्प्राप्तिसाधनं विद्यते इति समाप्त्यर्थकेति पदेन बोध्यते । प्रपत्तेः षड्भेदा वक्ष्यमाणास्ते तत एव द्रष्टव्याः ॥३८॥**

हे सुरसुरानन्द ! श्रीसम्प्रदाय के वास्तविक स्वरूप को जाननेवाले जो विद्वान् महापुरुष हैं वे लोग **'अस्मि'** इत्याकारक मन्त्रघटक पञ्चम पद से भगवत् प्राप्ति के उपाय के स्वीकार को कहते हैं । और समाप्ति अर्थ का वाचक जो इति शब्द छठवाँ है उस षष्ठ पद से प्रपत्ति अर्थात् षड्विध शरणागति की अनन्यता को कहते हैं। अर्थात् शरणागति व्यतिरिक्त उपायान्तर का निषेध कहा जाता है ॥३८॥

**चकारतोऽनुक्तसमुच्चयार्थतोनिगद्यते त्वन्य उपाय आत्मवित् ।**
**उपाय संसेव्यधिकारिलक्षणं पदेन वै याचत इत्यनेन तु ॥३९॥**

**हे आत्मवित् सुरसुरानन्द ! सम्प्रदायमन्त्रतत्वविद्भिः पुरुषैः अनुक्तसमुच्चयार्थकेन अकथितस्याप्यर्थविशेषस्य वाचकसप्तमश्लोकघटक च पदेन, अन्यो मानसिकप्रपत्तिव्यतिरिक्तकायिकवाचिकप्रपत्तिरूप उपायः कथ्यते इति तैः कथ्यते । तथा 'याचते' इत्यष्टमपदेन तु उपायानुष्ठातुरधिकारिणो लक्षणं स्वरूपं प्रतिपादितं भवतीति साम्प्रदायिका वदन्तीतिभावः ॥३९॥**

हे आत्मज्ञानी सुरसुरानन्द ! साम्प्रदायिक श्रीसम्प्रदायानुयायी विद्वान् लोग

कहते हैं कि अनुक्त समुच्चयार्थक अकथित अर्थ को भी समझानेवाला जो श्लोक घटक सप्तम च पद है उससे (प्रपत्ति तीन प्रकार की है मानसिक, वाचिक तथा कायिक) त्रिविध प्रपत्ति के अन्तर्गत प्रथम मानसिक प्रपत्ति शरणागति से भिन्न जो कायिक वाचिक प्रपत्ति शरणागतिरूप उपाय है उसका प्रतिपादन किया जाता है।

तथा श्लोक में जो **'याचते'** इत्याकारक अष्टम पद है। तादृश अष्टम याचते पद से तीनों प्रकार के मानसिक कायिक तथा वाचिक शरणागति रूप उपाय का भी समीचीन रूप से अनुष्ठान करने वाले जो अधिकारी हैं तादृश अधिकारी के स्वरूप का प्रतिपादन होता है ॥३९॥

**अथाभयमितिप्राप्तिप्रतिबन्धकवारणम् ।**

**सर्वभूतेभ्य इत्येव प्राप्यस्य प्रतिबन्धकम् ॥४०॥**

**अथाष्टमपदव्याख्यानानन्तरमभयमित्याकारकश्लोकघटकनवमपदेन प्राप्यप्रतिबन्धवारणम्** 'प्राप्यस्य भगवतः परमात्मनो रामचन्द्रस्य प्राप्तौ, यानि कामक्रोधमयेर्ष्यादिकानि तेषां प्रतिबन्धकानां वारणं निरोधः स्वयं सर्वसमर्थेन भगवतारामेणैव क्रियते इति कथितं भवति । तथा चतुर्थी प्रत्ययान्तेन वा सर्व भूतेभ्य इति दशमपदेन प्राप्यस्य भगवतो श्रीरामचन्द्रस्य प्रतिबन्धकं निरूपितं भवति । अयंभावः भगवतो रामस्य प्राप्तौ कानि प्रतिबन्धकानि ? इति प्रश्न स्योत्तरम्, यानि कानि भूतानि सन्तिः तेभ्यः सर्वेभ्यो भूतेभ्यः प्रतिबन्धकेभ्यो भयकारणेभ्योऽहमभयं ददामीति । न केवलं विभीषणादीनामेवाभयं प्रायच्छम्, अपितु सर्वेभ्योऽतीन्द्रियादिप्राणिभ्यः परस्परप्रतिबन्धकरूपेभ्योऽपि, 'अभयम्, भयकारणात् जन्ममरणादिसंकुलितसंसारसागरात् निवृत्तिलक्षणं मोक्षमपिय-च्छामीतिभावः ॥४०॥

मन्त्र घटक अष्टम पद के व्याख्यान करने के वाद नवम पद जो **'अभय'** उसका व्याख्यान करने के लिए कहते हैं-**'अथाभयमिति'** इत्यादि । **'अभयम्'** इत्यादि नवम पद से भगवान् श्रीरामजी की प्राप्ति करने में जो प्रतिबन्धक हैं काम क्रोधादिक उनका निवारण किया जाता है। तथा **'सर्वभूतेभ्यः'** इत्याकारक जो दशम पद है उससे सर्वभूत को सर्वप्राणी को ही भगवत् प्राप्ति में प्रतिबन्धक निरोधक कहा जाता है-अर्थात् काम क्रोध, लोभ, मोह, भय, इर्ष्यादि नीच वृत्ति आसुरी वृत्तियों से युक्त समस्त प्राणी जीवराशि ही भगवत्प्राप्ति में विरोधी है। भगवान् श्रीरामजी मुक्त कण्ठ से कहते हैं कि मैं दाशरथी श्रीराम, मेरे शरण आये हुए शरणागत व्यक्तियों के प्रतिबन्धक आसुरी वृत्ति सम्पन्न व्यक्तियों से रक्षण करके सदा के लिए भय रहित कर देता हूँ मेरे शरण में आये हुए व्यक्तियों को मैं सर्वदा के लिए भय रहित बना देता हूँ। ऐसी प्रतीज्ञा जो है उसका निर्देश **'अभयं सर्वभूतेभ्यः'** इन पदों से कहा गया है ॥४०॥



**ददामीतिपदेनाथोपायस्य सर्वशक्तिता ।**

**एतदित्येव पदतोऽसंशयत्वमितीर्य्यते ॥४१॥**

अथ दशमपदव्याख्यानानन्तरमेकादशेन 'ददामि' इत्यनेन पदेन, उपायस्य फलप्रदायकप्रपत्तेः सर्वशक्तिता सर्वार्थसाधकत्वम् ईर्य्यते कथ्यते, अर्थात् प्रपत्त्याख्यं कारणं मोक्षादिसकलप्रयोजनसम्पादकमितिभगवता स्वयं कथ्यत इति । तथा द्वादशेन 'एतदिति पदेन असंशयत्वम् संशयराहित्यं पूर्वप्रतिपादितार्थेषु संशयाभावोभगवतैवेर्यते प्रतिपाद्यतेऽतः सफलोयं हेतुरितिभावः ॥४१॥

अथ पुनः दशम पद के व्याख्यान करने के वाद एकादशवाँ जो **'ददामि'** इत्याकारक पद है उससे प्रपत्ति शरणागतिरूप उपाय के फल को देनेवाले भगवान् श्रीरामचन्द्रजी की सर्वशक्तित्व का अर्थात् सकल पालकत्व का प्रतिपादन किया जाता है। तथा **एतद्** इत्याकारक द्वादश बारहवाँ पद है तादृश पद से स्वयं भगवान् श्रीरामजी ने पूर्वोक्त सकल अर्थ प्रतिपाद्य विषय में संशय के अभाव का प्रतिपादन किया है। अर्थात् प्रपन्न भक्त के आराधना करने से मैं उसके ऊपर प्रसन्न होकर के तादृश भक्त को पूर्वोक्त समस्त अर्थ को देता हूँ। इसमें कोई भी थोड़ा भी संशय का अवकाश नहीं है।

इसमें संशय क्यों नहीं है ? इस प्रश्न के उत्तर में भगवान् कहते हैं कि मेरा ऐसा व्रत है अर्थात् पूर्वकथित सकल पदार्थ को देता हूँ इसमें संशय नहीं करना क्योंकि शरणागत भक्त को सकल पदार्थ देना यह हमारा व्रत-प्रतिज्ञा है। हे सुरसुरानन्द ! यह बात स्वयं भगवान् श्रीरामजी ने कही है। तुम इसमें दृढ निश्चयी बनो

यह भाव है ॥४१॥

**व्रतमेतत्पदेनाथो तद्दाढर्यमभिधीयते ।**
**निर्भरत्वानुसन्धानं ममेति प्रतिपाद्यते ॥४२॥**

**हे सुरसुरानन्द ! अथः पुनः 'व्रतम्' इत्याकारकत्रयोदशपदेन तद्दाढर्यं तस्य पूर्वोक्तार्थेसमस्तेऽपि संशयाःभावत्वं दृढत्वमभिधीयते प्रतिपाद्यते प्राचीनैर्मुनिभिरिति । तथा 'ममेति' चरमपदेन ममेत्यनेन निर्भरत्वस्यानुसन्धानमनुचिन्तनम्, अर्थादात्मनो जीववर्गस्य निर्भरत्वमनुक्षणं म्रियमाणत्वध्रियमाणत्वपुष्यमाणत्वस्यानुसन्धानमनुचिन्तनम्, पूर्वाचार्यैः प्रतिपाद्यते इतिसारः ॥४२॥**

द्वादश पद व्याख्यान करने के वाद **'व्रतम्'** इत्याकारक जो त्रयोदश तेरहवां पद है उस तेरहवें 'व्रत' पद से पूर्वकथित सकल अर्थ-विषय की दृढता निश्चय का कथन किया गया है । तथा **'मम'** इत्याकारक जो चौदहवां पद है उससे निर्भता के अनुसन्धान अनुचिन्तन का कथन किया गया है । निर्भरता के अनुसन्धान से यह तात्पर्य है कि भगवान् श्रीरामजी के ही ऊपर सब प्रकार का भरोसा रखो तथा भगवान् को ही धारण-पोषण करनेवाला समझो अर्थात् श्रीरामजी को ही धारकत्व पोषकत्व रूपसे उपासक सतत अनुचिन्तन करे ऐसा ऋषियों ने कहा है ॥४२॥

**तात्पर्यार्थोऽस्यविज्ञेयः शरण्यरुचिसंश्रयः ।**
**तत्प्रापकस्वरूपस्य वाक्यार्थोऽथनिरूपणम् ॥४३॥**

**एवं यथोक्तप्रकारेण श्लोकघटकपदानामर्थान् प्रतिपाद्य तात्पर्यादिकं दर्शयितुमाह-'तात्पर्यार्थोऽस्य' इत्यादि । अस्य चरमश्लोकस्य शरण्यरुचिसंश्रयः तात्पर्यार्थो विज्ञेयः तत्र शरणे साधुः शरण्यो भगवान् श्रीरामः तस्य रुचेः प्रसन्नतायाः प्रसादस्य संश्रयोऽवलम्बनं विधातव्यमिति तात्पर्यार्थः । तथा तत्प्रापकस्वरूपस्य तस्य परब्रह्मणो श्रीरामस्य प्रापकस्वरूपं तदीयप्रसन्नताया आश्रयो विग्रहस्तस्य निरूपणम् अथवा प्रापकस्वरूपम् अर्थात् पुरुषाकाररूपश्रीसीताया निरूपणमेव चरमश्लोकस्य वाक्यार्थो ज्ञातव्यः । भगवतः प्रसादस्तात्पर्यार्थः श्रीसीतास्वरूपनिरूपणं वाक्यार्थ इति भावः ॥४३॥**



अन्तिम श्लोक के तत्तत्पदार्थों का निरूपण करके तदनन्तर तात्पर्यार्थ वाक्यार्थ प्रधानार्थ और अनुसन्धानार्थ का निरूपण करने के लिए आचार्य कहते हैं- **'तात्पर्यार्थोऽस्यविज्ञेय'** इत्यादि । हे सुरसुरानन्द ! दीन व्यक्ति के रक्षा करने में समर्थ भगवान् श्रीरामजी की जो प्रसन्नता उसका अवलम्बन करना यही चरम मन्त्र का तात्पर्यार्थ है। येन केन प्रकारेण भगवान् की प्रसन्नता का पात्र बनना तात्पर्यार्थ है तथा भगवान् श्रीरामजी के प्रसाद का आश्रय जो भगवान् का विग्रह है अथवा प्रपत्ति उसका निरूपण करना अथवा भगवान् के प्रापक पुरुषाकाररूप जो श्रीसीताजी हैं उनके स्वरूप का निरूपण करना यह चरम श्लोक का वाक्यार्थ है, ऐसा महर्षिगणों ने कहा है इस बात को तुम जानो ॥४३॥

**प्रधानार्थः परेशस्य स्वरूपस्य निरूपणम् ।**
**निर्भरत्वानुसन्धानमनुसन्ध्यर्थ उच्यते ॥४४॥**

इत्यानन्दभाष्यकारजगद्गुरुश्रीरामानन्दाचार्ययतिराजप्रणीते श्रीवैष्णवमताब्जभास्करे जप्यात्मकरहस्यत्रयनिरूपणात्मको द्वितीयप्रश्नोत्तराख्यो द्वितीयः परिच्छेदः ॥२॥

**तदेवं गतश्लोकेन चरममन्त्रस्य तात्पर्यार्थं वाक्यार्थं च निरूप्य तदनु प्रधानार्थानुसन्धानार्थयोर्निरूपणायाचार्य उपक्रमते 'प्रधानार्थ' इत्यादि । हे सुरसुरानन्द ! अस्य चरममन्त्रस्य प्रधानार्थस्तु, परेशस्य भगवतो रामस्य यत्स्वरूपं स्वकीयं स्वाभाविकं ज्ञानानन्दादिलक्षणरूपं तस्य निरूपणमवधारणं निश्चयरूप एव प्रधानार्थो ज्ञातव्यः ।**

**तथा निर्भरत्वानुसन्धानम् परमेश्वर एव सर्वजीवराशेर्भरणपोषणरक्षणादिकं करोतीत्याकारकार्थस्यानुक्षणमनुचिन्तनकरणमेवानुसन्ध्यर्थ उच्यते । तदाहुर्जगद्गुरवः श्रीगङ्गाधराचार्याः-'रामस्य ब्रह्मणः प्रीतेर्मनोज्ञः संश्रयश्च यः । उक्तश्चरममन्त्रस्य तात्पर्यार्थो बुधैर्हि सः ॥ प्रापकस्य च जीवस्य यत्स्वरूपनिरूपणम् । तद्धि चरममन्त्रस्य मुख्यार्थत्वेन सम्मतम् ॥ श्रीमद्रामस्य यद्रम्यं दासपोषणचिन्तनम् । तत्र चरममन्त्रस्यानुसन्धानार्थता मता' इति ।**

**एवं च चरममन्त्रेण सकलफलसिद्धये परमोपायलक्षणासर्वदेशिकसार्वकालिकसर्वजातिसर्वावस्थोचिता भगवतः प्रपत्तिः षट्प्रकारिका सैव प्रति**

**पादिता भवति । तदुक्तं 'आनुकूल्यस्य सङ्कल्पः प्रातिकूल्यस्यवर्जनम् । रक्षिष्यतीति विश्वासो गोमृत्ववरणं तथा । आत्मनिक्षेपकार्पण्ये षड्विधा शरणागतिः' इत्यादिवचनप्रामाण्येन, आनुकूल्यसङ्कल्पप्रातिकूल्यवर्जनरक्षणादिविषयक विश्वासगोमृत्ववरणात्मनिक्षेपकार्पण्यभेदात् शरणागतिषट्प्रकारिका भवति । पुनश्च सा कायिकवाचिकमानसिकभेदात् त्रिधा भवति । एतद्विषये विशेषविचारोऽन्यत्र करिष्ये ॥४४॥**

हे सुरसुरानन्द ! इस चरम मन्त्र बोधक अन्तिम श्लोक का 'आत्मानन्दमयोमलः' 'सत्यं ज्ञानमानन्दं ब्रह्म' इत्यादि श्रुति स्मृति पुराणादि सिद्ध सच्चिदानन्द सर्व दोषरहित सकल कल्याणगुणास्पदक जो परमेश्वर श्रीरामजी का स्वरूप है तादृश ईश्वर स्वरूप का निरूपण करना यही प्रधानार्थ है ऐसा प्राचीन ऋषियों ने कहा है। तथा भगवान् श्रीसीतानाथजी ही सकल जीव का धारण पोषण रक्षणादिक करते हैं। इस बात का निरन्तर अनुचिन्तन करना यही इस चरम मन्त्र का अनुसन्ध्यर्थ है।

इस तरह चरम श्लोक से सकल प्रयोजन के सिद्धि के लिए परमोपायरूप सर्वदेश, सर्वकाल, सर्वजाति, सर्वावस्थातीत प्रपत्ति का ही कथन किया गया है। भगवत्प्राप्ति में परमोपायरूप यह प्रपत्ति ६-प्रकार की है। तथाहि-'**आनुकूल्यस्य सङ्कल्पः प्रातिकूल्यस्य वर्जनम् । रक्षिष्यतीति विश्वासो गोमृत्ववरणं तथा । आत्मनिक्षेप कार्पण्ये षड्विद्या शरणागतिः**' इस वचन से आनुकूल्य का सङ्कल्प प्रातिकूल्य का वर्जन, रक्षण विषय का विश्वास गोमृत्ववरण आत्मनिपेक्ष और कार्पण्य यह छ प्रकार का भेद प्रपत्ति शरणागति का है। पुनः प्रपत्ति कायिक वाचिक मानसिक भेद से तीन प्रकार की है। इसका विशेष रहस्य साम्प्रदायिक तात्विक विद्वानों से जानिये। इस तरह कि जाप्यं यह जो श्रीसुरसुरानन्दाचार्यजी का द्वितीय प्रश्न था, उसका निरूपण आचार्यजी ने किया ॥४४॥

卐 श्रीमते रामचन्द्राय नमः 卐

**द्वितीयो हि परिच्छेदो व्याख्यया पूर्णतां गतः ।**
**अनेन कोशलाधीशः प्रीयतामिति मे मतिः ॥**

❀ शुभं भवतु सर्वजगतः ❀

卐 श्रीरामः शरणं मम 卐



卐 अथ ध्याननिरूपणात्मकं तृतीयप्रकरणम् 卐

**अथोच्यते महाप्राज्ञ ध्यानं ध्येयस्य चिन्तनम् ।**
**बुधैरात्मपरैर्नित्यं जितप्राणैर्जितेन्द्रियैः ॥१॥**

**एतावता सपरिकरेण गतप्रकरणेन संसारसागरपारमिच्छद्भिर्विरक्तैरनुष्ठेयत्वेनाभिमतं मोक्षप्रापकं रहस्यत्रयात्मकं जाप्यं मन्त्रस्वरूपं निरूप्य तदनुध्यान विषयकं तृतीयं प्रश्नमुत्तरयितुं ध्यानस्वरूपप्रतिपादनायोपक्रमते** 'अथोच्यते महा प्राज्ञ' **इत्यादि । हे महाप्राज्ञ सुरसुरानन्द ! अथ रहस्यत्रयरूपपरमजाप्य मन्त्रराजस्य निरूपणानन्तरंध्येयस्य ध्यातुं योग्यस्य परमात्मनः श्रीरामस्य बुधैर्विलक्षण बुद्धिशालिभिर्विद्वद्भिर्नित्यमनवरतम्, चिन्तनमेवानुस्मरणमेवध्यानं कथितम् । कथं भूतैर्बुधैस्तत्राह-**'जितप्राणैर्जितेन्द्रियैः' **इति जितानि बाह्येन्द्रियाणियैर्वशीकृतेन्द्रियाणीत्यर्थः पुनः जितप्राणैः प्राणायामपरायणैः तथाऽत्मरतैः परमात्मन्यनुरागवद्भिरिति ॥१॥**

'**किं जाप्यम्**' इत्याकारक द्वितीय प्रश्न का समाधान करके, '**किं ध्यानम्**' इत्याकारक तृतीय प्रश्न का समाधान करने के लिए आचार्य उपक्रम करते हैं '**अथो च्यते**' इत्यादि। हे महाप्राज्ञ सुरसुरानन्दाचार्य ! जिन्होंने इन्द्रिय के ऊपर जय प्राप्त कर लिया है, तथा प्राणायामपरायण है। और सर्वदा परमात्मा सम्बन्धी निरतिशय प्रेम युक्त हैं। एतादृश विद्वानों के ध्येय परमकारणरूप भगवान् श्रीरामजी का जो अनवरत स्मरण है उसीको ध्यान कहते हैं उस विषय को कहता हूँ सुनो ॥१॥

**विकचपद्मदलायतवीक्षणं विधिभवादिमनोहरसुस्मितम् ।**
**जनकजादृगपाङ्गसमीक्षितं प्रणतसत्समनुग्रहकारिणम् ॥२॥**
**मुनिमनः सुमधुव्रतचुम्बितस्फुटलसन्मकरन्दपदाम्बुजम् ।**
**बलवदद्भुतदिव्यधनुः शरामहितजानुविलम्बिमहाभुजम् ॥३॥**
**परार्ध्यहाराङ्गदचारुनूपुरं सुपद्मकिञ्जल्कपिसङ्गवाससम् ।**
**लसद्घनश्यामतनुं गुणाकरं कृपार्णवं सद्हृदयाम्बुजासनम् ॥४॥**
**प्रसन्नलावण्य सुभृन्मुखाम्बुजं जगत्शरण्यं शरणं नरोत्तमम् ।**

**दयापरं दाशरथिं महोत्सवं स्मरामि रामं सह सीतया सदा ॥५॥**

**द्विभुजस्यैव रामस्य सर्वशक्तेः प्रियोत्तम !**

**ध्यानमेवं विधातव्यं सदाराम परायणैः ॥६॥**

इत्यानन्दभाष्यकारजगद्गुरुश्रीरामानन्दाचार्ययतिराजप्रणीते श्रीवैष्णवमताब्जभास्करे ध्यानिरूपणात्मकस्तृतीय प्रश्नोत्तराख्यस्तृतीयः परिच्छेदः ॥३॥

**ध्यानस्वरूपमाह**-विकचेत्यादि **विकचपद्मदलायतवीक्षणम्-प्रफुल्लित कमलपत्रवत् विशाललोचनयुक्तम्** 'विधिभवादिमनोहरसुस्मितम्-**तत्र विधिर्ब्रह्मा भवः शिवः आदिपदात् शेषादिस्तेषामपीषद्धासेनैवमनोहरहासयुक्तम्**। जनकजा दृगपाङ्गसमीक्षितम्, **जनकजा सीता तस्यानेत्रकोणेन सदा सादरेण दृष्टम्** 'प्रणत सत्समनुग्रहकारिणम्' **प्रणतिं कुर्वतां सतां प्रपन्नानामुपरि अनुग्रहकुर्वाणं** दयापरं प **रमदययासदायुक्तं श्रीसीतया च सुशोभितं दशरथापत्यं द्विभुजं श्रीरामं सदाहं स्म रामि तैलधारावदविच्छिन्नप्रत्यक्षसमानाकारज्ञानविषयं करोमीत्यग्रेण सम्बन्धः**। मुनिमनः इत्यादि, मुनीनां मनांसि मुनिमनांसि तान्येव सुशोभनाः भगवच्चरण चिह्नचिन्तकत्वेन रसज्ञा मधुव्रताभ्रमरास्तादृशभ्रमरैरास्वादितं विकसितं लसन्म करन्दं पदाम्बुजं यस्य तादृशम्। 'बलवदद्भुतदिव्यधनुः शरामहितजानुविलम्बि महाभुजम्' अनेकप्रकारकबलशक्तिसम्पन्नौ सोन्दर्यादिगुणेन मनोहरौ दिव्यौ शार्ङ्गधनुर्बाणाभ्यासादासमन्तात्पूजितौ जानुपर्यन्तं लम्बायमानौ महाबाहू यस्य तादृशम् 'परार्ध्यहाराङ्गदचारुपूपुरम्' अमूल्यमाल्याङ्गदमनोहरनूपुरधारिणम् 'सुप द्मकिञ्जल्कपिसङ्गवाससम्' मनोजकमलकिञ्जल्कसदृशपीतवस्त्रधारिणम्। 'लस द्घनश्यामतनुम्' नीलमेघवद् श्यामलशरीरम्, अनन्तकल्याणगुणसागरम् कृपा याः समुद्ररूपम्। 'सद्हृदयाम्बुजासनम्' प्रपन्नहृदयकमलरूपासनवन्तम्। प्रसन्न लावण्यसुभृन्मुखाम्बुजम्' लावण्यमनुक्षणम् अभिनवसौन्दर्यं तद्युक्तं प्रसन्नमुख कमलम्।

जगत्शरण्यं शरणे समागतविश्वजनपालकम्, शरणं सकलब्रह्माण्डस्य रक्षकम्, महोत्सवं **सर्वदैवविलक्षणमहोत्सवेन युक्तम्। नरोत्तमं नरश्रेष्ठं परमात्मा** नम् श्रीरामं श्रीसीतयासहस्मरामि। हे **प्रियोत्तम सुरसुरानन्द** ! द्विभुजस्य नतु



**चतुर्भुजस्य सर्वशक्तिसम्पन्नस्य श्रीरामचन्द्रस्य श्रीरामपरायणैः श्रीरामसेवकैः सदैव ध्यानं विधातव्यं कर्तव्यमिति** ॥२-६॥

卐 इति प्रभाटीकायां तृतीयपरिच्छेदः 卐

**भगवान्** श्रीरामजी का ध्यान करना चाहिए संसार सागर से उद्धृत होने के लिए, **ऐसा कहा** गया है। इसमें कीदृश श्रीरामरूप का ध्यान करना ? इस जिज्ञासा के उत्तर में आचार्यजी ध्येय स्वाभिलषितरूप को बतलाने के लिए कहते हैं '**विकच पद्मदलायतेत्यादि**' हे सुरसुरानन्द ! विकसित पद्मदल प्रफुल्लित कमलदल के समान आयत लङ्घयमान नेत्र-आँख हैं जिनकी, तथा जिनका मनोहर ईषत्हास्य ब्रह्मा प्रभृति क देवगण के मन को भी अतिशय मनोहारी है अर्थात् मोहित करनेवाले। और जिन **भगवान्** श्रीरामजी का मुखकमल भगवती श्रीसीताजी के कटाक्ष से सतत देखा जाता है। **प्रणाम** मात्र करने से प्रपन्न व्यक्तियों के ऊपर अनुग्रह करनेवाले। तथा जिन **भगवान्** का चरणकमल अच्छी तरह से विकसित है तथा मुनिगण के मनरूपी मधुलोभी भ्रमरों से चुम्बित-सदा सेवित है। तथा जो भगवान् आजानुबाहु हैं। तथा एतादृश भुजाओं में अति सामर्थ्ययुक्त अद्भुत आश्चर्य कार्यकारी दिव्य लोकोत्तर धनुष तथा बाण विद्यमान हैं। एवं जो भगवान् बहुमूल्य मनोहर कण्ठहार तथा अंगद केयूर विजोंठा, और नूपुर प्रभृतिक अनेक आभूषणों से युक्त है। एवं कमल किञ्जल्क की तरह पीत वस्त्र से सर्वदा सुशोभित हैं, और जिन भगवान् का श्रीविग्रह शरीर आषाढ़ **मासिक** नीलमेघ की तरह श्यामल है। श्रीतुलसीदासजी ने भी इत विलक्षण विग्रह का '**केकीकण्ठाभनीलम्**' इस तरह मयूर नीलिमा से उपमित किया है। जो भगवान् **हेयप्रत्यनिक** अनन्तगुणकल्याण गुणों का आकर हैं। तथा कृपा का समुद्र है इसलिए **मुनिलोग** इनको दयासागर कहते हैं। भक्त प्रपन्न व्यक्तियों का हृदय कमल ही **जिनका** आसन है। अर्थात् जो भक्त के हृदय में सदा निवास करते हैं। क्योंकि '**मद्भक्ता यत्र** गायन्ति तत्र तिष्ठामि' ऐसा कथन है। यद्यपि भगवान् जो कि ज्ञाना नन्द **अमल** स्वरूपक हैं। वह तो सर्वव्यापक होने से सर्वत्र सर्वदा विराजमान हैं। उनके **लिए** स्थान विशेष का कथन अयुक्तप्राय मालूम पडता है। तथापि '**ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति**' इत्यादि शास्त्र से उपासना के लिए स्थान विशेष का कथन **यत्र** तत्र किया गया है वह सर्वथा युक्त ही है। और **जिनका** मुखकमल विल

क्षण शोभा से सर्वदा युक्त रहता है। तथा जो परमात्मस्वरूप हैं। और शरणागत व्यक्तियों के रक्षण करने के लिए सर्वदा प्रयत्नशील रहते हैं। वे एक दो व्यक्तियों का ही रक्षण करते हैं ऐसा नहीं किन्तु जगत् मात्र का सम्पूर्ण जगत् का रक्षक हैं नरोत्तम हैं। दशरथराजा के पुत्ररूप से अवतार लिया है। जो स्वयं महोत्सवरूप हैं। तथा श्रीसीताजी से सदा युक्त हैं। एतादृश श्रीरामजी का मैं सदा स्मरण करता हूँ। हे प्रियोत्तम सुरसुरानन्द ! सर्वशक्तिमान् द्विभुज श्रीरामजी का शुभेच्छु श्रीराम भक्त पुरुष सदा ध्यान करें। तुम भी उन्हीं का ध्यान करो ॥२-६॥

卐 इति श्रीवैष्णवमताब्जभास्करे तृतीयपरिच्छेदः-३ 卐

ॐ अथ मुक्तिसाधननिरूपणम् चतुर्थप्रकरणम् ॐ

**एवं तेऽभिहितं ध्यानं श्रृणु तन्मुक्तिसाधनम्।**
**मुमुक्षूणां परं वेद्यं विधेयं चाथ सर्वदा ॥१॥**

तृतीयप्रश्नस्योत्तरं प्रदाय मोक्षसाधनं किमिति चतुर्थप्रश्नमुत्तरयितुमुपक्रमते-'एवं तेऽभिहितं ध्यानमित्यादि। हे सुरसुरानन्द ! ध्यानम् एवं यथोक्तप्रकारेण तुभ्यमभिहितं कथितम्। अनन्तरम् तन्मुक्तिसाधनं त्वया पृष्टं यन्मुक्तेः कारणम् किमिति अथ तादृशं मुक्तिकारणम् कथयामि त्वं सावधानमना श्रृणु। किमाकारकम् तत् तत्राह सर्वदा सर्वतोभावेन परम् अतिशयेनोत्कृष्टम् मोक्षसाधनतयैवोत्कृष्टत्वम् तथा मुमुक्षूणां संसारसागरतितीर्षतां विधेयं विधातुं योग्यम् वेद्यं वेदितुं योग्यमेतादृशमोक्षकारणम् कथयामि तत् श्रृणु श्रुत्यावधार्यतां सम्पादयेतिभावः ॥१॥

श्रीआचार्यजी महाराज ध्यान क्या है ? इस तृतीय प्रश्न का समाधान करके, 'किं मुक्तिसाधनम्' इत्याकारक चतुर्थ प्रश्न का उत्तर देने के लिए उपक्रम करते हैं 'एवं तेऽभिहितं ध्यान' मित्यादि। हे सुरसुरानन्द ! पूर्वकथित प्रकार से ध्यान के स्वरूप का प्रतिपादन किया। इसके वाद जो चतुर्थ प्रश्न है उसका उत्तर सुनो। संसार सागर को पार करने की ईच्छावाले पुरुषों से जानने के योग्य उस मुक्ति साधन को सुनो तथा उसका आचरण करो ॥१॥

**तप्तेन मूले भुजयोः समङ्कनं शरेणचापेन तथोर्ध्वपुण्ड्रकम्।**



**श्रुतिश्रुतंनाम च मन्त्रमालिके संस्कारभेदा परमार्थहेतवः ॥२॥**

मोक्षसाधनात्मकपञ्चसंस्कारस्वरूपम् दर्शयति 'तप्तेन मूले इत्यादि' हे सुरसुरानन्द श्रुतिश्रुतम् श्रुतिस्मृत्यादिषु श्रुतं प्रतिपादितं श्रुत्यादिजनितशाब्दबोधविषयीभूतम् तप्तेन वह्नौ तापितेन शरेण बाणेन चापेन भुजयोर्मूले समङ्कनं कर्तव्यम्। तदुक्तम् 'तापपुण्ड्रं तथा नाममालामन्त्रश्च पञ्चमः। अमी परमसंस्काराः परमैकान्तहेतवः' इतिप्रथमसंस्कारः। तथा श्रीरामरजस्वरूपश्वेतमृत्तिकयोर्ध्वपुण्ड्रम् कर्त्तव्यमिति द्वितीयः संस्कारः। तथा श्रुतिविहितं नामापि कर्तव्यम्। 'यस्मिन्मासे भवेद्दीक्षातन्मूर्तिनामनोदितम्। शक्त्यावेशावताराणां वर्जयेन्नाम वैष्णवः' इत्युक्त्या भगवन्नामसम्बन्धयुक्तमेव श्रीवैष्णवनाम्ना भाव्यं तथा च रामदासादिनाम कर्तव्यं नतु गृहस्थनाम्नापरिचाययेदिति तृतीयसंस्कारः। तथा श्रुतिविहितौ मालामन्त्रौ तुलसीजामालाधार्या मन्त्रश्च गृहीतव्यः तत्र माला तुलसीकाष्ठनिर्मितैव कर्तव्या तदुक्तं-'अष्टोत्तरशतैनैव तुलसीकाष्ठसंभवा। कण्ठादिनाभिपर्यन्ता धारयेद्वैष्णवोत्तमः' इति। मन्त्रस्तु षडक्षरश्रीराममन्त्रः परिगृहीतव्यः। तदुक्तं 'मन्त्ररूपं प्रवक्ष्यामि श्रृणु नारद तत्वतः। रकारादिमकारान्तं मन्त्रं षड्वर्णसंयुतम्। इतिचतुर्थपञ्चमसंस्कारौ। एते पञ्चसंस्कारभेदाः। परमार्थस्य दुःखनिवृत्तिपूर्वकनिरतिशयानन्दरूपसायुज्यमोक्षस्य परमोपायभूतास्तस्मादेते पञ्चसंस्कारा एव मोक्षसाधनं नान्यत् किमपि मोक्षहेतुरिति विवेकः।

तदत्रानुसन्धेयं पञ्चसंस्कारविषये-धनुर्बाणधारणस्य माहात्म्यम् शुक्लयजुर्वेदसंहिता अ.२९मं. ३९।४८

धन्वना (ङ्किता) गाधन्वनाजिंजयेम धन्वना तीव्राः समदो जयेम।
धनुः शत्रोरपक्रामकृणोति धन्वना सर्वाः प्रदिशो जयेम ॥
सुपर्णं वस्ते मृगो अस्या दन्तो गोभिः सन्नद्धा पतति प्रसूता।
यत्रा नरः सं च वि च द्रवन्ति तत्रास्मभ्यमिषवः शर्मसंसन् ॥४८॥

यो वै नित्यं धनुर्वाणाङ्कितो भवति स पाप्मानन्तरति संसारन्तरति स भगवदाश्रितो भवति स भगवद्रूपो भवति।

श्रीमद्रामायणे किष्किन्धाकाण्डे सर्गे १७

तदस्त्रं तस्य वीरस्य स्वर्गमार्गप्रभावनम्।

रामबाणासनक्षिप्तमावहत् परमाङ्गतिम् ॥८॥

महारामायणे सर्गे २

चक्रात् फलं शतगुणं धनुषा शरेण यश्चाङ्कितोऽस्ति स च रामजनाग्रगण्यः ।
सायुज्यमेव लभते किल तत्क्षणे वै रामः प्रियः प्रियतरोऽनुदिनं च तस्य ॥१८॥
तेन प्रसन्नमनसा समुदारबुद्ध्या तप्तं धनुः शरमिदं भुजयोः प्रकुर्यात् ।
पूजां पुनः प्रकुरुते विविधैश्च रत्नैस्तस्मिन्क्षणे भवति जीवन एव मुक्तः ॥२१॥
वामे करे च धनुषा च शरेण सव्ये यश्चाङ्कितो हि मनुजो नरलोकधन्यः ।
तस्मै नमन्ति शिरसा द्रुहिणादिदेवास्तद्दर्शनेन मनुजाः किल कल्मषघ्नाः ॥२२॥
श्रीरामसंस्कारविवर्जिता ये निष्पुच्छश्रृङ्गाः पशवो नरास्ते ।
शक्ता न वेदा अभिवर्णितुं यत्तुभ्यं मयाख्यातमविस्तरेण ॥२६॥

अमररामायणे सर्गे १

मम शूलाच्छक्तिशूलाद् विष्णुचक्रात् परात्परौ ।
दीव्यन्तौ श्रीराममुष्ट्या धनुर्वाणौ नमाम्यहम् ॥

स्कन्दपुराणे काशीखण्डे अ. २१।३६

चापोसि सर्वशस्त्राणां वातो वेगवतामसि ।

स्कन्दपुराणे माहेश्वरखण्डे अ. ४।७४।

आयान्तं चक्रमालोक्य ग्रसितं तत्क्षणाच्च तत् ।
ग्रसितं चक्रमालोक्य विष्णुः परपुरञ्जयः ।
मुखं तस्य परामृज्य विष्णुनोद्गलितं पुनः ॥७४॥

पद्मपुराण पातालखण्डे अ. ५२।३० श्रीरामास्त्रप्रभावः

कपिः पाशुपतैरस्त्रैर्बद्धो लोकैरभीक्षितः ।
हाहेति च वदन्त्येते यावत्तावत्समीरजः ॥
स्मृत्वा रामं स्वमनसा त्रोटयामास तत्क्षणात् ।
समुक्तगात्रः सहसा युयुधे सुरथं नृपम् ॥३१॥
तं मुक्तगात्रं संवीक्ष्य सुरथः परमास्त्रवित् ।
महाबलं मन्यमानो ब्राह्ममस्त्रं समाददे ॥३२॥
मारुतिर्ब्राह्ममस्त्रं तु निजगाल हसन् बली ।



तन्निगीर्णं नृपो दृष्ट्वा रामं सस्मार भूमिपः ॥३३॥
स्मृत्वा दाशरथिं रामं रामास्त्रं स्वशरासने ।
सन्ध्याय तं जगादेदं बद्धोऽसि कपिपुङ्गव ॥३४॥

पद्मपुराणे पातालखण्डे अ. ४४।१५ शिवत्रिशूलदशा

तदाऽऽहतो भूतपतिः शूलं तीक्ष्णं समाददे ।
जाज्वल्यमानं त्रिशिखं वह्निज्वालासमप्रभम् ॥१५॥
आयान्तं तन्महद् दृष्ट्वा शूलं प्रज्वलनप्रभम् ।
हस्ते गृहीत्वा तरसा बभञ्ज तिलशः क्षणात् ॥

श्रीअगस्त्यसंहितायाम्

नाङ्कितो चापवाणाभ्यां न मन्त्रोस्ति षडक्षरः ।
न नाम रामसम्बन्धि न रामोपासको भवेत् ॥
बाहुमूले धनुर्वाणेनाङ्कितो रामकिंकरः ।
शीतलेनाथतप्तेन तस्य मुक्तिर्न संशयः ॥
शीतलाच्छतगुणं प्रोक्तं तप्तं च परिधार्यते ।
अङ्किताः सर्वकालेषु चतुवर्णाश्रमादयः ॥
चक्राच्छतगुणं प्रोक्तं फलं बाणादिधारणे ।
सर्वेषां रामभक्तानां राममुद्राभिधारणम् ॥

धनुर्बाणयोः परम्परा 'सदाशिवसंहितायाम्'

शीताङ्कितो धनुर्बाणात् प्रथमं च महाशिवः ।
सीतया ह्यङ्कितः पश्चाद्धनुमांश्च हरिप्रियः ॥
महाशंभुः शिवं प्राह स शिवो नारदं तथा ।
नारदश्चाह वाल्मीकिं वाल्मीकिश्च लवं कुशम् ॥
हनुमांस्तु अगस्त्याय अगस्त्यश्च सुतीक्ष्णकम् ।
सुतीक्ष्णेन महाभागा येऽङ्किता वहवो मुने ॥

पुनः तत्रैव-

सुरगुर्वादिगुरवो राममन्त्रस्य सेवकाः ।
श्रीगुरोर्मारुतिः शिष्यः सुग्रीवश्च कपीश्वरः ॥

श्रीरामायुधतप्तौ च राममन्त्रस्य धारणात् ।
पद्माष्टदशसंख्याता: स्वसैन्याश्च हनूमता ॥
दीक्षितास्तेन मन्त्रेण धनुर्बाणेन चाङ्किता: ।
श्रीहनुमच्छिष्यो भूतो महाराजो विभीषण: ॥
रामायुधाभ्यां तप्ताभ्यामङ्कितांश्च समुद्रया ।
तथा तस्य प्रजा: सर्वा: चिह्निता रामलांछनै: ॥
राजमार्गमिमं विद्धि रामोक्तं जानकीकृतम् ।
यद्दते चान्यमार्गस्तु चौराणां वीथिका यथा ॥
पूर्वाचार्यं हनूमन्तं त्यक्त्वा ह्यन्यमुपासते ।
क्लिश्यत्येव च मुग्धस्तु मूलहा पल्लवाश्रित: ॥ इति ।

ऊर्ध्वपुण्ड्रसंस्कारविषये उत्तरपराशरस्मृतौ २ अध्याये

स्थण्डिले सैकते वापि ह्यपलिप्य ततो गुरु: ।
द्वादशैतानि पुण्ड्राणि लिखेतास्मिन् यथाक्रम: ॥
अष्टपुण्ड्रान्यष्टदिक्षु मध्ये चत्वारि विन्यसेत् ।
व्याहरन्सर्वपुण्ड्रेषु केशवादीन्यथाक्रम: ॥
आवाहनार्घ्यपाद्यश्च धूपदीपनिवेदनै: ।
पुण्ड्राणि धारयेच्छिष्यमासीनं विनयान्वितम् ॥

स्कन्दपुराणे वैष्णवखण्डे मार्गशीर्षमा. अ. २।११। तथा पद्मपुराणे उत्तरखण्डे अ. २२५।४५।

विमलां मृत्तिकां रम्यामादाय द्विजसत्तम ।
मन्त्रेणैवाऽभिमन्त्र्याऽथ ललाटादिषु वैष्णव: ॥
धारयेदूर्ध्वपुण्ड्राणि यथासंख्यमतन्द्रित: ।
ब्रह्मन्द्वादशपुण्ड्राणि ब्राह्मण: सततं वहेत् ॥
ललाट उदरे चाथ वक्षसि कण्ठकूबरे ।
कुक्ष्योर्वाह्वो: स्कन्दयोश्च पृष्ठं त्रिके च वै शिर: ॥
तिलका द्वादशप्रोक्ता ब्राह्मणस्य सदाऽनघ ! ।
ललाटे केशवं ध्यायेन्नारायणमथोदरे ।



वक्ष:स्थले माधवं च गोविन्दं कण्ठकूबरे ।
विष्णुं च दक्षिणे कुक्षौ तद्बाहौ मधुसूदनम् ।
त्रिविक्रमं कन्धरायां वामनं वामपार्श्वके ।
श्रीधरं वाहुके वामे हृषीकेशं तु कन्धरे ।
पृष्ठे तु पद्मनाभं च त्रिके दामोदरं न्यसेत् ।
तत्प्रक्षालनतोयेन वासुदेवं तु मूर्धनि ।
एवं कार्यं ब्राह्मणस्य क्षत्रियस्योपधारयेत् ।
श्यामं शान्तिकरं प्रोक्तं रक्तं वश्यकरं तथा ।
श्रीकरं पीतमित्याहु: श्वेतं मोक्षकरं शुभम् ।
एकान्तिनो महाभागा: सर्वलोकहिते रता: ।
साऽन्तरालं प्रकुर्वन्ति पुण्ड्रं हरिपदाकृतिम् ।
मध्ये छिद्रेण संयुक्तमेतद्धि हरिमन्दिरम् ।
ऊर्ध्वं सौम्यमृजुं सूक्ष्मं सुपार्श्वं सुमनोहरम् ।
निरन्तरालं य: कुर्यादूर्ध्वपुण्डं द्विजाधम: ।
सहि तत्र स्थितं लक्ष्म्या सह माञ्च व्यपोहति ।
अच्छिद्रमूर्ध्वपुण्ड्रं तु ये कुर्वन्ति द्विजाधमा: ।
तैर्ललाटे शुन: पादं निक्षिप्तं वै न संशय: ।
तस्माच्छिद्रान्वितं पुण्ड्रं महच्छिद्रं शुभान्वितम् ।
धारयेद् ब्राह्मणोनित्यं हरिसालोक्यसिद्धये ।

उपर्युक्ततिलके श्रीधारणक्रम:

श्रीदेवी प्रथमं नाम द्वितीयममृतोद्भवा ।
तृतीयं कमला प्रोक्ता चतुर्थं चन्द्रशोभिता ॥
पञ्चमं तु वरारोहा षष्ठं तु रामवल्लभा ।
सप्तमं विष्णुपत्नी स्यादष्टमं वैष्णवी तथा ॥
नवमं शार्ङ्गिणी प्रोक्ता देवदेवी दशैव च ।
एकादशं तु लक्ष्मी स्याद्द्वादशं सर्वसुन्दरी ॥
एवं ध्यात्वान्तरालेषु हरिद्रां धारयेच्छ्रियम् ।

यथा श्रियै नमः । अमृतोद्भवायै नमः इत्यादि ॥

स्कन्दपुराणे वैष्णवखण्डे मार्गशीर्षमा. ३।१९।

अनामिकाशान्तिदोक्ता मध्यमाऽऽयुष्करी भवेत् ।
अंगुष्ठः पुष्टिदः प्रोक्तस्तर्जनी मोक्षदायिनी ॥

अभिमन्त्रणमन्त्रः

उद्धृतासि वराहेण कृष्णेन शतवाहुना ।
आरुह्य मम गात्राणि सर्वपापं प्रमोचय ॥

लौगाक्षिस्मृतौ-

अंगुष्ठः पुष्टिदः प्रोक्तो मध्यमायुष्करी भवेत् ।
अनामिकान्नदा नित्यं तर्जनी मुक्तिभुक्तिदा ॥

अभिषिक्तं तु यच्चूर्णं विष्णुविम्बे तु यो नरः ।
हरिद्रां धारयेन्नित्यं सोऽश्वमेघफलं लभेत् ॥

पद्मोत्तरखण्ड अ. २२०

आरभ्यनासिकामूलमाकेशान्तं प्रकल्पयेत् ।
नासिकात्रितयं भागं नासिकामूलमिष्यते ॥

नासामूले हृदं प्रोक्तं तन्मध्येऽब्जद्विपत्रकम् ।
तन्मध्ये च हरेः पादौ कर्णिकायां श्रीरुच्यते ॥

तिलके १७ दोषा भरद्वाजसंहिता अ. ४ तथा पद्मपुराणे उत्तरखण्डे अ. २२५

वर्तुलं तिर्यगच्छिद्रं ह्रस्वं दीर्घततं तनुम् ।
वक्रं विरूपं बद्धाग्रछिन्नमूलं प्रदच्युतम् ।

अशुभ्रं रूक्षमासक्तं तथाऽनंगुलिकल्पितम् ।
विगन्धमपसव्यं च पुण्ड्रमाहुरनर्थकम् ।

वाल्मीकिसंहितायाम् ४

हरेः पादाकृतिं कुर्यान्मध्यच्छिद्रसमन्वितम् ।
ऊर्ध्वपुण्ड्रं स्वमोक्षाय दुःखनाशाय सर्वथा ॥

आचम्यैवोर्ध्वपुण्ड्रं तु शुद्धया च मृदा सदा ।
कुर्याच्चाथान्तरालेषु हरिद्राधारणं तथा ॥



पूर्वं सिंहासनं कुर्युस्ततः पार्श्वद्वयं पुनः ।
ततः पश्चाच्च तन्मध्ये लिखेयुः सुन्दरीं श्रियम् ॥

पद्मपुराणे उत्तरखण्डे अ. २२५

अश्वत्थपत्रसंकाशं वेणुपत्राकृतिस्तथा ।
पद्मकुड्मलसंकाशा मोहने श्रीस्त्रिधा स्मृता ॥

प्रदीपकलिकाकारा या रेखापुण्ड्रमध्यगा ।
तस्या रूपेण लक्ष्मीस्त्वं कलया सन्निधिं कुरु ॥

ॐ लक्ष्मीप्रेमसमुद्भूते हरिद्रे हेमसन्निभे ।
विभर्मि त्वां महाभागे वरदा भव ते नमः ॥

हरिद्रातिपरप्रेम्णा णिजर्थोऽत्र विचार्यताम् ।
प्रापणाच्च हरेः साक्षाद्धरिद्रेयं प्रकीर्तिता ॥

बृहद्ब्रह्मसंहिता पाद ३ अ. १०

पुण्ड्ररूपेण मां विद्धि रेखारूपेण वै श्रियम् ।
संधारयन्ति ये भाले बाहुवक्षस्थलादिषु ॥

हरिद्रासंभवं चूर्णं टङ्कणेन समन्वितम् ।
भावितञ्चाम्लद्रव्येण रक्तत्वमुपयाति हि ॥

बृहद्वैष्णवपद्धतौ पत्रा २८

श्रियमेकां तु यः कुर्यात् द्विरेखातिलकं विना ।
तस्य लक्ष्मीर्भवेद्रुष्टा धर्मादिश्च विनश्यति ॥

सश्रीतिलकहीनस्तु यः पूजयति केशवम् ।
निष्फलं पूजनं तस्य स सन्ध्यावन्दनादिकम् ॥

सश्रियं तिलकं कुर्यात् सायुज्यादिफलप्रदम् ।
तस्य विष्णुर्भवेत्तुष्टो मुक्तिश्चैव करे स्थिता ॥

स्कन्दपुराणे वैष्णवखण्डे मार्घशीर्षमा. अ. ३

अशुचिर्वाप्यनाचारो महापापं समाचरेत् ।
शुचिरेव भवेन्नित्यमूर्ध्वपुण्ड्राङ्कितो नरः ।

मत्प्रियार्थं शुभार्थं वा रक्षार्थं चतुरानन ।

मत्पूजाहोमके चैव सायं प्रातः समाहितः ।
मद्भक्तो धारयेन्नित्यमूर्ध्वपुण्ड्रं भवापहम् ॥१५॥
ऊर्ध्वपुण्ड्रधरो मर्त्यो म्रियते यदि कुत्रचित् ।
श्वपाकोऽपि विमानस्थो मम लोके महीयते ॥१६॥
यज्ञो दानं तपो होमः स्वाध्यायः पितृतर्पणम् ।
व्यर्थं भवति तत्सर्वमूर्ध्वपुण्ड्रं विना कृतम् ॥२१॥
यच्छरीरं मनुष्याणामूर्ध्वपुण्ड्रं विना कृतम् ।
तन्मुखं नैव पश्यामि श्मशानसदृशं हि तत् ॥२२॥

तुलसीकाष्ठचन्दनस्कन्दपुराणे वैष्णवखण्डे कार्तिकमा. अ. २३

पुष्काराद्यानि तीर्थानि गङ्गाद्याः सरितस्था ।
वासुदेवादयो देवास्तिष्ठन्ति तुलसीदले ॥१४॥
विष्णोः सायुज्यमाप्नोति सत्यं सत्यं नृपोत्तम ।
तुलसीकाष्ठजं यस्तु चन्दनं धारयेन्नरः ॥१६॥

तथा पद्मपुराणे उत्तरखण्डे अ. १०५।१७

तुलसीकाष्ठजं यस्तु चन्दनं धारयेन्नरः ।
तद्देहं न स्पृशेत्पापं क्रियमाणमपीह यत् ॥

बृहद्हारीतस्मृतौ अ. २

तमसो भस्म रजसो गन्धः सत्वस्य मृत्तिका ।
तस्माद्भस्मादिभिर्नेच्छेदेकान्तशुद्धिमात्मनः ॥

बृहन्नारदीयपुराणे पूर्वखण्डे अ. १३

ऊर्ध्वपुण्ड्रधरो यस्तु तुलसीमूलमृत्स्नया ।
श्रीगोपीचन्दनेनापि चित्रकूटमृदापि वा ॥

लौगाक्षिस्मृतौ तथा पद्मपुराणे उत्तरखण्डे अ. २२५

पर्वताग्रे नदीतीरे विष्णुक्षत्रे विशेषतः ।
सिन्धुतीरेऽथ वल्मीके तुलसीमूलमाश्रिते ॥
मृद एतास्तु संग्राह्या वर्ज्याश्चान्याश्च मृत्तिकाः ।
विष्णोः स्नानोदकं यत्र प्रवाहयति नित्यशः ।



पुण्ड्राणां धारणार्थाय गृह्णीयात्तत्र मृत्तिकाम् ॥
हरेः पादाकृतिं कुर्यादूर्ध्वपुण्ड्रं विधानतः ।
मध्यच्छिद्रेण संयुक्तं तद्धि वै मन्दिरं हरेः ॥२२॥
समारभ्य भ्रुवोर्मध्यमन्तरालं प्रकल्पयेत् ।
अन्तरालं द्व्यंगुलं स्यात्पार्श्वाविंगुलिमात्रकौ ॥४४॥
नित्यं नैमित्तिकं कर्म लौकिकञ्चैव वैदिकम् ।
ऊर्ध्वपुण्ड्राङ्कितः कुर्यात् तत्तत्फलमवाप्नुयात् ॥

बृहद्ब्रह्मसंहितायां पादे ३ अ. १०

प्रणवावयवास्तिस्त्रस्त्रयो देवाः प्रकीर्तिताः ।
तिस्रो व्याहृतयस्त्रीणि छन्दांसि ज्वलनस्त्रयः ॥१३१॥
त्रीणि तत्त्वानि पुण्ड्रेषु चिन्तनीयानि सूरिभिः ।

बाधूलस्मृतौ

ऊर्ध्वगत्यां तु यस्येच्छा तस्योर्ध्वं पुण्ड्रमुच्यते ।
ऊर्ध्वगत्यां तु देवत्वं स प्राप्नोति न संशयः ॥

ब्रह्मोक्तयाज्ञवल्क्यसंहितायां अ. २।३१

वेणुपत्रदलाकारं वैष्णवं तिलकं स्मृतम् ।
अर्द्धचन्द्रे तथा शैवं शाक्तेयन्तिर्यगुच्यते ॥

३-नामसंस्कारबृद्धहारीतस्मृतौ अ. २।९१

तृतीयं नामसंस्कारं कुर्वीत शुभवासरे ।
स्नात्वा संपूज्य देवेशं गन्धपुष्पादिभिर्गुरुम् ॥
नामाधिदैवतं पश्चात् पूजयेत् प्रयतात्मवान् ॥९३॥
द्वादशैव तु मासास्तु केशवाद्यैरधिष्ठिताः ।
आरभ्य मार्गशीर्षं तु यदा संख्या द्विजोत्तमः ॥९४॥
यस्मिन्मासि भवेद्दीक्षा तन्मूर्त्तेर्नाम चोदितम् ।
नृसिंहरामकृष्णाख्यं दासनाम प्रकल्पयेत् ९५॥
शक्त्यावेशावताराणां वर्जयेन्नाम वैष्णवः ।
नाम दद्यात्प्रयत्नेन वैष्णवं पापनाशनम् ॥९६॥

**यस्य हि वैष्णवं नाम नास्ति चेत्तु द्विजन्मनः ।**
**अनामकः सविज्ञेयः सर्वकर्मसुगर्हितः ॥९७॥**
**चक्रस्य धारणं यस्य जातिकर्मणि सम्भवेत् ।**
**तत्र वै मासनामापि दद्याद्विप्रो विधानतः ॥**
**ध्यात्वा समर्च्चयेन्नाममूर्त्तिमन्त्रेण देशिकः ॥९८॥**
**धूपं दीपञ्च नैवेद्यं ताम्बूलञ्च समर्पयेत् ।**
**प्रदक्षिणमनुव्रज्य भक्त्या सम्यक् प्रणम्य च ॥**
**तन्मन्त्रं मूलमन्त्रं वा जपेत् सहस्रसङ्ख्यया ।**
**पश्चाद्धोमं प्रकुर्वीत शतमष्टोत्तरं हविः ॥१००॥**
**वैष्णवैरनुवाकैश्च जुहुयात् सर्पिषा तदा ।**
**नाम दद्यात् ततः शिष्यं मन्त्रतोये समाप्लुतम् ॥**
**ततः पुष्पाञ्जलिं दत्त्वा होमशेषं समापयेत् ।**
**वैष्णवान् भोजयेत् पश्चाद्दक्षिणाद्यैश्च तोषयेत् ॥१०२॥**
**एवं हि नामसंस्कारं कुर्वीत द्विजसत्तमः ।**

कृष्णयजुर्वेदमैत्रायणीयशाखाया मानवगृह्यसूत्रे १ पुरुषे १८ खण्डे
**यशस्यं नक्षत्राश्रयं नामधेयं देवताश्रयम् ॥**

ऋग्वेदे ७ मण्डले ५ अनुवाके ८६ सूक्ते ७ मन्त्रः
**अरं दासो न मीढुषे पराण्याहं देवाय भूर्णयेऽनागाः ॥**

अथर्वणोपनिषदि ब्रह्मसूक्ते अ. ६
**ब्रह्मदाशा ब्रह्मदासा ब्रह्म मे कितवाः ॥**

बृद्धहारीतस्मृतौ ३।१११ अध्याये
**यस्मिन् शरीरे जीवानां न दास्यं परमात्मनः ।**
**तदेव निरयं प्रोक्तं सर्वदुःखफलं भवेत् ।**
**दास्यमेवं फलं विष्णोर्दास्यमेव परं सुखम् ॥**
**दास्यमेव हरेर्मोक्षं दास्यमेव परं तपः ।**
**ब्रह्माद्याः सकला देवा वशिष्ठाद्या महर्षयः ।**
**काङ्क्षन्तः परमं दास्यं विष्णोरेव यजन्ति तम् ॥११२॥**



**तस्माच्चतुर्थ्या मन्त्रस्य प्रधानं दास्यमुच्यते ।**
**न दास्यवृत्तिर्जीवानां नाशहेतुः परस्य हि ॥११३॥**
**इत्थं सञ्चिन्त्य मन्त्रार्थं जपेन्मन्त्रमतन्द्रितः ।**

तत्रैव अ. १
**हरेर्दास्यैकपरमां भक्तिं यो लब्धमानवः ।**
**मुक्त इहैव राजर्षे सर्वकर्मनिबन्धनैः ॥**
**विष्णोर्दास्यं पराभक्तिरेषां तु न भवेत्क्वचित् ।**
**तेषामेव हि संसृष्टं निरयं ब्रह्मणा नृप ॥**
**दास्यमेव परोधर्मो दास्यमेव परं हितम् ।**
**दास्येनैव भवेन्मुक्तिरन्यथा निरयं व्रजेत् ॥**

पद्मपुराणे उत्तरखण्डे
**ब्रह्माणं रुद्रमिन्द्रञ्च यमं वरुणमेव च ।**
**नारायणस्य दासास्ते ये चान्येऽण्डस्य मध्यगाः ॥**
**यः परः पुरुषो विष्णुर्नारायण उदाहृतः ।**
**दासभूतमिदं तस्य ब्रह्माद्यं सकलं जगत् ॥**
**न प्राप्यं वैष्णवं लोकं विना दास्येन कुत्रचित् ।**
**तस्माद्दास्यं हरेर्भक्तो भजेतानन्यमानसः ॥**

आगमचूडामणौ पटले ३२
**जन्मप्रभृतिदासोऽस्मि शिष्योऽस्मि तनयोऽस्मि ते ।**
**त्वञ्च स्वामी गुरुर्माता पिता च मम माधव ॥**
**भवद्भृत्यस्य भृत्यस्य भृत्यो भवामि राघव ।**
**रामभद्र महाबाहो देहि जन्मनि जन्मनि ॥**

भरद्वाजसंहितापरिशिष्टे अ. २
**आब्रह्मलोकाल्लोकानां यदैश्वर्यं न तद् ध्रुवम् ।**
**अथ नित्यं महत् साधु यद्दास्यं परमात्मनः ॥**

बृद्धहारीतस्मृतौ
**दास्यं स्वरूपं सर्वेषामात्मनां सततं हरेः ।**

भगवच्छेषमात्मानमन्यथा यः प्रपद्यते ॥
स चैव हि महापापो चाण्डालः स्यान्न संशयः ।

श्रीमद्रामायणे सुन्दरकाण्डे सर्गे ४३

दासोऽहं कोसलेन्द्रस्य रामस्याक्लिष्टकर्मणः ।
हनुमाञ्छत्रुसैन्यानां निहन्ता मारुतात्मजः ॥

४-तुलसीमालासंस्कार 'अभियुक्तसारावल्याम्'

ततस्तापादिकृत्वा हि पश्चान्मालां प्रदापयेत् ।
मन्त्रादिकृत्यसंयुक्तां तुलसीकाष्ठसंभवाम् ॥

सुष्कतुलस्युत्पाटनमन्त्रः

ॐ नमस्ते तुलसी देवि विष्णुधर्मसुवादिनी ।
मालार्थे चोत्पाटयामि प्रसीद भगवत्प्रिये ।

हरिभक्तिविलासे गरुडपुराणवचनम्

क्षालितां पञ्चगव्येन मूलमन्त्रेण मन्त्रिताम् ।
गायत्र्या चाष्टकृत्वो वै मन्त्रितां धूपयेच्चताम् ॥
विधिवत्परया भक्त्या सद्योजातेन पूजयेत् ।
सन्निवेद्यैव हरये तुलसीकाष्ठसंभवाम् ।
मालां पश्चात् स्वयं धत्ते स वै भागवतोत्तमः ।

मालाप्रमाणं पद्मपुराणे पातालखण्डे अ. ७९ तथा ब्रह्मखण्डे अ. २२।११

धात्रीफलकृता माला तुलसीकाष्ठसम्भवा ।
दृश्यते यस्य देहे तु स वै भागवतो नरः ॥
तुलसीकाष्ठसंभूतैर्धातृफलसमाकृतैः ।
निर्मितां मालिकां कण्ठे निधायार्चनमारभेत् ॥

अभियुक्तसारावल्यामुपदेशः ४

तुलसीकाष्ठसंभूतां धान्याकारविनिर्मिताम् ।
सम्यग् द्विधाकृता माला कण्ठलग्नैव धारयेत् ॥

स्मृतिरत्नाकरे

शान्तये पुष्टये मुक्त्यै तुलसीकाष्ठजो मणिः ।



सर्वसिद्धिप्रदः पाद्मो मणिर्धार्यः श्रियै बुधैः ॥

अभियुक्तसारावल्यां जपमालोपदेशः ४

धात्रीवदरगर्भवत्प्रमाणं मणिं कारयेत् ।
ऊर्ध्ववक्त्रमणेर्वाख्यं कर्तव्यं तन्न लङ्घयेत् ॥
अष्टोत्तरशतं पूर्वं तदर्द्धं पादमेव वा ।
कुर्यात्तत्रविधानोक्तं सहस्रं वा यथेच्छया ॥
नवत्रितन्तुनाचैतद् ग्रथनीयमसंस्पृशेत् ।
एकैकमणिमध्ये तु विष्णुग्रन्थी प्रकल्पयेत् ॥

भरद्वाजस्मृतौ अ. ७।४३ पद्मपुराणे सृष्टिखण्डे अ. ६१।१२५

ग्रन्थिं पृथक् पृथक्कुर्यान्मणीनामन्तरे बुधः ।
ऊर्ध्वाभ्यां प्रोत्यसीमार्धं ग्रन्थिं दद्याद्यथाशुभम् ॥४३॥
स्वयं च ग्रन्थिता या च श्लथान्योन्यप्रसञ्जिता ।
शूद्रादिग्रथिताऽशुद्धा दूरात्तां परिवर्जयेत् ॥१२५॥

मालानिर्माणविधिः-'गौतमीयतन्त्रे अ. १५

कार्पाससम्भवं सूत्रं धर्मकामार्थमोक्षदम् ।
त्रिगुणं त्रिगुणीकृत्य ग्रन्थयेच्छिल्पशास्त्रतः ॥
मुखे मुखं तु संयोज्य पुच्छे पुच्छं नियोजयेत् ।
गोपुच्छसदृशी माला यद्वा सर्पाकृतिः शुभा ॥
छिन्ने सूत्रे भवेन्मृत्युस्तस्माद्यत्नपरो भवेत् ।
जपान्ते कर्णदेशे वा उच्चस्थानेऽथवा न्यसेत् ॥
कम्पनात्सिद्धिहानिः स्याद्धननं बहुदुःखकृत् ।
शब्दतश्च भवेद्रोगः करभ्रष्टा विनाशकृत् ॥
अप्रतिष्ठितमालाभिर्मन्त्रं जपति यो नरः ।
सर्वं तद्विफलं विद्यात् क्रुद्धा भवति देवता ॥
यत्संख्यया समारब्धं तज्जप्तव्यं दिने दिने ।
यदि न्यूनाधिकं कुर्यात् व्रतभ्रष्टो भवेन्नरः ॥
मेरुहीना च या माला मेरुलङ्घा च या भवेत् ।

अशुद्धप्रतिकाशा च सा माला निष्फला भवेत् ॥
अष्टोत्तरशतं कुर्य्याच्चतुःपञ्चाशकं तथा ।
सप्तविंशतिकाः कार्यास्ततो नैवाधिका हि ताः ॥
श्रीतुलस्या ध्यानं-श्रीतुलस्यै नमः ।
ध्यायेच्च तुलसीं देवीं श्यामां कमललोचनाम् ।
प्रसन्नां पद्मवदनां वरदाञ्च चतुर्भुजाम् ॥
किरीटहारकेयूरकुण्डलादिविभूषणाम् ।
वरदमुद्रासंयुक्तां पद्मासननिषेविताम् ॥
प्रियां च सर्वदा विष्णोः सर्वदेवनमस्कृताम् ।
आवाहनं-श्रीसूक्तेन-पौराणिकमन्त्रेण च
स्कन्दपुराणे ब्रह्मखण्डे चातुर्मास्यमा. अ. १४।३६
यथा श्रीस्तुलसीवृक्षे तथा बिल्वे च पार्वती ॥ इति ।
ऋग्वेद परिशिष्टानि खिलसूक्तानि
ॐ हिरण्यवर्णां हरिणीं सुवर्णरजतस्त्रजाम् ।
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो मऽआवह ॥१॥
देवि त्रैलोक्यजननि सर्वलोकैकपावनि ।
आगच्छ वरदे मातः प्रसीद तुलसी प्रिये ॥
आगच्छ तुलसी देवि महालक्ष्मी परात्परे ।
चतुर्वर्गास्त्वयि न्यस्ता मालायां निहिता भव ॥ इत्यावाहनम् ।
ॐ तां मऽआवह जातवेदो लक्ष्मीमनपगामिनीम् ।
यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम् ॥२॥
सर्वदेवमये देवि सर्वदा विष्णुवल्लभे ।
देवि स्वर्णमयं दिव्यं गृहाणासनमव्यये ॥ इत्यासनम् ।
ॐ अश्वपूर्वां रथमध्यां हस्तिनादप्रबोधिनीम् ।
श्रियं देवीमुपह्वये श्रीर्मादेवीर्जुषताम् ॥३॥
सर्वदेवा यथास्वर्गे तथात्वं भुवि सर्वदा ।
दत्तं पाद्यं गृहाणेदं तुलसी त्वं प्रसीदमे ॥ इतिपाद्यम् ।



ॐ कांसोस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम् ।
पद्मे स्थितां पद्मवर्णां तामिहोपह्वये श्रियम् ॥४॥
गन्धपुष्पसमायुक्तं सर्वेषां प्रीतिदायकम् ।
अर्घ्यं गृहाण त्वं देवि दैत्यान्तकरणप्रिये ॥ इत्यर्घ्यम् ।
ॐ चन्द्रां प्रभासां यशसा ज्वलन्ती श्रियं लोके देवजुष्टामुदाराम् ।
तां पद्मिनीमीं शरणमहं प्रपद्ये अलक्ष्मीर्मे नश्यतां त्वां वृणे ॥५॥
कर्पूरवासितं तोयं सुवर्णकलशे स्थितम् ।
दत्तमाचमनीयं च गृहाण हरिवल्लभे ॥ इत्याचमनीयम् ।
ॐ आदित्यवर्णे तपसोऽधिजातो वनस्पतिस्तव वृक्षोथ बिल्वः ।
तस्य फलानि तपसा नुदन्तु मायान्तरायाश्च बाह्याऽअलक्ष्मीः ॥६॥
गंगासरस्वतीरेवापयोष्णीनर्मदाजलैः ।
स्नापितासि मया देवि तथा शान्तिं कुरुष्व मे ॥ इतिस्नानीयम् ।
ॐ उपैतु मां देवसखः कीर्त्तिश्च मणिना सह ।
प्रादुर्भूतोऽस्मि राष्ट्रेऽस्मिन् कीर्त्तिमृद्धिं ददातु मे ॥७॥
पञ्चामृतं मयानीतं पयो दधि घृतं मधु ।
सह शर्करया देवि स्नानार्थं प्रतिगृह्यताम् ॥ इतिपञ्चामृतम् ।
क्षीरोदमथनोद्भूते चन्द्रलक्ष्मीसहोदरे ।
तुलस्यमृतरूपे त्वां स्नापयामि प्रसीद मे ॥ इति शुद्धस्नानम् ।
ॐ क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम् ।
अभूतिमसमृद्धिञ्च सर्वान्निर्णुद मे गृहात् ॥८॥
सूक्ष्मतन्तुभवं वस्त्रं निर्मितं विश्वकर्मणा ।
लोकलज्जाहरं देवि गृह्यतां सुरसत्तमे ॥
मुक्तारत्नसुवर्णैश्च रचितंचारुमासुरम् ।
कञ्चुकं नीलवर्णं च गृहाण परमेश्वरि ॥ इतिवस्त्रम् ।
ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करिषिणीम् ।
ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥९॥
केशरागुरुसंयुक्तं चन्दनादिसमन्वितम् ।

कस्तूरिकासमायुक्तं कुंकुमं प्रतिगृह्यताम् ॥ इतिगन्धम् ।
हरिद्रां कुंकुमं चैव सिन्दूरं कज्जलाविन्तम् ।
मया निवेदितं भक्त्या गृहाण परमेश्वरि ? ॥ इतिसौभाग्यद्रव्यम् ।
रक्तवर्णं सुशोभाढ्यं नानागन्धैस्तु संस्कृतम् ।
वासन्तिकं मोदकं च गुलालं प्रतिगृह्यताम् ॥ इतिगुलालम् ।
माङ्गल्यतन्तुमणिभिर्मुक्ताफलविराजितम् ।
कण्ठस्य भूषणार्थाय प्रीत्यर्थं प्रतिगृह्यताम् ॥ इतिकण्ठसूत्रम् ।
काञ्चनैर्निर्मितं दिव्यं कङ्कणं च सुरेश्वरि ।
हस्तालङ्करणार्थाय कङ्कणं प्रतिगृह्यताम् ॥ इतिकङ्कणम् ।
नानाभरणशोभाढ्यं नानारत्नोपशोभितम् ।
अर्पितञ्च मया देवि तालपत्रं प्रगृह्यताम् ॥ इतिताटङ्कम् ।
रत्नसारैः संग्रथितं पुष्पचन्दनसंयुतम् ।
नानाभूषणभूषाढ्यं सुतल्पं प्रतिगृह्यताम् ॥
यद्यद्द्रव्यमपूर्वं च पृथिव्यामपि दुर्लभम् ।
देवभूषाढ्यभोग्यं च तद् द्रव्यं देवि गृह्यताम् ॥ इत्याभूषणम् ।
ॐ मनसः काममाकूतिं वाचः सत्यमशीमहि ।
पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः ॥१०॥
अक्षतांश्च महादेवि तुलसि सौख्यदायिके ।
अर्पयामि सदा भक्त्या सुखसंततिलब्धये ॥ इत्यक्षताम् ।
ॐ कर्दमेन प्रजा भूता मयि सम्भव कर्दम ।
श्रियं वासय मे कुले मातरं पद्ममालिनीम् ॥११॥
माल्यदीनि सुगन्धीनि मालत्यादीनि सत्तम ।
मयाहृतानि पूजार्थं पुष्पाणि प्रतिगृह्यताम् ॥
नानाकुसुमनिर्माणं बहुशोभाप्रदं परम् ।
सुरलोकप्रियं शुद्धं माल्यं देवि प्रगृह्यताम् ॥ पुष्पं पुष्पमाला च
ॐ आपः सृजन्तु स्निग्धानि चिक्लीत वस मे गृहे ।
निचदेवीं मातरं श्रियं वासय मे कुले ॥१२॥



वृक्षनिर्यातरूपं च गन्धद्रव्यादिसंयुतम् ।
कृष्णकान्ते पवित्रो वै धूपोऽयं प्रतिगृह्यताम् ॥ इतिधूपः ।
ॐ आर्द्रां पुष्करिणीं पुष्टिं पिङ्गलां पद्ममालिनीम् ।
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो ममावह ॥१३॥
वैश्वानरप्रज्वलितं घृतकर्पूरनिर्मितम्
दीपं भक्त्या गृहाणेमं त्रैलोक्यध्वान्तनाशिके ॥ इतिदीपः ।
ॐ आर्द्रां पुष्करिणीं पुष्टिं सुवर्णां हेममालिनीम् ।
सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो मऽआवह ॥१४॥
अन्नं चतुर्विधं स्वादु रसैः षड्भिः समन्वितम् ।
नैवेद्यार्थेऽर्पयामि त्वां तुलसी माधवप्रिये ॥ इतिनैवेद्यम् ।
सुवासितं शीतलं च पिपासानाशकारणम् ।
जगज्जीवनरूपं च जीवनं देवि गृह्यताम् ॥ इतिजलम् ।
ॐ तां मऽआवह जातवेदो लक्ष्मीमनपगामिनीम् ।
यस्यां हिरण्यं प्रभूतं गावो दास्योऽश्वान्विन्देयं पुरुषानहम् ॥१५॥
पूगीफलं महद्दिव्यं नागवल्लीदलैर्युतम् ।
कर्पूरैलासमायुक्तं ताम्बूलं प्रतिगृह्यताम् ॥ इतिताम्बूलम् ।
ॐ यः शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम् ।
श्रियः पञ्चदशर्चं च श्रीकामः सततं जपेत् ॥१६ इति ।
सुवर्णं सर्वधातूनां श्रेष्ठं देवि च तत्सदा ।
भक्त्या ददामि वरदे स्वर्णपुष्टिं च देहि मे ॥ इतिदक्षिणा ।
शीतवायुप्रदं चैव दाहे च सुखदं परम् ।
कमले गृह्यतां चेदं क्षत्रव्यजनचामरम् ॥ इतिक्षत्रचामरे ।
नीराजनं सुमाङ्गल्यं कर्पूरेण समन्वितम् ।
चन्द्रार्कवह्निसदृशं गृहाण देवि ते नमः ॥ इतिनीराजनम् ।
विष्णुप्रियकरे देवि तुलसि सुखदायिके ।
पुष्पाञ्जलिं प्रयच्छामि गृहाणायुष्यवर्द्धिके ॥ इतिपुष्पाञ्जलिः ।
देवैस्त्वं निर्मिता पूर्वमर्च्चितासि मुनीश्वरैः ।

**अतो मां सर्वदा देवि ! कृपादृष्ट्या विलोकय ॥** इतिप्रार्थना ।

**मनः प्रसादजननीं सुखसौभाग्यवर्द्धनीम् ।**
**आधिव्याधिहरीं नित्यं तुलसि त्वां नमाम्यहम् ॥** इतिनमस्कार ।

तुलसीमाला अभिमन्त्रितकरणे मन्त्रः श्रीतुलसीगायत्री

**ॐ तुलसीदेव्यै विद्महे विष्णुप्रियायै धीमहि । तन्नो वृन्दा प्रचोदयात् ॥**

ब्रह्मवैवर्तपुराणे अ. २२।१०

**लक्ष्मीर्मायाकामवाणीवीजपूर्वं दशाक्षरम् ।**
**श्रीं ह्रीं क्लीं ऐं वृन्दावन्यै स्वाहा ॥**

श्रीरामार्पणकरणे मन्त्रः

**ॐ तुलसी मोहनीरूपा विष्णुनाराधिता पुरा ।**
**अतस्ते हि प्रिया नित्या त्वय्यर्पयामि राघव ॥**

श्रीरामस्यानर्पणे पापः 'गरुडपुराणे'

**हरये नार्पयेद्यस्तु तुलसीकाष्ठसम्भवाम् ।**
**मालां धत्ते स्वयं मूढः स याति नरकं ध्रुवम् ॥**

स्वकृतनिषिद्धत्रयम्-पुलस्त्यसंहितायाम्

**स्वहस्तग्रथिता माला स्वहस्तघृष्टचन्दनम् ।**
**स्वहस्तलिखितं स्तोत्रं शक्रस्यापि श्रियं हरेत् ॥**

शिष्याय कण्ठीं दद्यात् 'हरिभक्तिविलासे'

**ॐ तुलसी त्वद्भूतेनैव विष्णुस्त्रैलोक्यपूजितः ।**
**अतस्ते काष्ठजां मालां ददामि शिष्यहेतवे ।**

स्वयं धारणे मन्त्रः

**ॐ तुलसीकाष्ठसंभूते माले विष्णुजनप्रिये ।**
**विभर्मि त्वामहं कण्ठे कुरु मां रामवल्लभम् ॥**

दूषिता माला-अभियुक्तसारावली-पुलस्त्यसंहितायाम्

**न धारयेदन्यधृतां तुलसीकाष्ठसंभवाम् ।**
**मालां गृह्णन्नवाप्नोति पातकानि सहस्रधा ॥**

**.....सोपिगोब्रह्महा भवेत् ।**



**परकण्ठगतां मालां यो विभर्ति द्विजाधमः ।**
**तस्य पापं स गृह्णाति जन्मकोटिशतोद्भवम् ॥**

तुलसीमाहात्म्यम्

**यज्ञसूत्रं विना विप्रा वेदहीनाः क्रिया यथा ।**
**सत्यहीनं यथावाक्यं मालाहीना न वैष्णवाः ॥**

**यज्ञोपवीतवद्धार्या तुलसीमालिका सदा ।**
**न दोषो धारणे तस्या यतः सा ब्रह्मरूपिणी ॥**

**तुलसीमालिकाधारी पुनाति भुवनत्रयम् ।**
**प्रणमन्ति सुरास्तस्मै शिवशक्रयमादयः ॥**

पञ्चरात्रे श्रीवाल्मीकिसंहिताया अ. ६

**यस्य कण्ठे न लग्ना वै वैष्णवस्य च दुर्मतेः ।**
**तुलसी राजते सोऽथ नाममात्रेण वैष्णवः ॥**

**तेनस्पृष्टमबन्नादि न ग्राह्यं वैष्णवैः क्वचित् ।**
**दूरं चाण्डालवत् त्याज्यो द्विजकर्मबहिष्कृतः ॥**

स्कन्दपुराणे वैष्णवखण्डे मार्गशीर्षमा. अ.४

**तुलसीकाष्ठसम्भूतां यो मालां बहते द्विजः ।**
**अप्यशौचोऽप्यनाचारो मामेवैति न संशयः ॥**

**धात्रीफलकृता माला तुलसीकाष्ठसंभवा ।**
**दृश्यते यस्य देहे तु स वै भागवतो नरः ॥**

**तुलसीदलजां मालां धातृफलकृतामपि ।**
**ददाति पापिनां मुक्तिं किम्पुनर्मम सेविनाम् ॥**

**निवेद्य भक्त्या मां मालां तुलसीकाष्ठसम्भवाम् ।**
**बहते यो नरो भक्त्या तस्य वै नास्ति पातकम् ॥**

**सदाप्रीतमनास्तस्य अहं प्रणिवरो हि सः ।**
**तुलसीकाष्ठसम्भूतां यो मालां बहते नरः ॥**

**प्रायश्चित्तं न तस्याऽस्ति नाऽशौचं तस्य विग्रहे ।**
**धारयन्ति न ये मालां हैतुकाः पापबुद्धयः ।**

नरकान्न निवर्तन्ते दग्धा कोपाग्निना मम ॥१५॥

तुलसीकाष्ठसम्भूतं शिरसः कण्ठभूषणम् ।
बाहौ करे च मर्त्यस्य देहे यस्य स मे प्रियः ॥

तुलसीकाष्ठमालां तु प्रेतराजस्य दूतकाः ।
दृष्ट्वा नश्यन्ति दूरेण वातोद्धूतं यथा दलम् ॥

तुलसीकाष्ठमालाभिर्भूषितः पुण्यमाचरेत् ।
पितृणां देवतानाञ्च पुण्यं कोटिगुणम्भवेत् ॥

सनत्कुमारसंहितायामध्याये ७

तुलसीकाष्ठसंभूता कण्ठलग्ना सुसंस्कृता ।
गुरुप्रदा तु या माला न त्याज्या सा कदाचन ॥

दुराचारी प्रमादेन यदि मालां परित्यजेत् ।
विष्णुधर्माद्बहिर्भूत्वा गुरुद्रोही भवेत्पशुः ॥

स्कन्दपुराणे ब्रह्मखण्डे चातुर्मास्यमा. अ. १७१९

यत्कण्ठे तुलसी नास्ति ते नरा पापबुद्धयः ।
अन्नं विष्ठा जलं मूत्रं पीयूषं रुधिरं भवेत् ॥

ततः सर्वेषु कोलेषु न त्याज्या कण्ठमालिका ।
क्षणार्धं तद्विहीनोपि विष्णुद्रोही भवेन्नरः ॥

स्कन्धस्था तुलसी यस्य स पापैर्न च लिप्यते ।
कण्ठगा तुलसी यस्य जीवन्मुक्तः सदा हि सः ॥

५-अथमन्त्रसंस्कारः अभियुक्तसारावल्यामुपदेशः

चतुःसंस्कारसम्पन्नं शिष्यं कृत्वा स्वसन्निधौ ।
ततश्च मन्त्रसंस्कारं कारयेच्च यथाविधि ॥

षडक्षरो महामन्त्रो भूताक्ष्यक्षरकस्तथा ।
आदिकाव्योद्धृता रामचरममन्त्र इत्यपि ॥

मोक्षैकसाधनोद्धूतं मन्त्रत्रयमिदंवरम् ।
स्वीयपरम्परारीत्या मन्त्रमध्यापयेद् गुरुः ॥

सुव्यापकं मन्त्रराजं द्वयं भागद्वयात्मकम् ।



रामचरमश्लोकञ्च यो जानाति स वैष्णवः ॥

श्रीवैष्णवमताब्जभास्करे प्रश्ने २

मन्त्राणां व्यापकानां भगवत इह चाव्यापकानान्तु मध्येऽ
तिश्रेष्ठोऽव्यापकः स श्रुतिमुनिसुमतः शिष्टमुख्यैर्गृहीतः ।
नित्यानामाश्रयोऽयं परित उरुशुभो राममन्त्रः प्रधानः
प्राप्योऽथ प्रापकश्च प्रचुरतरगुणज्ञानशक्त्यादिकानाम् ॥

भरद्वाजसंहितायाः परिशिष्ट अ. २

ततश्च व्यापकान्मन्त्रानन्यांश्चाङ्गैः समन्वितान् ।
दत्वास्मै पुनरेवैवं गृहीत्वा वृत्तिमादिशेत् ॥

अश्वत्थोदुम्बरप्लक्षचूतन्यग्रोधपल्लवाः ।
पञ्चपल्लवमित्युक्तं सर्वकर्मसु शोभनम् ॥

कनकं कुलिशं नीलं पद्मरागं च मौक्तिकम् ।
एतानि पञ्चरत्नानि रत्नशास्त्रविदो विदुः ॥

अभावे सर्वरत्नानां हेम सर्वेषु योजयेत् ।

मन्त्र ऋग् ७।१००।२

ॐ त्वं विष्णो सुमतिं विश्वजन्यामप्रयुतामेवयावो मतिं दाः ।
पर्चो यथा नः सुवितस्यभूरे रश्वावतः पुरुश्चन्द्रस्य रायः ॥

उक्तकार्यानन्तरमाचार्य उवाच

रामभद्रदयासिन्धो वात्सल्यगुणसागर ।
एनं रक्ष जगन्नाथ बहुजन्मापराधिनम् ॥

शिष्य उवाच

गुरो त्वमेव देवो मे त्वमेव परमा गतिः ।
त्वमेव परमो धर्मस्त्वमेव परमं तपः ॥

भो गुरो देहि मन्त्रं मे

तत आचार्य शिष्यमस्तके दक्षिणहस्तं विन्यस्य
दक्षिणकर्णे महामन्त्रराजं श्रावयेद्वारत्रयम्

महावस्त्रप्रावरणं कृत्वा कर्णेजपेन्मनुम् ।

घण्टादिवाद्यसम्भारान्वादयेत्सततं तदा ॥

आगमचूडामणौ पटले २९

तत्प्राङ्मुखोपविष्टस्य चोत्तराभिमुखो गुरुः ।
शनैः शनैः शुभे कर्णे त्रिवारं श्रावयेन्मनुम् ॥
दक्षकर्णे वदेन्मन्त्रं त्रिवारं पूर्णमानसः ।
मन्त्रार्थं मन्त्रबीजं वै तच्छक्तिं तत्फलादिकम् ॥

पद्मपुराणे उत्तरखण्डे २२३।६६ भगवद्वाक्यम्

मन्त्रार्थश्च प्रवक्तव्यो वृत्तिश्चैव विशेषतः ।
लब्धमन्त्रस्तदाचार्यं पूजयेद्भूषणादिभिः ॥
अनेन विधिना मन्त्रं योऽधीते वैष्णवाद् गुरोः ।
ततः वैष्णवतां याति नान्यथा सुरसत्तम ॥

बृहन्नारदीये-

मन्त्रदाता न च गुरुर्न च मन्त्रार्थवाचकः ।
मन्त्रमन्त्रार्थतत्वज्ञो गुरुरित्यभिधीयते ॥

मनुस्मृति ७।४७

मृगयाऽक्षो दिवास्वापः परिवादः स्त्रियो मदः ।
तौर्यत्रिकं वृथाट्या च कामजो दशका गणः ॥

नारदपरिव्राजकोपनिषदि-

नटादिप्रेक्षणं द्यूतं प्रमदा सुहृदं तथा ।
भक्ष्यं भोज्यमुदक्यां च षण्न पश्येत्कदाचन ॥
रागं द्वेषं मदं मायां मोहं द्रोहं परात्मसु ।
षडैतानि यतिर्नित्यं मनसापि न चिन्तयेत् ॥

यमनियमौ श्रीमद्भगवते ११।१९।३३

अहिंसा सत्यमस्तेयमसङ्गो ह्रीरसञ्चयः ।
आस्तिक्यं ब्रह्मचर्यं च मौनं स्थैर्यं क्षमाऽभयम् ॥
शौचं जपस्तपो होमः श्रद्धाऽऽतिथ्यं मदर्चनम् ।



तीर्थाटनं परार्थेहा तुष्टिराचार्यसेवनम् ॥३४॥
एते यमाः सनियमा उभयोर्द्वादशस्मृताः ।
पुंसामुपासितास्तात ! यथाकामं दुहन्ति हि ॥३५॥

मनुस्मृतौ अ. ४।२०४

यमान्सेवेत सततं न नित्यं नियमान्बुधः ।
यमान्पतत्यकुर्वाणो नियमान्केवलान्भजन् ॥

पद्मपुराणे पातालखण्डे अ. ४८।२५

ये दम्भमाश्रयन्ते वै धूर्त्ता लोकस्य वञ्चने ।
वैशसे नरके मूढाः पतन्ति यमताडिताः ॥

साधोर्लक्षणम्

साधूनां हृदयं धर्मो वाचो देवाः सनातनाः ।
कर्मक्षयाणि कर्माणि यतः साधुर्हरिः स्वयम् ॥
मन्ये न भौतिको देहो वैष्णवस्य जगत्त्रये ।
यथाऽवतारे कृष्णास्य सतो दुष्टविनिग्रहे ॥
मनस्येकं वचस्येकं कर्मण्येकं महात्मनाम् ।
मनस्यन्यद् वचस्यन्यद् कर्मण्यन्यद् दुरात्मनाम् ॥
त्वच्चरणाचला भक्ति त्वज्जनानां च संगमम् ।
देहि राम कृपासिन्धो मह्यं जन्मनि जन्मनि ॥
एवं प्रपद्य लक्ष्मीं तां प्रपद्येत जनार्दनम् ॥११९॥

श्रीरामचरणेऽर्पणं कुर्यात् । अगस्त्यसंहिता अ. ३३।

रामचन्द्र महीपाल शरणागतवत्सल ।
त्राह्येनं सर्वलोकेश तापत्रयमहानलात् ॥

आगमचूडामणौ पटले ७७

त्वदीयपादसम्पन्नप्रपन्नस्य सदा स्थितिः ।
इति विज्ञाय भवतः शरणागतश्चार्पितः ॥
त्वं ह्यवितासि शिष्यस्य जन्मजन्मान्तरेष्वपि ।

पाहि राघव सर्वेश तवैव शरणागतम् ॥

शिष्यः श्रीगुरुदेवं साष्टाङ्गदण्डवत् प्रणमेत्

**स्वामिन् तवोपदेशाद्धि श्रीरामस्य कृपावशात् ।**
**गर्भवासकृतं दुःखं मया दूरीकृतं गुरो ॥**
**कृपया ते कृतार्थोऽहं दयया वैष्णवोऽभवम् ।**
**अलब्धलाभवानद्य योनियन्त्रेण पारगः ॥**
**एवमुत्वा पतेत् पादौ श्रीगुरोर्दण्डवद्भुवि ।**

श्रीगुरुदेवः शिष्यायाशीर्वादं दद्यात्

**उतिष्ठ वत्स सौम्येति सम्यगाचारवान्भव ।**
**सौहृद्यं मयि सर्वेषु त्वं हि जन्तुषु भावय ॥**

शिष्यः श्रीगुरुदेवं पूजयेत् दक्षिणां च समर्पयेत् यजु. अ. १९।३०

**ॐ व्रतेन दीक्षामाप्नोति दीक्षयाप्नोति दक्षिणाम् ।**
**दक्षिणा श्रद्धामाप्नोति श्रद्धया सत्यमाप्यते ॥**
**गुरवे दक्षिणां दद्याद्वित्तशाठ्यं विवर्जितम् ।**
**वासांसि रजतं हेमरत्नानि विविधान्यपि ॥**
**धनं धान्यं गजं गावमश्वाश्च वृषभं पुनः ।**
**भक्तिपूर्वं यथाशक्तिः सर्वं गुरुं निवेदयेत् ॥**
**इत्येवं मन्त्रसंस्कारं कृत्वा होमं समापयेत् ।**
**वैष्णवेभ्यो दक्षिणाञ्च दद्यान्मङ्गलहेतवे ॥**

पुनः आशीर्वादः यजु. अ. ३४।५०

**ॐ आयुष्यं वर्चस्यज्जैत्रारायस्पोषभौद्भिदम् ।**
**इदँ हिरण्यं वर्चस्वज्जैत्राया विशतादुमाम् ॥**

प्रदक्षिणा दण्डवत् प्रणामञ्च कृत्वा प्रार्थयेत्

**मन्त्रहीनं क्रियाहीनं भक्तिहीनं यदर्चितम् ।**
**यद्धुतं तु मया देव परिपूर्णं तदस्तु मे ॥**
**ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।**
**पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥**



**ॐ शान्तिः शान्तिः शान्तिः । श्रीसीतारामचन्द्रार्पणमस्तु ॥**

श्रीमद्भागवते ११।२५

**मदर्पणं निष्फलं वा सात्विकं निजकर्म तत् ।**
**राजसं फलसंकल्पं हिंसाप्रयादि तामसम् ॥**
**विष्ण्वर्पितानि कर्माणि सफलानि भवन्ति हि ।**
**अनर्पितानि कर्माणि भस्मनीव हुतं हविः ।**

पद्मपुराणक्रियायोगसारखण्डे अ. २६।४७

**यत्किञ्चित्कुरुते कर्म मर्त्यो धर्मः कलौ युगे ।**
**तदर्पयेन्महाविष्णौ भक्तिभावसमन्वितः ॥**
**विष्णौ समर्पितं कर्म सर्वमेवाऽक्षयं भवेत् ।**

श्रीराममन्त्रं गृहित्वान्यमन्त्रग्रहणनिषेधः 'भुसुण्डिरामायणे'

**राममन्त्रं गुरोर्लब्ध्वा गृह्णन्त्यन्यं तु ये पुनः ।**
**नरकान्न निवर्तन्ते यावच्चन्द्रदिवाकरौ ॥**
**राममन्त्रं समादाय योन्यमन्त्रं समिच्छति ।**
**गृहीत्वा प्राप्नुयात्पापं दाता च नरकं व्रजेत् ॥**
**अवैष्णवोपदिष्टं चेत् पूर्वमन्त्रं परित्यजेत् ।**
**पुनश्च विधिना सम्यग् गृह्णीयाद् वैष्णवाद् गुरोः ॥**

पतिव्रता अपि श्रीराममन्त्रं गृह्णीयात् अगस्त्यसंहितायामध्याये ८

**स्त्रियः पतिव्रताश्चान्ये प्रतिलोमानुलोमजाः ।**
**लोकाश्चाण्डालपर्यन्ताः सर्वेप्यत्राधिकारिणः ॥**

श्रीपार्वतीदेवी श्रीबामदेवर्षेः शिष्यास्ते 'पद्मपुराणे उत्तरखण्डे अ. २५४ श्रीशिव पार्वती प्रसङ्गे ।

श्रीवशिष्ठ उवाच

**एवमुक्ता तदा देवी वामदेवान्तिकं नृप ! ।**
**जगाम सहसा हृष्टा विष्णुपूजनलालसा ॥८॥**
**समेत्य तं गुरुं देवी पूजयित्वा प्रणम्य च !**
**विनीता प्राञ्जलिर्भूत्वा उवाच मुनिसत्तमम् ॥९॥**

श्रीपार्वत्युवाच

**भगवंस्त्वत्प्रसादेन सम्यगाराधनं हरेः ।**

**करिष्यामि द्विजश्रेष्ठः ! त्वमनुज्ञातुमर्हसि ॥१०॥**

श्रीवशिष्ठ उवाच

**इत्युक्तस्तु तया देव्या वामदेवो महामुनिः ।**

**तस्यै मन्त्रवरं श्रेष्ठं ददौ स विधिना गुरुः ॥११॥**

तत्पश्चात्

**नाम्नां सहस्त्रं विष्णोश्च प्रोक्तवान् मुनिसत्तमः ।**

**निवेदयित्वा पूजाया विधानमपि देशिकः ।**

**उवाच परमप्रीत्या पार्वतीं संशितव्रताम् ॥१२॥**

श्रीवामदेव उवाच

**अर्चयित्वा हृषीकेशं प्रातर्नित्यं जपं कुरु ।**

तत्पश्चात्

**सहस्त्रनाम पठनं कुरुष्व तदनन्तरम् ॥१३॥**

श्रीवशिष्ठ उवाच

**इत्युक्ता तेन गुरुणा प्रहृष्टेनाऽन्तरात्मना ।**

**पूजयित्वा नमस्कृत्य पुनरागात् स्वमालयम् ॥१४॥**

**शिक्षिता गुरुणा तेन वामदेवेन पार्वती ।**

**तथा समर्चयामास नित्यं भक्त्या सनातनम् ॥१५॥**

**पूर्त्तपुण्येषु सर्वत्र ग्रन्थिबन्धनपूर्वकम् ।**

**दम्पत्योरेकगुरुता शास्त्रे लोके च दृश्यते ॥**

**तीर्थस्नाने तथा कन्यादानादौ तु सुरालये ।**

**प्रतिष्ठायां मखेऽन्यत्र तयोरेको गुरुर्भवेत् ॥**

**मन्त्रे ज्ञानं धर्मकार्ये उपदेशे महात्मनाम् ।**

**दम्पत्योरेकगुरुता श्रेष्ठा नैव विदूषिता ॥**

स्कन्दपुराणे उत्तरखण्डे गुरुगीतायाम्

**एक एव गुरुः कुर्यात् सस्त्रीकस्तु गृहाश्रमी ।**



**मोक्षयज्ञादिकृत्येषु नान्यथा लभ्यते फलम् ॥**

**सर्वशान्तिकरन्नित्यं तथा बन्ध्यासुपुत्रदम् ।**

**अवैधव्यकरं स्त्रीणां सौभाग्यस्य विवर्द्धनम् ।**

**आयुरारोग्यमैश्वर्यं पुत्रपौत्रविवर्द्धनम् ।**

**निष्कामा वापि विधवा दीक्षया मोक्षमाप्नुयात् ।**

**अवैधव्यं सकामा तु लभतेचान्यजन्मनि ॥**

तथा गीता अ. ९।३२

**स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति पराङ्गतिम् ।**

पद्मपुराणे पातालखण्डे अ. ८४।५० तः ५५ पर्यन्तम्

**स्त्रीणामप्यधिकारोस्ति विष्णुराराधनादिषु ।**

**पतिप्रियरतानाञ्च श्रुतिरेषासनातनी ॥**

वैष्णवलक्षणानि पद्मपुराणक्रियायोगसारखण्डे अ. २।७९

**वैष्णवानां शरीरेषु सततं निवसाम्यहम् ।**

**लभन्ते नापदस्तस्मात् कदाचिद्वैष्णवा नराः ॥**

ब्रह्मोवाच

**अहो ध्यानैरपि ध्यातुं देवैस्त्वं न हि शक्यसे ।**

**स त्वं वैष्णवदेहेषु भ्रमसीत्यद्भुतं महत् ॥७५॥**

**क्षणमात्रमपि स्वामिंस्त्वयि तुष्टेन किं भवेत् ।**

**स त्वं वैष्णवसङ्गेन भ्रमसीत्यद्भुतं महत् ॥७६॥**

ब्रह्मोवाच

**के वैष्णवाः कैटभारे किं वा तेषाञ्च लक्षणम् ।**

**कथं ज्ञेयास्तु ते सर्वे तन्मे कथय केशव ॥**

विष्णुरुवाच

**वैष्णवानां लक्षणानि कल्पकोटिशतैरपि ।**

**सम्यक् वक्तुं न शक्नोमि संक्षेपाच्छृणु सत्तम ॥८०॥**

**संसारो वैष्णवाधीनो देवा वैष्णवपालिताः ।**

**अहञ्च वैष्णवाधीनस्तस्माच्छेष्ठश्च वैष्णवाः ॥८१॥**

क्षणमात्रमपि ब्रह्मन् विहाय वैष्णवं जनम् ।
तिष्ठामि नाऽहमन्यत्र वैष्णवा मम बान्धवाः ॥८२॥
कामक्रोधविहीना ये हिंसादम्भविवर्जिताः ।
लोभमोहविहीनाश्च ज्ञेयाश्च वैष्णवाजनाः ॥८३॥
अमत्सरा दयायुक्ताः सर्वभूतहितैषिणः ।
सत्योक्तिभाषणाश्चैव विज्ञेयास्ते च वैष्णवाः ॥८४॥
धर्मोपदेशिनश्चैव धर्माचारधरास्तथा ।
गुरुशुश्रूषवश्चैव विज्ञेयास्ते च वैष्णवाः ॥८५॥
कुर्वन्ति पूजामतिथेर्वेदविद्याविशारदाः ।
नपुंसकाः परस्त्रीषु ज्ञेयास्ते वैष्णवा जनाः ॥८६॥
एकादशीव्रतं ये च भक्तिभावेन कुर्वते ।
गायन्ति मम नामानि ज्ञेयास्ते वैष्णवा जनाः ॥८७॥
देवायतनकर्त्तारस्तुलसीमाल्यधारकाः ।
पद्माक्षधारिणो ये च ज्ञेयाश्च वैष्णवा ध्रुवम् ॥८८॥
शङ्खचक्रधनुर्बाणैरङ्कितानि ममायुधैः ।
ब्रह्मन् येषां शरीराणि ज्ञेयास्ते वैष्णवा जनाः ॥८९॥
मत्पादसलिलैर्येषां सिक्तानि मस्तकानि च ।
मम नैवेद्यमश्नन्ति ज्ञेयास्ते वैष्णवा जनाः ॥
वैष्णवेषु गुणाः सर्वे दोषलेशो न विद्यते ।
तस्माच्चतुर्मुख त्वञ्च वैष्णवो भव साम्प्रतम् ॥
बहुना च किमुक्तेन भाषिते च पुनः पुनः ।
ममार्चां ये च कुर्वन्ति विज्ञेयास्ते च वैष्णवाः ॥
वैष्णवाङ्घ्रिजलं यस्तु समस्तपातकापहम् ।
वहत्स्वशिरसा भक्त्या गङ्गा स्नानेन तस्य किम् ॥

स्कन्दपुराणे नागरखण्डे अ. १००।४८

साधूनां दर्शनं पुण्यं तीर्थभूता हि साधवः ।
कालेन फलते तीर्थं सद्यस्साधुसमागमः ॥



भविष्यपुराणे

सतां पादरजोच्छिष्टे यदि श्रद्धान्वितो भवेत् ।
भक्षणे प्रेमभक्तिश्च लभते नात्र संशयः ॥

काशीखण्डे

वैष्णवोच्छिष्टशेषोपि पितृणां च दिवौकसाम् ।
सर्वेषां भूसुरादीनां दुर्लभं कल्मषापहम् ॥
ब्रह्महत्यासहस्राणि स्त्रीहत्याशतानि च ।
तस्य पापं क्षयं याति वैष्णवोच्छिष्टभोजनात् ॥

आदिपुराणे अर्जुनं प्रति श्रीकृष्णस्योक्तिः

वैष्णवान् भज कौन्तेय मा भजस्वान्यदेवताः ।
पुनन्ति वैष्णवाः सर्वे सर्वदेवमिदं जगत् ॥

भागवते स्कन्धे ९।४

अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विज ! ।
साधुभिर्ग्रस्तहृदयो भक्तैर्भक्तजनप्रियः ॥६३॥
साधवो हृदयं मह्यं साधूनां हृदयं त्वहम् ।
मदन्यं ते न जानन्ति नाहं तेभ्यो मनागपि ॥६८॥

आदिपुराणे अर्जुनं प्रति श्रीकृष्णस्योक्तिः

अस्माकं बान्धवा भक्ता भक्तानां बान्धवा वयम् ।
अस्माकं गुरुवो भक्ता भक्तानां गुरुवो वयम् ॥
मद्भक्तो वल्लभो यस्य स मे वल्लभतां मतः ।
तत्परो वल्लभो नास्ति सत्यं सत्यं वदाम्यहम् ॥
यदि वातादिदोषेण मद्भक्तो मां च न स्मरेत् ।
अहं स्मरामि तं भक्तं नयामि परमाङ्गतिम् ॥

पद्मपुराणे

महाप्रसादे गोविन्दे नामब्रह्मणि वैष्णवे ।
नाल्पपुण्यवतां राजन् विश्वासो ह्यत्र जायते ॥

भागवतनवमस्कन्धे अ. ४ दुर्वासाम्प्रति श्रीविष्णोरुक्तिः

ये दारागारपुत्राप्तान् प्राणान् वित्तमिदं परम् ।
हित्वा मां शरणं याताः कथं तांस्त्यक्तुमुत्सहे ॥६५॥

स्कन्दपुराणे

न ब्रह्मा न शिवाग्नीन्द्रा नाहमन्ये दिवौकसः ।
न शक्ता निग्रहं कर्तुं वैष्णवानां महात्मनाम् ॥
वैष्णवा विष्णुवत्पूज्या मम मान्या विशेषतः ।
तेषां कृतेऽवमाने तु विनाशो जायते ध्रुवम् ॥

बृद्धहारीतस्मृतौ अ. ८

भगवद्भक्तिदीप्ताग्निर्दग्धदुर्जातिकल्मषः ।
चाण्डालोऽपि बुधैः श्लाघ्यो न तु पूज्यो ह्यवैष्णवः ॥
नश्यन्ति तामसाभावाः शूद्रस्य मयि भक्तितः ।

पद्मपुराणे

चाण्डालोऽपि मुनिश्रेष्ठो विष्णुभक्तिपरायणः ।
विष्णुभक्तिविहीनश्च यतिश्च श्वपचाधमः ॥

इतिहाससमुच्चये

न मे भक्तश्चतुर्वेदी मद्भक्तः श्वपचः प्रियः ।
तस्मै देयं ततो ग्राह्यं स च पूज्यो यथा ह्यहम् ॥

जैमीनीय-महाभारते

न शूद्रा भगवद्भक्ता विप्रा भागवताः स्मृता ।
सर्ववर्णेषु ते शूद्रा ये न भक्ता जनार्दने ॥

पद्मपुराणे क्रियायोगसारे अ. १६।४, ब्रह्मवैवर्त्तपुराणे प्रकृतिखण्डे अ. ३६।३९

स कथं ब्राह्मणो यस्तु हरिभक्तिविवर्जितः ।
स कथं श्वपचो यस्तु भगवद्भक्तिमानसः ॥४॥
विष्णुसेवी च श्वपचो वंशानां कोटिमुद्धरेत् ।
हरेरभक्तो विप्रश्च स्वञ्च रक्षितुमक्षमः ॥३९॥

भागवते ७।९।१०,

विप्राद् द्विषड्गुणयुतादरविन्दनाभपादारविन्दविमुखाच्छ्वपचं वरिष्ठम् ।



मन्ये तदर्पितमनोवचने हितार्थप्राणं पुनाति स कुलं न तु भूरिमानः ॥

स्कन्दपुराणे वैष्णवखण्डे मार्गशीर्षमा. अ. ११।१७

विष्णुभक्ताश्च ये केचित् सर्वे वर्णा द्विजातयः ।
कथितं मम गार्ग्येण गौतमेन सुमन्तुना ॥

पराशरस्मृतेरुत्तरखण्डे अ. १०

षष्ठिवर्षसहस्राणि विष्णोराराधने फलम् ।
सकृद् वैष्णवपूजायां लभते नात्र संशयः ॥
वैष्णवो यद्गृहे भुंक्ते तस्य भुंक्ते हरिः स्वयम् ।
हरिर्यस्य गृहे भुंक्ते तस्य भुंक्ते जगत्त्रयम् ॥

तत्रैव कार्त्तिकमा. अ. ६।२६

निन्दां कुर्वन्ति ये मूढा वैष्णवानां महात्मनाम् ।
पतन्ति पितृभिः सार्द्धं महारौरवसंज्ञके ॥

पद्मपुराणे

गङ्गा पापं शशी तापं दैन्यं कल्पतरुस्तथा ।
पापं तापं तथा दैन्यं हरेत्साधुसमागमः ॥२॥

मोक्षाभिलाषी व्यक्तियों के परमकर्तव्य मोक्ष के कारण को बतलाते हैं '**तप्तेन**' इत्यादि । अग्नि तापित बाण तथा धनुष से दोनों भुजा के मूल में अङ्कन करना १-श्वेत श्रीरामरज मृत्तिका से मस्तकादिक में ऊर्ध्वपुण्ड्र करना २-रामदासादिक नाम ३-श्रीरामषडक्षरमन्त्र ४-तुलसीमाला ५-ये पाँच संस्कार ही सायुज्य मोक्ष का साधन है । यह मुक्ति चाहनेवालों के लिए परम कर्तव्य है । प्रस्तुत पञ्चसंस्कारों में प्रत्येक की विशेष चर्चा अपेक्षित है तो भी तिलक के विषय में संक्षिप्त चर्चा प्रस्तुत है-

## ॥ श्रीवैष्णवतिलकमीमांसा ॥

भारतीय संस्कृति वेदविहित सत्कर्म प्रधान है नित्य नैमित्तिक एवं काम्य कर्मों के भेद से उनके तीन प्रकार हैं किसी भी कर्मानुष्ठान में प्रथम तिलक करने का विधान शास्त्रों में उपलब्ध होता है-

कर्मादौ तिलकं कुर्याद्रूपं तद्वैष्णवं परम् ।
गोप्रदानं तपोहोमस्वाध्यायः पितृतर्पणम् ।

**भस्मीभवति तत्सर्वमूर्ध्वपुण्ड्रं विनाकृतम् ।**

यह ब्रह्म पुराण का वचन है ब्रह्माण्ड पुराण में भी इसीप्रकार का वचन है। संक्षिप्त तात्पर्य यह कि कर्म के आदि में तिलक लगाना चाहिये उसके विना गोदानं तप हवन स्वाध्याय पितृतर्पण आदि सभी कर्म ऊर्ध्वपुण्ड्र तिलक किये विना किये जांय तो वे सव भस्म हो जाते हैं यानी निरर्थक हो जाते हैं। पूर्वाचार्यों से संग्रहित ग्रन्थों में यजुर्वेद हिरण्यकेशी शाखा का निम्न वचन प्राप्त होता है-

**हरेः पादाकृतिमात्मनिधारयति यः स परस्य प्रियो भवति स पुण्यवान् मध्ये श्रियमूर्ध्वपुण्ड्रं यो धारयति स मुक्तिभाग्भवतीति ।**

जो साधक श्रीरामरज से श्रीहरि के श्रीचरणाकृति वाला विच में श्रीवाला ऊर्ध्वपुण्ड्र तिलक धारण करता है वह पुण्यशाली सायुज्य मुक्ति का भागी होता है। स्कन्दपुराण में वचन है-

**ऊर्ध्वपुण्ड्रो मृदाशुभ्रो ललाटे यस्य दृश्यते ।**
**चाण्डालोपिविशुद्धात्मा याति ब्रह्मसनातनम् ॥**

यानी जिस किसी के भी ललाट में सफेद श्रीरामरज का ऊर्ध्वपुण्ड्र तिलक दिखाई दे तो वह यदि चाण्डाल भी हो तो भी ऐसा विशुद्ध आत्मा जीव अन्त में सनातन ब्रह्मधाम में जाता है। हारीतस्मृति का वचन है-

**ऊर्ध्वपुण्ड्रविहीनस्तु सन्ध्याकर्मसमाचरेत् ।**
**तत्सर्वंराक्षसैर्नीतं नरकं स च गच्छति ॥**

जो साधक ऊर्ध्वपुण्ड्र के विना सन्ध्या आदि कर्मों को करता है वह सब राक्षस लोग ले जाते हैं एवं कर्ता नरक में भी जाता है। एवं श्रीपाराशर वचन है-

**ऊर्ध्वपुण्ड्रविहीनस्य श्मशानसदृशं मुखम् ।**
**अवलोक्य मुखं तस्य ह्यादित्यमवलोकयेत् ॥**

ऊर्ध्वपुण्ड्र रहित व्यक्ति का मुख श्मशान जैसा होता है उसका मुख देखकर प्रायश्चित्त हेतु सूर्यदेव का दर्शन करें। सामान्यतः चारों वर्णों के लिये निम्न प्रकार का तिलक विधान ब्रह्मपुराण में प्राप्त होता है-

**ऊर्ध्वपुण्ड्रं द्विजः कुर्यात् क्षत्रियस्तु त्रिपुण्ड्रकम् ।**
**अर्ध्यचन्द्रं तु वैश्यस्तु वर्तुलं शूद्रजातिषु ॥**



**ऊर्ध्वपुण्ड्रन्तु सर्वेषां न निषिद्धं कदाचन ।**
**धारयेयुः क्षत्रियाद्या विष्णुभक्ता भवन्ति ये ॥**
**ऊर्ध्वपुण्ड्रं मृदाकुर्यात् त्रिपुण्ड्रंभस्मना सदा ।**
**तिलकं वै द्विजः कुर्याच्चन्दनेन यदृच्छया ॥**

द्विज ऊर्ध्वपुण्ड्र करे क्षत्रिय त्रिपुण्ड्र करे वैश्य अर्धचन्द्राकार करे शूद्रजाति गोल तिलक करे पर सदाचार्य संदीक्षित सर्वव्यापक विष्णु श्रीरामभक्तों को तो सर्वदा सभी वर्णों को ऊर्ध्वपुण्ड्र तिलक करना चाहिये इसका निषेध किसी शास्त्र ने नहीं किया है। ऊर्ध्वपुण्ड्र तिलक मृद्-श्रीरामरज से करना चाहिये भस्म से त्रिपुण्ड्र करे चन्दन से यानी भगवदर्पित चन्दन से ऊर्ध्वपुण्ड्र या त्रिपुण्ड्र दोनों कर सकते हैं पर द्विजों को अनिवार्य रूपसे तिलक करना ही चाहिये। तिलक की संख्या कितनी एवं कहां कहां धारण करना तथा मन्त्रों के विषय में अन्य प्रबन्ध में प्रकाश डालेंगे अन्य सत् शास्त्रों के परिप्रेक्ष में यहाँ तो अतिसंक्षिप्त दिग्दर्शन मात्र है।

स्कन्धपुराण **वैष्णव खण्ड मार्गशीर्ष माहात्म्य २।१९ एवं पद्मपुराण उत्तर खण्ड अध्याय २२५।४५** के अनुसार-

**ललाट उदरे चाथ वक्षसि कण्ठकूवरे ।**
**कुक्ष्योर्वाह्वोः स्कन्दयोश्च पृष्ठे त्रिकेच वैशिरः ।**

यानी ललाट १ नाभी २ हृदय ३ कण्ठ ४ दक्षिण कुक्षी ५ दक्षिणबाहु ६ दक्षिणस्कन्ध ७ वामकुक्षी ८ वामबाहु ९ वामस्कन्ध १० कटिपृष्ठ ११ ककुद १२ इन बारह स्थानों पर तिलक लगाना चाहिये। यदि द्वादश तिलक न भी करते हों तो भी तिलक हेतु प्रथम गणित ललाट में तो नियत रूपसे प्रतिदिन तिलक करना ही चाहिये। उन बारह स्थानों में किन किन देवों का ध्यान करते हुये तिलक करना वह आगे के मन्त्रों से वताते हैं क्योंकि प्रत्येक तिलक या स्थान के अधिष्ठातृदेव अलग अलग होते हैं-

**ललाटे केशवं ध्यायेन्नारयणमथोदरे ।**
**वक्षःस्थले माधवं च गोविन्दं कण्ठकूवरे ॥**
**विष्णुं च दक्षिणे कुक्षौ तद्बाहौ मधुसूदनम् ।**
**त्रिविक्रमं कन्धारायां वामनं वामपार्श्वके ॥**

**श्रीधरं बाहुके वामे हृषिकेशं तु कन्धरे ।**
**पृष्ठे तु पद्मनाभं च त्रिके दामोदरं न्यसेत् ॥**
**तत्प्रक्षालनतोयेन वासुदेवं तु मूर्धनि ।**

अर्थात् ॐ केशवाय नमः वोलकर उनका ध्यान करते हुये ललाट में तिलक करे इसीप्रकार ॐ नारायणाय नमः से नाभी में ॐ माधवाय नमः से हृदय में ॐ गोविन्दाय नमः से कण्ठ में ॐ विष्णवे नमः से दक्षिणकुक्षी में ॐ मधुसूदनाय नमः से दक्षिणबाहु में ॐ त्रिविक्रमाय नमः से दक्षिणस्कन्ध में ॐ वामनाय नमः से वामकुक्षी में ॐ श्रीधराय नमः से वामबाहु में ॐ हृषिकेशाय नमः से वाम स्कन्ध में ॐ पद्मनाभाय नमः से कटिपृष्ठ में ॐ दामोदराय नमः से ककुद-गर्दन के पीछे भाग में एवं हाथ को धोये जल से ॐ वासुदेवाय नमः वोलकर मूर्धा में ।

तिलक के रंग के विषय में निम्न प्रकार से लिखा है-

**श्यामं शान्तिकरं प्रोक्तं रक्तं वश्यकरं तथा ।**
**श्रीकरं पीतमित्याहुः श्वेतमोक्षकरं शुभम् ॥**

श्याम तिलक शान्तिप्रद कहा जाता है रक्त वशकारक एवं पीत श्रीकर तथा श्वेत मोक्ष कर है अतः सायुज्यमुक्ति की कामनावाले साधक श्रीवैष्णवों को शुभ सूचक श्वेत श्रीरामरज से ऊर्ध्वपुण्ड्र तिलक करना चाहिये ।

तिलक का आकार-प्रकार के विषय में उल्लेख है-

**एकान्तिनो महाभागाः सर्वलोकहितेरताः ।**
**सान्तरालं प्रकुर्वन्ति पुण्ड्रं हरिपदाकृतिम् ॥**
**मध्ये छिद्रेण संयुक्तमेतद्धिहरिमन्दिरम् ।**
**उर्ध्वं सौम्यमृजुं सूक्ष्मं सुपार्श्वं सुमनोहरम् ।**
**निरन्तरालं यः कुर्यादूर्ध्वपुण्ड्रं द्विजाधमः ।**
**स हि तत्र स्थितं लक्ष्म्या सह माञ्च व्यपोहति ॥**
**अच्छिद्रमूर्ध्वपुण्ड्रं तु ये कुर्वन्ति द्विजाधमाः ।**
**तैर्ललाटे शुनः पादं निक्षिप्तं वै न संशयः ॥**
**तस्माच्छिद्रान्वितं पुण्ड्रं महच्छिद्रं शुभान्वितम् ।**
**धारयेद्ब्राह्मणो नित्यं हरिसालोक्यसिद्धये ॥**



यानी सभी लोकों के हित में नियत रूपसे लगे पुण्यशाली लोग श्रीहरि के श्रीचरणाकृतिवाला अन्तराल मध्य में खालीवाला ऊर्ध्वपुण्ड्र करते हैं । मनोहर सीधा दोनों भाग बराबरवाला सूक्ष्म समानाकृति चित्ताकर्षक बीच में समान छिद्रवाला ऊर्ध्वपुण्ड्र निश्चयरूपसे श्रीहरिजी का मन्दिर है । श्रीहरिजी कहते हैं-जो द्विजाधम बीच में छिद्र विना का ऊर्ध्वपुण्ड्र करता है वह पुण्ड्र में स्थित लक्ष्मीजी के साथ मुझ को भी दूर कर देता है । जो द्विजाधम बीच में छिद्र विना का ऊर्ध्वपुण्ड्र करते हैं उनलोगों ने अपने ललाट में श्व-कुत्ते का पैर रख लिया है इसमें कोई संशय नहीं है । इसलिये शुभसूचक बडे छिद्र से युक्त ऊर्ध्वपुण्ड्र को श्रीहरिजी सर्व पापहारक श्रीरामजी की सायुज्य प्राप्ति हेतु सर्वदा ब्राह्मणों-श्रीवैष्णवों को शास्त्रानुसार धारण करना चाहिये । तिलक के विच में श्री निम्न मन्त्रों से लगाना चाहिये-

**श्रीदेवीप्रथमं नाम द्वितीयममृतोद्भवा ।**
**तृतीयं कमला प्रोक्ता चतुर्थं चन्द्रशोभिता ॥**
**पञ्चमं तु वरारोहा षष्ठं तु हरिवल्लभा ।**
**सप्तमं विष्णुपत्नी स्यादष्टमं वैष्णवी तथा ॥**
**नवमं शार्ङ्गिणी प्रोक्ता देवदेवी दशैव च ।**
**एकादशं तु लक्ष्मीस्याद् द्वादशं सर्वसुन्दरी ॥**
**एवं ध्यात्वान्तरालेषु हरिद्रां धारयेच्छ्रियम् ।**

यानी ॐ श्रियै नमः १ ॐ अमृतोद्भवायै नमः २ ॐ कमलायै नमः ३ ॐ चन्द्रशोभितायै नमः ४ ॐ वरारोहायै नमः ५ ॐ हरिवल्लभायै नमः ६ ॐ विष्णु पत्न्यै नमः ७ ॐ वैष्णव्यै नमः ८ ॐ शार्ङ्गिण्यै नमः ९ ॐ देवदेव्यै नमः १० ॐ लक्ष्म्यै नमः ११ ॐ सर्वसुन्दर्यै नमः १२ इसप्रकार वोलते हुये वीच में श्री का धारण करे ।

तिलक करने हेतु निम्न अङ्गुलियों का विधान शास्त्र में मिलता है-

**अनामिका शान्तिदोक्ता मध्यमायुष्करीभवेत् ।**
**अङ्गुष्ठः पुष्टिदः प्रोक्तस्तर्जनी मोक्षदायिनी ॥**

अनामिका शान्ति देनेवाली मध्यमा आयुदेनेवाली अंगुठा पुष्टिकारक एवं तर्जनी मोक्ष देनेवाली हैं ।

तिलक का स्वरूप आकृति कैसी हो या है इस विषय में शास्त्रों में विशद वर्णन प्राप्त होता है यहाँ श्रीमद्वाल्मीकिसंहिता के परिप्रेक्ष में श्रीवैष्णवीय तिलक का स्वरूप प्रस्तुत किया जा रहा है संक्षेप रूपसे-

ऋषियों की सभा में महर्षि श्रीवाल्मीकिजी के साथ श्रीवैष्णवीय तत्त्वनिरूपणात्मक विस्तृत निर्णयात्मक चर्चा हुई उस श्रीमद्वाल्मीकिसंहिता के चौथे अध्याय के १५वें श्लोक से ३६वें तक तिलक विषय में निर्णायक चर्चा हुई उन्हीं २२ श्लोकों के आदर्श में निम्न स्वरूप प्रस्तुत है-

**रमन्ते योगिनो यस्मिन् स रामः परिकीर्तितः ।**
**परिवेष्ट्य स्थितः सर्वं सैव विष्णुः समीरितः ॥**

जिन सर्वेश्वर परब्रह्म श्रीरामजी में योगिजन रमण करते हैं वह तत्त्व श्रीराम इस नाम से वेद श्रीमद्रामायण आदि शास्त्रों में कीर्तित-वर्णित है सम्पूर्ण चराचर को परिवेष्टित करते रहते हैं अतः उन्हीं श्रीरामजी को विष्णु इस नाम से शास्त्रों में कथन किया गया है ।

**स एव भगवान् कृष्णो गोपी गोपानुरञ्जकः ।**
**तस्य विष्णो महाबाहोर्भक्तानां पुण्ड्रसंग्रहः ॥**
**उच्यते श्रूयतां सम्यक् सावधानेन चेतसा ।**

वे ही सर्वेश्वर श्रीरामजी **'सर्वेषामवताराणामवतारीरघूत्तमः'** इस आगम वचनानुसार गोपी तथा गोपों को अनुरञ्जित करनेवाले भगवान् श्रीकृष्णजी के रूपमें अवतरित हुये उन महाबाहू श्रीरामजी के भक्तों का पुण्ड्र-तिलक के विषय में संग्रह रूपसे कहता हूँ उसे सावधानतया सुने ।

**ऊर्ध्वपुण्ड्रं सदा कार्यं विष्णुभक्तिपरायणैः ।**
**पातित्यमन्यथा प्राप्य रौरवं नरकं व्रजेत् ॥**

श्रीरामभक्तिपरायणों को सर्वदा ऊर्ध्वपुण्ड्र तिलक करना चाहिए तिलक न करने पर पतित हो जाता है तथा रौरव नरक में जायगा ।

**ऊर्ध्वपुण्ड्रधरो विप्रो विष्णुध्यानपरायणः ।**
**वीतपापः स धर्मात्मा स्वर्गलोकं समश्नुते ।**

ऊर्ध्वपुण्ड्र को धारण करनेवाला विष्णु भक्ति-ध्यान में परायण विप्र पाप रहित हो जाता है ऐसा धर्मात्मा स्वर्गलोक के सुखों को भोगता है ।



**हरेः पादाकृतिं कुर्यात् मध्यछिद्रसमन्वितम् ।**
**ऊर्ध्वपुण्ड्रं स्वमोक्षाय दुःखनाशाय सर्वथा ॥**
**आचम्यैवोर्ध्वपुण्ड्रं तु शुद्धया च मृदा सदा ।**
**कुर्याच्चाथान्तरालेषु हरिद्राधारणं तथा ।**

तिलक करनेवाले को प्रथम आचमन करना चाहिये तव सदा शुद्ध मृत्तिका श्रीरामरज से ऊर्ध्वपुण्ड्र करके बीच में हरिद्रा-श्री का धारण करना चाहिये ।

**रैवतकात् चित्रकूटाद्यादवाद्रेश्च वैष्णवाः ।**
**मृत्तिकाहरणं कुर्युरूर्ध्वपुण्ड्राय सर्वदा ।**

ऊर्ध्वपुण्ड्र तिलक हेतु सदा श्रीवैष्णवलोक रैवतक चित्रकूट एवं यादवाद्रि से मृत्तिका का आहरण-संग्रह करें ।

**गङ्गायाः सूर्यकन्यायाः सरय्वा वा मृदा सदा ।**
**ऊर्ध्वपुण्ड्रं शुभं कुर्युर्वैष्णवा धर्मरक्षकाः ।**

अथवा गङ्गा जमना या सरयु के शुद्ध मृत्तिका से धर्म के रक्षक श्रीवैष्णवों को शुभदायक ऊर्ध्वपुण्ड्र तिलक को सदा करना चाहिये ।

**पूर्वं सिंहासनं कुर्युस्ततः पार्श्वद्वयं पुनः ।**
**ततःपश्चाच्च तन्मध्ये लिखेयुः सुन्दरीं श्रियम् ।**

तिलक करते प्रथम सिंहासन स्थापित करे तव दो पार्श्व की ऊर्ध्वरेखा उसके वाद बीच में शोभा-वर्धक श्री का धारण करें ।

**रजन्याश्रियमालिख्य मृदावापि च शुक्लया ।**
**वैष्णवो मुक्तिमाप्नोति सर्वकल्मषवर्जितः ।**

दोनों ओर श्रीरामरज से ऊर्ध्वरेखा करने के वाद बीच में रजनी-हल्दी से तैयार रक्त श्री अथवा शुक्ल मृत्तिका-श्रीरामरज से ही ऊर्ध्वपुण्ड्र तिलक रक्त श्री या शुक्ल श्री करनेवाले सभी पापों से रहित श्रीवैष्णव सायुज्य मुक्ति प्राप्त कर लेता है ।

卐 ऋषय ऊचुः 卐

**भगवंस्त्वद्वचः श्रुत्वाऽभवामश्छिन्न संशयाः ।**

**ऊर्ध्वपुण्ड्रस्य भेदोऽस्य स्याद्यदीह तमप्यलम् ।**
**श्रोतुमिच्छाम आख्याहि सर्वसामर्थ्यवानसि (वन्मुने)**

महर्षि श्रीवाल्मीकीजी का पूर्वोक्त विवेचन सुन कर ऋषियों ने निवेदन किया भगवन् ! तिलक विषयक आपकी तात्विक वाणी सुनकर हमसब ऊर्ध्वपुण्ड्र तिलक के विषय में सन्देह रहित हो गये हैं । मुनीश्वर ! आप से निरूपित ऊर्ध्वपुण्ड्र तिलक का कोई भेद हो तो कृपया उसे भी निरूपित करें आप उसके वर्णन करने में पूर्ण समर्थ हैं हमसब उस भेद को भी आपसे ही सुनना चाहते हैं ।

**卐 श्रीवाल्मीकिरुवाच 卐**

**एकदा सुखमासीनं वैकुण्ठे च रघूत्तमम् ।**
**वायुसुनूर्महातेजा ब्रह्मचारिजितेन्द्रियः ।**

मुनियों के तिलक भेद सम्बन्धी प्रश्न सुनकर महर्षि श्रीवाल्मीकीजी वोले महर्षियो ! एक समय में रघुकुल शिरोमणि श्रीरामजी वैकुण्ठ में सुखपूर्वक विराज मान थे उस समय में जितेन्द्रिय महान् तेजस्वी ब्रह्मचारी वायुनन्दन श्रीहनुमानजी ने श्रीरामजी से निम्न प्रकार से-

**एतादृशान् बहून् प्रश्नान् पप्रच्छ (चकार) कपि-कुञ्जरः ।**
**श्रीरामस्तोषयामास तं तथाऽहं तथर्षयः ।**
**सर्वं वदामि युष्मभ्यं श्रृणुध्वं मुनिसत्तमाः ।**
**तच्छुत्वा छिन्नसन्देहा यूयं तेन भविष्यथ ।**

आपलोगों के जैसे ही उन कपिश्रेष्ठ ने बहुत प्रश्न किये श्रीरामजी ने सभी प्रश्नों का यथार्थ उत्तर से श्रीहनुमानजी को सन्तुष्ट किया ऋषिश्वरो ! मैं भी उन्हीं उत्तरों को आप सवों को यथार्थ रूपसे कहता हूँ मुनि श्रेष्ठो ! आपसब सुनें उन श्रीरामजी का उत्तर को सुनकर आपसव भी सन्देह रहित हो जायेंगे ।

**卐 भगवच्छ्रीरामवचनं श्रीहनूमन्तं प्रति 卐**

**ऊर्ध्वपुण्ड्रस्य भेदास्तु बहवः सन्ति शाश्वताः ।**
**तानहं ते वदिष्यामि श्रूयतां (श्रृणुत्वं) कपि कुञ्जर ? ।**

सर्वेश्वर श्रीरामजी ने श्रीहनुमानजी से कहा-हे कपिश्रेष्ठ श्रीहनुमानजी ऊर्ध्व पुण्ड्र तिलक के भेद तो बहुत हैं एवं वे शाश्वत यानी अनादि हैं उन भेदों को तुम्हारे



हेतु-सर्वजन सुलभ ज्ञानार्थ कहता हूँ उसे सुनो ।

**मद्भक्ताद्विविधाः प्रोक्ताः शुद्धसत्वः सुबुद्धयः ।**
**मामेव केवलं लोके भजन्ते जानकीं विना ।**

मेरे भक्त दो प्रकार के हैं एक शुद्धसत्व दूसरे सुबुद्धि प्रथम शुद्धसत्व भक्त श्रीजानकीजी के विना ही केवल मेरा भजन करते हैं ।

**जानकीसहितं मां तु भजन्ते सर्वदाऽपरे ।**
**एतेष्वपि च केचित्तु भक्तिमन्तोऽधिकं मयि ।**

दूसरे उपासकवर्ग श्रीसीताजी के साथ मेरी सर्वदा उपासना करते हैं यानी युगल स्वरूप की उपासना करते हैं । इन उपासकों में भी कोई मुझमें अधिक दृढ भक्ति भाववाले होते हैं ।

**जानक्यामेव चान्येषां दृढा भक्तिः प्रजायते ।**
**मदनुरागिणोभक्ता धारयन्ति न च श्रियम् ।**

कितने ही अन्य साधकवर्ग की श्रीजानकीजी में ही दृढा भक्ति होती है। कितने ही मुझमें विशेष अनुरागवाले साधकवर्ग श्री का धारण नहीं करते हैं अर्थात् समानान्तर श्रीरामरज की ऊर्ध्वरेखा मात्र सिंहासन के साथ तिलक करते हैं पर बीच में श्री का धारण नहीं करते हैं ।

**सीताभक्ताः प्रकुर्वन्ति मध्ये विन्दुं श्रियं शुभाम् ।**
**येषां सदाऽऽवयोरेव भक्तिर्भवति वै समा ।**
**ते शुक्लां रक्तवर्णाञ्च दीर्घां विदधाति श्रियम् ।**

जिन साधकवर्ग की श्रीसीताजी में विशेष भक्ति होती है वे श्रीरामरज की समान ऊर्ध्वरेखा के बीच में श्रीरामरज की ही वर्तुलशुभा श्री का धारण करते हैं। जिन साधकों की समान रूपसे श्रीसीताजी तथा मुझ में दृढा भक्तिभावना होती है वे साधनापरायण लोग श्रीराम चरणरज की सिंहासन के साथ समानान्तर ऊर्ध्वरेखा तिलक के बीच में समानान्तर ऊर्ध्वरेखा दीर्घाकार शुक्लवर्णा-श्रीरामचरणरज की या रक्तवर्णा हरिद्रा निर्मित श्री को धारण करते हैं ।

**कृष्णरूपधरं मां ये वैष्णवाः समुपासते ।**
**ते कृष्णं चापि रक्तं चाप्यूर्ध्वपुण्ड्रं सविन्दुकम् ।**

**कुर्वन्ति च महाभागा भक्तिभावसमन्विताः ।**

जो महाभाग श्रीरामचरणानुरागी श्रीकृष्णरूप धारक मेरी प्रेम से उपासना करते हैं ऐसे श्रीवैष्णवलोग विन्दु के साथ कृष्ण अथवा रक्त ऊर्ध्वपुण्ड्र तिलक करते हैं।

श्रीमद्वाल्मीकिसंहिता के इस विवेचन से यह अतिस्पष्ट हो जाता है कि श्रीवैष्णव-श्रीरामानन्दीय श्रीवैष्णव में तिलक स्वरूप के चार प्रकार हैं रक्त श्री शुक्ल श्री गुप्त श्री एवं विन्दु श्री ये चारों ही शाश्वत अनादि हैं जिनका उपदेश दिव्यधाम श्रीसाकेत में सर्वेश्वर श्रीरामजी ने दिव्य-नित्यपार्षद श्रीहनुमानजी को दिया है। जैसे श्रीसम्प्रदाय की परम्परा का उपदेश स्वयं सर्वेश्वर श्रीरामजी ने सर्वेश्वरी श्रीसीताजी को महामन्त्रोपदेश देकर प्रवर्तित किया वैसे ही स्वयं श्रीहनुमानजी को तिलक स्वरूप का उपदेश देकर किया है अतः ये दोनों तत्त्व अनादि हैं। जैसे युग धर्म किं वा कार्यकलापों से श्रीसम्प्रदायस्वरूप के मन्दप्रायः होने पर स्वयं सर्वेश्वर श्रीरामजी ने ही '**रामानन्दः स्वयं रामः प्रादुर्भूतो महीतले**' इस आगम वचनानुसार आनन्दभाष्यकार जगद्गुरु श्रीरामानन्दाचार्यजी के स्वरूप में ४४०० कलिकाल यानी १३५६ विक्रम में अवतार लेकर स्वधर्म का संवर्धन विशद प्रचार-प्रसार किया तथैव तिलक स्वरूप के प्रचार-प्रसार के मन्दप्रायः होने पर आनन्दभाष्यकारजी के उत्तरवर्ती आचार्यों ने उन उन तिलक स्वरूप को विशद प्रचार-प्रसार एवं प्रवर्धन किये अतः आनन्दभाष्यकारजी के उत्तरवर्ती आचार्यों ने तिलकस्वरूप का प्रवर्तन किये कहना श्रीसम्प्रदायीय रहस्य किंवा रहस्य ग्रन्थों से अनभिज्ञ जनों की वार्ता मात्र है। ध्यान रहे **प्रवर्तक** एवं **प्रवर्धक** में महान् अन्तर ही नहीं विरोध भी है पूर्व से विद्यमान वस्तु का सदुपदेश द्वारा विस्तृत प्रचारक प्रसारक को प्रवर्धक कहते हैं प्रथम व्यवहार में अदृष्ट पदार्थ का सत्पात्र में उपदेश द्वारा दृष्टरूप प्रदान करना प्रवर्तन है। तो प्रकृत में व्यवहार में अदृष्ट चारों तिलक स्वरूपों का सर्वेश्वर श्रीरामजी ने श्रीहनुमानजी को उपदेश देकर प्रवर्तन किये तदनन्तर उत्तरवर्ती आचार्यों श्रीयुत आनन्दभाष्यकारजी श्रीअंनुभवानन्दाचार्यजी श्रीतनतुलसीदास-चतुर्भुजाचार्यजी श्रीरामप्रसादाचार्यजी प्रभृतियों ने प्रवर्धन किये।

अतः जैसे श्रीसम्प्रदाय के विशेष प्रचारक प्रसारक प्रवर्धक होने से आनन्दभाष्यकारजी के नाम से श्रीरामानन्दसम्प्रदाय लोक किंवा उत्तरकालिक इतिहास में



व्यवहृत होने लगा तथैव उन उन तिलकस्वरूप का उन्हीं आचार्यों के नाम से व्यवहार होने लगा प्रचारक प्रसारक या प्रवर्धक के नाते ॥२॥

**यतेन्द्रियः शुचिः शुद्धवेशधृक् सुकुलोद्भवः ।**
**सदाचारपरोनम्रः शास्त्रज्ञो देशना पटुः ॥३॥**

**पूर्वश्लोकेन पञ्चसंस्कारस्य साक्षात् मोक्षसाधनत्वं कथितम् प्राप्तसंस्कारो हि झटित्येव संसारपरित्यागलक्षणं निरतिशयानन्दरूपं सायुज्यमोक्षमवाप्नोति ते इमे पञ्चसंकारा गुरुं विना नस्युरिति किदृशो गुरुः किं स्वरूपश्चेत्यादिगुरुलक्षणं प्रवक्तुमुपक्रमते यतेन्द्रियः शुचिः इत्यादि । तत्र यतेन्द्रियः बाह्यं चक्षुरादिकमान्तरं मनः यतं वंशीकृतं येन स यतेन्द्रियः अर्थात् निगृहीतेन्द्रियत्वं गुरोर्लक्षणम् तथा शुचिर्बाह्याभ्यन्तरशौचाचारसमन्वितः 'आचारहीनं न पुनन्ति वेदा इतिवचनात् । तथा शुद्धवेशस्य धारको भवेत् शास्त्रान्वितवेशयुक्त इत्यर्थः । तथा 'सुकुलोद्भवः' ब्राह्मणकुले जातो भवेत् द्विजातिकुले वा एतावता जन्मजातस्या सच्छूद्रस्य च निराशः विनम्रो भवेत् नतूद्धतो गुरुर्भवेत् तथा साङ्गवेदादिशास्त्र ज्ञानवान् भवेत् । एवं 'देशनापटुः देशनायां शिष्याणामुपदेशदाने चतुरोभवेत् एतादृशगुणविशिष्टो ब्राह्मणो विद्वानुपदेशको गुरुर्भवेन्नान्य इति भावः ॥३॥**

शास्त्र कथित पञ्चसंस्कार मोक्ष का साधन है ऐसा पूर्व दो श्लोक द्वारा बताया है। और यह संस्कार गुरु साध्य है तो कैसा गुरु हो ? उसका लक्षण क्या है ? इत्यादि बात को समझाने के लिए कहते हैं-'**यतेन्द्रियः**' इत्यादि। जो बाह्य तथा आन्तर इन्द्रिय पर जय को प्राप्त किया हो, शरीरादि से पवित्र हो, शुद्धसादा वेष को अर्थात् साधु के उचित शुभ्र काषाय वेष का धारण करता हो, ब्राह्मणादिक विशिष्ट कुल में समुत्पन्न हो, साधुओं के आचार विचार में तत्पर हो, विनम्र हो, नतु उद्धत हो, साङ्गवेदादि शास्त्र का ज्ञानवान् हो, और देशना उपदेश देने में चतुर हो, अर्थात् व्याख्याता हो एतादृश जो व्यक्ति हो उसे गुरु बनाना चाहिए ॥३॥

**विरक्तधर्मनिरतो ध्यानाभ्यासी सुबुद्धिमान् ।**
**निग्रहेऽनुग्रहेचैव समर्थो देशिको मतः ॥४॥**

**यश्च सदाविरक्तोबाह्यरागरहितस्तथाधर्मनिरतो पूर्वाचार्यप्रतिपादितधर्मपा**

लने तत्परो भवेत् तथा ध्यानस्याभ्यासशीलो भवेत् बुद्धिमान् देशकालाभिज्ञो भवेत् तथा निग्रहानुग्रहकरणे समर्थ एव देशिको भवेत् पूर्वोक्तगुणसम्पन्न एवाचार्यो भवेदितिभावः ॥४॥

जो व्यक्ति विरक्त धर्म में अर्थात् श्रीवैष्णवीय समस्त पूर्वाचार्य प्रवर्तित श्रीवैष्णवमत का पालन करने में सर्वदा संलग्न हो और ध्यानाभ्यासी हो नतु विरक्त वेश विरोधि कार्य में निरत हो वेदाभ्यास करनेवाला हो बुद्धिमान देशकाल को समझ कर कार्य करनेवाला हो, और निग्रह अनुग्रह करने में सामर्थ्यवाला हो एतादृश व्यक्ति को ही आचार्य बनावें ॥४॥

**हीनाङ्गो ह्यधिकाङ्गश्च कपटीकृष्णदन्तवान् ।**
**नेत्ररोगी च कुष्ठी च वावदूकश्च वामनः ॥५॥**
**व्यसनी बहुनिद्रश्च कुनखी बहुभोजनः ।**
**नेदृशोदेशिको योग्यो मुमुक्षोर्मोक्षसाधने ॥६॥**

यादृशगुणयुक्त एवाचार्यो भवेदिति प्रदर्श्य यादृशावगुणयुक्तो नाचार्यपदे समुपविशेदिति दर्शयितुं श्लोकद्वयमुदाहरति 'हीनाङ्गोह्यधिकाङ्गश्चेत्यादि' हीनाङ्गो हीनं विकलं अङ्गं यस्य स हीनाङ्गविकलाङ्ग इत्यर्थस्तथा योऽधिकाङ्गोऽधिकाङ्गवान् भवेत् यश्च कपटी मायावी भवेत् कृष्णदन्तवान् दन्ताः कृष्णा यस्य भवेयुः । तथा नेत्ररोगवान् कुष्ठरोगवान् वावदूकोऽवितथं बहुवदनशीलः । वामनः ह्रस्वदेहवान् व्यसनी तमालपत्रादिव्यसनवान् प्रमाणाधिकः निद्राशीलः कुत्सित नखवान् तथा बहुभोजनः प्रमाणाधिकभोजनवान् बहुभोजनस्य 'अस्वर्ग्यलोक विद्विषम्' इत्यादिमनुवचनेन निषेधात् । मुमुक्षोर्मोक्षसाधने एतादृश उपरिप्रदर्शितदोषयुक्तो देशिको गुरुर्नयुक्तः । अर्थादेतादृशदोषयुक्तं गुरुं नैव कुर्याद्यत उपनिषदि 'अथ षण्डः पतितोऽङ्गविकलः स्त्रैणो वधिरोऽर्भको मूकः पाषण्डीश्चक्री लिङ्गीवैखानसहरद्विजौभृतकाध्यापकः शिपिविष्टोऽनग्निकोवैराग्यवन्तोऽप्येते न संन्यासार्हाः संन्यस्ता यद्यपि महावाक्योपदेशे नाधिकारिणः' 'षण्डोऽथ विकलोऽप्यन्धोबालकश्चापि पातकी' नारदपरिव्राजकोपनिषद् ३।१-२। तथैव महामहोपाध्यायजगद्गुरुश्रीरामानन्दाचार्यश्रीरघुवराचार्यचरणा आचार्यस्मृतौ-



**नैवाधिकाङ्गसहितो न च व्यङ्गदेहो**
**नाचारहीनविविधाश्रमदत्तचित्तः ।**
**नोलम्पलो नच कदाचरणानुरक्तः**
**स्वाचार्यधुङ् नच नहि प्रमदानुरक्तः ॥२-१०॥**
**श्रद्धान्वितः कर्मपरायणश्च गुरौ प्रपत्यातिविशुद्धमानसः ।**
**निर्वृत्तसर्वेन्द्रियवृत्तिविज्ञ आचार्यतां याति स वै विरक्तः ॥२-११॥**

इत्यादिरूपेणग्राह्याग्राह्यत्वतयातत्स्वरूपनिरूपणात् ॥५-६॥

जो अङ्ग विकल हो तथा अधिक अङ्गवाला हो, कपट माया करनेवाला मायावी हो, जिसका दाँत काला हो, नेत्ररोग से दूषित अर्थात् अक्ष्णाकाण अन्ध हो, द्वाविंशतिभेद खिन्न कुष्ट रोगादि संक्रामक रोगवाला हो, तथा निरर्थक अधिक बोलने वाला वावदूक हो, वामन कद से छोटा हो, गाँजा बीडी भांग वगैरह व्यसनवान् हो प्रमाण में अधिक निद्राशील हो जिसका नख सडा हुआ हो और अधिक भोजन करनेवाला हो क्योंकि 'अस्वर्ग्यलोकविद्विष्टं' इत्यादि मनुवचन से बहुभोजन का निषेध है । मुमुक्षुओं को मोक्ष साधन का उपदेश देने के लिए एतादृश आचार्य योग्य नहीं है । नारदपरिव्राजकोपनिषद् का मत है कि-षण्ड पतित अङ्ग विकल स्त्रैण वधिर अर्भक मूक पाखण्डी चक्री लिङ्गी वैखानस हरद्विज भृतकाध्यापक-नोकरी करनेवाला शिपि विष्ट अनग्निक तथा षण्ड विकल अन्धा बालक और पातकी यदि वैराग्यवाले हों तो भी विरक्त श्रीवैष्णवसंन्यास दीक्षा के अधिकारी नहीं हैं यदि किसी के वहाने प्रलोभन देकर दीक्षा ली गई हो तो भी ब्रह्मविद्या के उपदेश का यानी श्रीराममहामन्त्र के उपदेश का अधिकार उन्हें नहीं है ।

महामहोपाध्याय जगद्गुरुश्रीरामानन्दाचार्य श्रीरघुवराचार्यजी वेदान्तकेसरीजी ने आचार्यस्मृति में लिखा है-

लोक व्यवहार में प्रशस्त रूपसे दिखनेवाले अङ्गों से अधिक अङ्गवाले एवं कम अङ्गवाले को गुरु नहीं बनाना चाहिये एवं सदाचार से हीन लंपट निन्दित आचारवाला अपने पूर्वाचार्यों की निन्दा करनेवाला तथा प्रमदा के साथ रहनेवाले को कभी भी गुरु नहीं बनाना चाहिये अपना कल्याण चाहनेवालों को । क्योंकि उपनिषद् का वाक्य है देव एवं गुरु में समान भक्तिवाले सदाचारी गुरु का उपदेश

उपकार करनेवाला होता है अतः परमविरक्त आचार्य तथा शास्त्र में निष्ठावाले सत् पुरुष को ही गुरु बनाकर उनसे दीक्षा शिक्षा लेनी चाहिये जिस किसी लूले लंगडे अन्धे बहरे से नहीं। विशेष विचार अन्यत्र देखिये ॥५-६॥

**श्रद्धान्वितो विशुद्धात्मा मेधावीविनयीपटुः।**
**कुलीनः सच्चरित्रश्च बुद्धिमान् व्रततत्परः ॥७॥**

गुरोर्लक्षणं समभिधाय ततः शिष्यलक्षणमभिधातुमुपक्रमते, अन्यथाऽविनीतशिष्योपदेशे गुरोररण्यरोदनमेवापतेत्तत्राह श्लोकद्वयेन 'श्रद्धान्वित' इत्यादि। कीदृशः शिष्यः समुपदेष्टव्यः ? 'श्रद्धान्वितः गुरूपदिष्टवेदान्तवाक्येषु विश्वास एव श्रद्धा तया अन्वितः सर्वथा युक्तो भवेत्। तथा विशुद्धात्मा कपटमायादि परिवर्जितः मेधावी धारणाशक्तिमान्, विनयी विनयवान् पटुरर्थावधारणे समर्थः कुलीनः सत्कुलजातः सच्चरित्रः सदाचारवान् बुद्धिमान् व्रतकरणे समर्थः सदोद्युक्तश्च एतादृशः शिष्यः कार्यः। उक्तसर्वगुणसम्पन्नताभाने उद्देश्यासिद्धिरिति भावः ॥७॥

जो श्रद्धा से युक्त हों अर्थात् गुरुवाक्य पर विश्वासवाला हो, पवित्र अन्तः करणवाला हो, प्रज्ञावान् विनयशील चतुर हो, सत्कुल में समुत्पन्न हो, जिसका चरित्र अच्छा हो, बुद्धिमान् तथा लोक व्यवहार में चतुर हो, एतादृश व्यक्ति शिष्य बनने का योग्य होता है ॥७॥

**गुरुशुश्रूषणे शक्त आज्ञाकारी जितेन्द्रियः।**
**अनुल्वणो भक्तिनिष्ठः शिष्यः कार्यस्तु दैशिकैः ॥८॥**

एवं यो गुरोः शुश्रूषायां शक्तः सर्वथागुरुरतः यथोक्तम् 'यथा खनन्खनित्रेण नरोवार्यधिगच्छति। तथा गुरुगतां विद्यां शुश्रूषुरधिगच्छतीति' स्मृतेर्गुरुशुश्रूषाया आवश्यकतया तत्करणे सर्वदैव प्रयत्नशीलः। तथा गुरोराज्ञाकारी, तदाज्ञयैवसर्वकार्यसम्पादकः, जितेन्द्रियः बाह्याभ्यन्तरेन्द्रियजयकारकः। अनुल्वणः सर्वथैव क्रोधादिरहितः भक्तिनिष्ठः भक्तौ निष्ठास्थितिर्यस्य तादृशः, गुरोरीश्वरस्य च भक्तौ सेवायां सर्वदा संलग्नः एतादृश उपर्युक्तक्रमेण प्रदर्शितः शिष्यो देशिकैराचार्यैः कर्त्तव्य इति शेषः ॥८॥



निम्न लिखित गुणों से युक्त पुरुष को ही आचार्य शिष्य बनावें नतु जिस किसी को शिष्य बनाने का लोभ तथा साहस करें। तथाहि जो गुरु शुश्रूषा गुरु तथा भगवान् की सेवा करने में शक्त समर्थ हो, तथा गुरु की आज्ञाकारी हो, अर्थात् गुरु के आज्ञा से कार्य करनेवाला हो, नतु स्वतन्त्र हो, तथा जितेन्द्रिय हो, अर्थात् जिसकी बाह्याभ्यन्तर इन्द्रिय के ऊपर विजय प्राप्त हो, अनुल्वण क्रोधादिक मानस विकार से अविकृत हो, अन्यथा क्रोधादिवश कदाचित् गुरु को भी अपमानित कर बैठे। तदुक्तं- '**क्रुद्धः पापं न कुर्यात्कः क्रुद्धो हन्याद् गुरूनपि। क्रुद्धः पुरुषया वाचा नरः साधूनपिक्षिपेत्**' तथा भक्तिनिष्ठ हो अर्थात् गुरु और परमेश्वर की सेवा करने में प्रयत्नशील रहता हो, एतादृश व्यक्ति को आचार्य शिष्य बनावें ॥८॥

**परीक्ष्यशिष्यं समुपासकं गुरुर्वर्षं समभ्यर्च्य च वह्निदेवताम्।**
**चापादिभिर्हेतिवरैः सुतापितैर्दिने सुपुण्ये नियतः समङ्कयेत् ॥९॥**

एवं गुरुशिष्ययोः स्वरूपं प्रतिपाद्य ततो गुरुस्तत्वोपदेष्टा आचार्यो हि शिष्यस्याज्ञानतमो निवर्तकः तदुक्तं-'गुशब्दस्त्वन्धकारः स्याद्रुशब्दस्तन्निवर्तकः। अन्धकारविरोधित्वाद्गुरुरित्यभिधीयते' एतादृशलक्षणको गुरुः, शिष्यं शासन योग्यं जिज्ञासुर्वर्षपूर्णं संवत्सरं यावत् समुपासकं निश्छलभावेन समुपासितगुरुं परीक्ष्यशिष्यस्वभावादीनां परीक्षणं कृत्वा तदुक्तं-'उपासितगुरोर्वर्षं विष्णोर्दास्यमभीप्सतः। विहितः पञ्चसंस्कारा युक्तस्यैकान्त्यहेतव' इति। ततोवह्निदेवता षोडशोपचारैर्यथामिलितद्रव्येण समभ्यर्च्य वेदिं कृत्वा कुशकण्डिकादिनिर्माण पूर्वकमग्निं पूजयित्वा सुदीप्तसंस्कृतपूजितवह्नौ भगवतो रामस्यवाणधनुषी तापयेत्, तथा तपयेत् यावतादाहयोग्यौ तौ भवेताम्, ततः सुतापितैर्हेतिवरैरायुधेषु श्रेष्ठैर्वाणादिभिः सुपुण्ये दिवसे श्रीरामनवम्यादिशुभतिथौ नियतः समाहितः सावधानतया आचार्यः शिष्यं भुजमूले तापयेत्तदङ्कनं कुर्यात्, तच्चिह्नं स्थायी भवेच्चन्द्रचिह्नवत्। अयं च विधिर्विरक्तानां गृहस्थानां तु शीतलमुद्रैव दातव्या नतु तप्तमुद्रादातव्येति केचन वदन्ति। एतत्तत्वं यथासम्प्रदायज्ञातव्यतयान्यत्र विचारयिष्ये ॥९॥

यथोक्त क्रम से मोक्षसाधन पञ्चसंस्कार के स्वरूप तथा गुरु शिष्यादि स्वरूपों का निर्वचन करके अनन्तर बाण धनुष के धारण करने के विधि को बतलाते हुए

कहते हैं 'परीक्ष्यशिष्यं समुपासकम्' इत्यादि । अज्ञानरूप अन्धकार को विनाश करने वाले गुरु महाराज एक वर्षतक उपासना करनेवाले शिष्य की समीचीन रूपसे परीक्षा करके अग्नि देवता का समीचीनपूर्वक कुशकण्डिकादि द्वारा पूजन करके सर्व आयुधों में श्रेष्ठ जो भगवान् श्रीरामजी का धनुषबाणरूप जो आयुध प्रतिकृति है उन आयुधों को सुसंस्कृत अग्नि में तपावें, तदनन्तर सुतप्त उन धनुषबाण से श्रीराम नवमी प्रभृतिक पुण्यतिथियों में शिष्य के दोनों भुजा के मूल में सावधान होकर अङ्कित कर दिया जाय इसका विशेष विवरण अन्यत्र किया जायगा ॥९॥

**सहोर्ध्वपुण्ड्रं सुमृदाश्रिया तथा रामादिदास्यान्वितनामकुर्यात् ।**
**मन्त्रं तथैवोपदिशेद्विधानतो मालाञ्चदद्यात् तुलसीसमुद्भवाम् ॥१०॥**

हे सुरसुरानन्द ! भगवदायुधस्याङ्कनानन्तरं तेनैव विधिना सुमृदाशुभस्वच्छवर्णयुक्तमृत्तिकया श्रीरामचरणरजादिना श्रिया सहैव ऊर्ध्वं पुण्ड्रं शिष्यस्य मस्तकादौ कुर्यात् तथा श्रीरामादिदास्यान्तं रामदास हनुमानदास हरिदासादिनाम कुर्यात् । दासशब्दोऽत्र शरण, प्रपन्न, आनन्द, आचार्यादिपदानामुपलक्ष्यकः । अत श्रीरामशरणादिनाम्नापिभाव्यमितिदिक् । तथैव अङ्कनादिविधिवदेव विधानतः शास्त्रप्रतिपादितविधानानतिक्रमेण मन्त्रराजषडक्षरतारकमन्त्रं समुपदिशेत्, मन्त्रो पदेशं गुरुः कुर्यात् । तथा तुलसीकाष्ठसमुद्भवां तुलसीसम्पादितामेवमालां यथा विधिशिष्यकण्ठे परिधापयेत् । नतु काष्ठान्तरनिर्मितमालां प्रयच्छेत्, यथाधुना शिष्यलोलुपा अज्ञात्वैव यतस्ततः क्रयक्रीतां काष्ठान्तरनिर्मितामपि धापयन्ति तद्वत् किन्तु तुलसीमालेयमिति निश्चत्यैव दद्यात् । यदत्रान्यकाष्ठमाला धारणनिषेधः कृतः स श्रीवैष्णवविषयकः । विशेषस्त्वन्यत्र द्रष्टव्यः ॥१०॥

हे सुरसुरानन्द ! अङ्कनानन्तर आचार्य शास्त्रविधि के अनुसार शिष्य के मस्तकादि प्रदेश में सफेद मृत्तिका श्रीरामरज से श्री सहित ऊर्ध्वपुण्ड्र कर दे तथा शास्त्रानुसार रामदास हनुमानदास प्रभृतिक नामकरण करें । एवं विधानपूर्वक तुलसी कण्ठी प्रदान कर षडक्षर मन्त्रराज का उपदेश करें, अनन्तर तुलसीकाष्ठ निर्मित अष्टोत्तरशत प्रमाणक माला भी शिष्य को देवें ॥१०॥

**एवं महान् भागवतः सुसंस्कृतो रामस्य भक्तिंपरमां प्रकुर्यात् ।**



**महेन्द्रनीलाश्मरुचेः कृपानिधेः श्रीजानकीवल्लभरावणारेः ॥११॥**

एवं पूर्वोक्तप्रकारेण कथितपञ्चसंस्कारैः सुसम्यक् संस्कृतः शिष्योधिकारी महान् भागवतो भगवतो रामस्य भक्तो जातः सन् श्रीजानकीवल्लभरावणारेः नीलाश्मरुचेः नीलमणिकान्तियुक्तस्य भगवतो रामचन्द्रस्य परमामनन्यां भक्तिं कुर्यात् । पञ्चसंस्कारप्राप्त्या भागवतः सम्पन्नो मुमुक्षुर्भगवतो रामस्यानन्यां भक्तिं कुर्यादिति ॥११॥

हे सुरसुरानन्द ! पूर्वकथित पञ्चसंस्कार से सुसंस्कृत अधिकारी शिष्य महाभागवत होकर के श्रेष्ठ नीलमणि की तरह श्यामल दयासमुद्र रावण के अरि श्रीविदेहजा श्रीसीताजी के वल्लभ उन से सर्वदा युक्त भगवान् श्रीरामजी की पराभक्ति तैलधारा की तरह स्मृति प्रवाहरूप परमभक्ति करें । अर्थात् भगवान् की सेवा में संलग्न हो जाय ॥११॥

**उपाधिनिर्मुक्तमनेकभेदका भक्तिः समुक्तापरमात्मसेवनम् ।**
**अनन्यभावेन मुहुर्मुहुः सदा महर्षिभिस्तैः खलु तत्परत्वतः ॥१२॥**

हे वत्स ! तत्परत्वेन तस्य भगवतो रामस्य परत्वेन अनन्यत्वेन उपाधिनिर्मुक्तं कामनादिसर्वोपाधिरहितम् परमात्मसेवनम् परमात्मनः सर्वेश्वरस्य सेवनं भजनमेव महर्षिभिर्वाल्मीकिप्रभृतिमुनिश्रेष्ठैः अनेकभेदा अनेकप्रकारिका भगवतो रामस्य भक्तिः कथिताः । तदुक्तं नारदपाञ्चरात्रे 'सर्वोपाधिविनिर्मुक्तं तत्परत्वेन निर्मलम् । हृषिकेणहृषिकेशसेवनं भक्तिरुच्यते' इति ।

एवं 'सर्वस्मादधिकस्नेहो भक्तिरित्युच्यते बुधैः' सेवैवमूर्ध्वं नयति साक्षात् कारयतिह्यजमिति । सेयं भक्तिः श्रवणादिभेदभिन्ना भगवत्सेवनरूपैवेति ज्ञेयम् ॥१२॥

हे सुरसुरानन्द अनन्य भाव से सर्वदेश सर्वकाल में निश्चयपूर्वक तत्पर भगवत् परक रहनेवाले श्रीवाल्मीकि पराशरादिक महर्षियों ने उपाधिभेद विनिर्मुक्त अर्थात् ममता, काम क्रोध और अहङ्कारादि से सर्वथा रहित परमात्मा श्रीरामचन्द्रजी की सेवा रूप जो भक्ति है तादृश भक्ति का अनेक प्रकार बतलाया है । अर्थात् श्रवण स्मरणादि आत्म समर्पणान्त अनेक भेद को बतलाया है वह सब भजन रूप ही है अतः

सर्वतोभाव से श्रीरामसेवारत हो जावो ॥१२॥

**सा तैलधारा समनित्यसम्स्मृतेः सन्तानरूपेशिपरानुरक्तिः ।**
**भक्तिःविवेकादिकसप्तजन्या तथा यमाद्यष्टसुबोधकाङ्गा ॥१३॥**

'रामस्यभक्तिं परमां प्रकुर्यात्' इयं पूर्वश्लोककथितकायिकवाचिकस्तथा मानसिकपराभक्तेः स्वरूपं साधनञ्च वक्तुकामोपक्रमते 'सा तैलधारेत्यादि' ईशि परमात्मनि भगवति श्रीरामे विवेकादिकसप्तजन्या अर्थात् विवेकविमोकाभ्यास क्रियाकल्याणानवसादानुद्धर्षरूपसाधनसप्तभिर्जायमाना तथा यमाद्यनुष्ठानसुबोधकाङ्गा अर्थात् यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिरूपाण्येवाङ्गानि स्वसुखं बोधकानि यस्यास्तादृशी तैलधारयाः समायास्तुल्याया अर्थाद-विच्छिन्नायाः परमात्मनः श्रीरामस्य स्वरूपस्य सम्यक् स्मृतेर्विस्ताररूपाया अनुरक्तिरनुरागः प्रीतिः सैव पराभक्तिः तदत्रस्वयमेवाहुरानन्दभाष्यकाराः 'निर्णीत एवायमर्थो भगवता बोधायनेन पूर्वपक्षोपन्यासपूर्वकप्रतिवचननिचयैः । तथाहि सकृत् प्रत्ययं कुर्यात् शब्दार्थस्य कृतत्वात् प्रयाजादिवत् ( बो.वृ. ) इत्यादिना पूर्वपक्षमुपन्यस्य समाहितम्-सिद्धं तूपासनशब्दात् ( बो.वृ. ) इति । वेदनमेवोपासनमित्य प्युक्तम्-वेदनमुपासनं स्यात्तद्विषये श्रवणात् ( बो.वृ. ) इति । उपासनं तु ध्रुवानुस्मृतिरूपमित्यभिहितम्-उपासनं स्याद् ध्रुवानुस्मृतिर्दर्शनान्निर्वचनाच्च ( बो.वृ. ) इति । सा च ध्रुवानुस्मृतिसाधनसप्तकादेवेत्युदीरितम् 'तल्लब्धिर्विवेकविमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्षेभ्यः सम्भवान्निर्वचनाच्च ( बो.वृ. ) इति । तत्र जात्याश्रयमित्ताद् दुष्टादन्नात् कायशुद्धिर्विवेक इति । निर्वचनमत्र आहारशुद्धौ सत्वशुद्धिः सत्वशुद्धौ ध्रुवानुस्मृतिः ( छा. ३।२६।२ ) इति । विमोकः कामानभिष्वङ्ग इति निर्वचनञ्चात्र उपासते पुरुषं ये ह्यकामाः ( मु. ३।२।१ ) शान्त उपाशीत ( छा. ३।१४।१ ) इत्यादि । आरम्भणसंशीलनं पुनः पुनरभ्यासः 'ज्ञानप्रसादेन विशुद्धसत्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः ( मु. ३।१।८ ) इति निर्वचनम् । पञ्चमहायज्ञाद्यनुष्ठानं शक्तितः क्रियेति । निर्वचनमत्र-तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन ( बृ. ४।४।२२ ) इति । सत्यार्जवदयादानहिंसानभिध्याः कल्याणानि । 'सत्येन लभ्यस्तपशाह्येष आत्मा सम्यग्ज्ञानं ब्रह्मचर्येण नित्यम्' ( मु. ३।१।५ ) इत्यादिनिर्वचनम् । देशकालवैषम्यात् शोकवस्त्वाद्यनुस्मृतेश्च तज्जन्यं दैन्यमभास्वरत्वं मनसोऽवसाद इति तद्विपर्ययोऽनवसादः । नायमात्मा बलहीनेन लभ्यः ( मु. ३।२।४ ) इति निर्वचम् । तद्विपर्ययजातुष्टिरुद्धर्षस्तद्विपर्ययोऽनुद्धर्षः । ऐतैरुपायैर्यतते यस्तु विद्वान् यस्यैष आत्मा विशते ब्रह्मधाम ( मु. ३।१।४ ) शान्तोदान्त ( मु. ४।४।३ ) इत्यादि निर्वचनम् । ( आनन्दभाष्यम् १।१।१ ) इत्यादिकम् । एतादृशीभक्तिर्भगवति कर्तव्येति श्रीपराशरादयोमुनिपुङ्गवाः कथयन्तीतिभावः ॥१३॥



'रामस्यभक्तिं परमां प्रकुर्यात्' एतादृश वाक्य से कथित कायिक वाचिक तथा मानसिक रूप जो भगवान् की पराभक्ति है उसका स्वरूप क्या है ? तथा तादृश पराभक्ति का साधन क्या है ? इस बात को बतलाने के लिये आचार्यजी कहते हैं **'सा तैलधारेत्यादि'** जो विवेक प्रभृति अर्थात् विवेक, विमोक अभ्यास, क्रिया, कल्याण अनवसाद तथा अनुद्धर्ष-इन सात प्रकारक बोधायनवृत्ति प्रतिपादित कारणों से उत्पन्न है तथा जिसके यम प्रभृतिक अर्थात् यम, नियम, आसन, प्राणायाम, प्रत्याहार, धारणा, ध्यान और समाधि-ये आठ प्रकार के कारण समुचित रूपसे बोध कराने में कारणात्मक अङ्ग है। तैलधारा के सदृश नित्य संस्मृति अर्थात् अविच्छिन्न स्मरण प्रत्यक्षाकार ज्ञान से जायमान जो भगवान् श्रीरामजी में परम अनुराग है उसी को अनन्या भक्ति कहते हैं। इस अनन्याभक्ति से ही मोक्ष होता है। 'भक्त्यात्वनन्यया लभ्योऽहमेवं विधोऽर्जुन' 'अनन्याश्चिन्तयन्तोमां' इत्यादि वचन प्रमाण से ॥१३॥

**उदारकीर्तेः श्रवणं च कीर्तनं हरेर्मुदासंस्मरणं पदश्रितिः ।**
**समर्चनंवन्दनदास्यसख्यान्यात्मार्पणं सा नवधेति गीयते ॥१४॥**

येयमनन्याभक्तिःमोक्षकारणतया कथिता सा श्रवणादिभेदादनेकप्रकारेति दर्शयितुमाह 'उदारकीर्तेरित्यादि' उदारा अत्यधिकाकीर्तिर्विद्यते यस्य भगवतो रामस्य-

**यस्यामलं नृपसदस्सु यशोऽधुनाऽपि गायन्त्यघघ्नमृषयो दिगिभेन्द्रपट्टम् ।**
**तं नाकपालवसुपालकिरीटजुष्टपादाम्बुजं रघुपतिं शरणं प्रपद्ये ॥**

इतिभागवते श्रीशुकार्योक्तेः सुयंशसः श्रीमद्रामायणादिग्रन्थस्य श्रवणं श्रवणविषयतापादनम् तथा तद्गुणानां कीर्त्तनमन्यं प्रतिकथनम् मुदाहर्षपूर्वकं हरेः श्रीरामस्य संस्मरणमनुक्षणं स्मरणं कर्त्तव्यम् तथा भगवतः पदयोः श्रितिः

**गतप्रकरणेऽनेकरूपेण मोक्षसाधनं यदुपदिष्टं तादृशं सर्वमुपसंहरति** 'एवं तेऽभिहितम्' इत्यादि। हे वत्स सुरसुरानन्द ! एवं गतप्रकरणप्रतिपादितप्रकारेण **प्रकृष्टं श्रेष्ठं प्रधानम् मोक्षसाधनं सायुज्यप्रापकमभिहितम्। त्वया यत्पृष्टं तत्तुभ्य मभिहितम्। अतः परम् सर्वधर्माणां मध्ये यदुत्तमं सर्वतः श्रेष्ठं सनातनं धर्मस्व रूपं कथयामि त्वं तत् सावधानतया श्रृणु श्रुत्वाचैवावधार्यताम् ॥१॥**

पूर्व प्रकरण में अनेक प्रकार से प्रतिपादित मोक्ष साधनोपदेश का उपसंहार करते हुए कहते हैं-'**एवं तेऽभिहितम्**' इत्यादि। हे वत्स ! सुरसुरानन्द ! मैंने तुमको अनेक प्रकार के मोक्ष साधन उपायों का कथन किया। इसके वाद सब धर्मों में श्रेष्ठ सनातनधर्म का उपदेश देता हूँ। उसको तुम सावधान मन से सुनो और सुनकर उसका आचरण करो ॥१॥

**दानं तपस्तीर्थनिषेवणं जपो नचास्त्यहिंसा सदृशं सुपुण्यकम्।**
**हिंसामतस्तां परिवर्जयेज्जनः सुधर्मनिष्ठो दृढधर्मवृद्धये ॥२॥**

**दानं तपस्तीर्थनिषेवणम्, तीर्थसेवनादिकं तथा जपः एतत्सर्वं पुण्यजनकम् परन्तु एतत्सर्वमहिंसापुण्यसदृशपुण्यातिशयं नास्ति, तस्मात् सुधर्मनिष्ठो मुमुक्षुर्वैष्णवो दृढधर्मवृद्धये अहिंसाविरोधिनीं हिंसां प्रयत्नेन परिवर्जयेत् माहिंस्यात् सर्वाणि भूतानि, इतिश्रुतेः ॥२॥**

दानतप तीर्थ सेवन तथा जपादिक अहिंसा के समान अतिश्रेष्ठ पुण्य नहीं है। अर्थात् दानादिकों में पुण्य रूपता तो है परन्तु अहिंसा के बरावर यह सब दानादिक नहीं है। अतः सर्वधर्मोत्तमश्रीवैष्णवधर्म में ही निर्वाह करनेवाले प्रयत्नपूर्वक हिंसा का त्याग कर दे ॥२॥

**श्रयन्तिधर्मास्तुतया पृथक् स्थितान् सुवक्रगाः सिन्धुमिवापिनिम्नगाः।**
**काष्ठस्थवह्नेरिव घातको हरेश्चराचरस्थस्य च जन्तुहिंसकः ॥३॥**

**तया तादृशजीवहिंसया विहीतान् विशेषेण रहितानेवजनानहिंसकानेव दयादिकाः सर्वेधर्माः श्रयन्ति समाश्रयन्तीत्यर्थः। यथा सुवक्रगाः कुटिला अपि गङ्गायमुनादिकानद्यः साक्षात् परम्परया वा सिन्धुं समुद्रं महाजलराशिमेवाश्रयन्ति तथैव प्रकृतेऽपि च यस्मात् कारणात् जन्तुहिंसकः प्राणिव्यापादको जन्तुर्मनुष्यादिः, चराचरे सर्वत्र प्रपञ्चे व्यापकतया प्रपञ्चेऽनुप्रविश्य विद्यमानस्य हरेः सर्वपापनिवर्तकभगवतोरामस्यैव विघातको जन्तुहिंसको जनः। काष्ठस्थवह्नेरिव यथा काष्ठे विद्यमानोऽन्तरवस्थितो वह्निः स्वाश्रयीभूतकाष्ठस्य विनाशको भवन् काष्ठाश्रितसर्वस्यापि चेतनस्याचेतनस्य वा दाहको भवति तथैव काष्ठस्थानापन्न चराचरजगदनुप्रविश्य स्थितस्य परेशश्रीरामस्यैव दुःखकारीजन्तुहिंसको भवतीति तस्मात् जीवहिंसां विहायावस्थितानेव जनान्धर्माः समाश्रयन्तीत्यहिंसापालनीया तदैव धर्मान्तरस्यापिफलवत्वं भवतीति। तदुक्तम्-**



**'नाऽहिंसा सदृशं दानं नाऽहिंसा सदृशं तपः।**
**नाऽहिंसा सदृशं तीर्थं पुण्यभूषणशोभने ॥**
**ये च हिंसन्ति वै जन्तून् जलजांस्थलजांस्तथा।**
**मज्जन्ति नरके धीरे कल्पकोटिशतैरपि ॥ इति ॥३॥**

जिस तरह ऊँच नीच वक्र और सरल सीधा होकर के चलनेवाली बहती हुई नदी समुदाय गङ्गा सिन्धु कावेरी प्रभृतिक सब नदी नद, साक्षात् परम्परया वा अगाध जलराशि समुद्र का ही आश्रय लेते हैं। उसी तरह जितना कोई दया प्रभृतिक धर्म समुदाय हैं वे सबके सब हिंसा रहित अर्थात् अहिंसक व्यक्ति का ही आश्रय लेता है। वही व्यक्ति दया शौचादि धर्मवान् हो सकता है जिसके अन्दर हिंसा नहीं है अर्थात् अहिंसक है। श्लोक घटक 'च' शब्द हेत्वर्थक है। चराचर में अन्तः अनुप्रविष्ट होकर के सर्वत्रावस्थित भगवान् श्रीरामजी का वह हिंसक व्यक्ति घातक है काष्ठस्थ वह्नि की तरह अर्थात् जिस तरह काष्ठ के अन्दर में रहनेवाला वह्नि काष्ठाश्रित पदार्थों का तथा काष्ठ का दाहक होता है उसी तरह हिंसक सर्वव्यापक भगवान् को दुःख देने वाला होता है इसलिए विवेकी व्यक्ति को चाहिए सर्वप्रथम अहिंसा व्रत का ग्रहण करें वेद में कहा है-मा हिंस्यात् सर्वा भूतानि अहिंसत् सर्वभूतेभ्यः' इत्यादि पुराणों में भी कहा है-

**'नाऽहिंसा सदृशं दानं नाहिंसा सदृशं तपः।**
**नाहिंसा सदृशं तीर्थं पुण्यभूषणशोभने ॥'**
**यथा वक्रगतानद्यः सिन्धौ चैव विशन्ति हि।**
**तथैव धर्माः श्रयन्ति हिंसाहीनेषु साधुषु ॥' इति।**

अतः प्रत्येक धर्म अहिंसक व्यक्ति के आश्रय में ही रहता है । इसलिए अहिंसा परमावश्यक है ॥३॥

**जलस्थलोत्पन्नशरीरहिंसया विवर्जयेन्मांसमुदारधीः सदा ।**
**दयापरोऽधोगतिहेतुरूपयाऽचिराय लभ्यं भवभी निवृत्तये ॥४॥**

अधोगतिर्नरकादिप्राप्तिकारणरूपया, जलस्थलोत्पन्नशरीरिहिंसया जले समुत्पन्नो मत्स्यनक्रादिशरीरिजीवस्तथास्थले समुत्पन्नोयः शरीरी अजावन्यशूकरादिः तदीयहिंसयैव, अचिराय-झटितिलभ्यं यन्मांसम् तत् भवभी निवृत्तयेः संसारभयनिवृत्त्यर्थम् उदारधीरुदारा विशालाधीः सर्वे जीवाः स्वात्मसदृशा एवेत्येवं बुद्धिर्विद्यये यस्यैतादृशो दयापरो दयाप्रधानो मुमुक्षुर्मांसं शरीरिशरीरजनितं विवर्जयेत् परित्यजेत् ॥४॥

उदार बुद्धिवाले अर्थात्-'शुनिचैव श्वपाके च पण्डिताः समदर्शिनः' इत्यादि वचन प्रमाण से परमात्मा की सर्वत्र व्याप्ति होने से जीवमात्र पूज्य है, एतादृश बुद्धि वाले तथा दयापरायण पुरुष अधोगति नरकादि गति के कारण जलस्थल में जायमान प्राणियों की हिंसा से ही प्राप्त होने के योग्य मांस को संसार भय निवृत्ति के लिए अर्थात् जन्ममरणादिक दुःख की निवृत्ति के लिये सर्वदा मांस भोजन का परित्याग कर दें अर्थात् मांस भक्षण न करें ॥४॥

**नस्त्रियं परिगृह्णीयाद्विरक्तो वैष्णवः क्वचित् ।**
**मन्वादिस्मृतिशास्त्रेषु तन्निषेधस्यशासनात् ॥५॥**

यथा अहिंसाधर्मधर्महेतुत्वाद्धर्मस्तथैवापरिग्रहोपि वैष्णवधर्म इत्यहिंसाया निरूपणं कृत्वा तदनु अपरिग्रहं दर्शयितुमुपक्रमते 'नस्त्रियं परिगृह्णीयाद्विरक्तः' इत्यादि । यद्यपि 'कौपिनं युगलं वासं कन्था शीतनिवारिणी' इत्युक्त्या आवश्यकधनादिव्यतिरिक्तं धनवस्त्रादिकं सर्वपरिग्रहात्मकमेवेति सर्वपरिग्रहस्य निराकरणमावश्यकं तथापि सर्वपरिग्रहेषु स्त्रीपरिग्रहस्य साक्षाद्बन्धजनकतया प्राधान्यमिति प्रथमतः स्त्रीपरिग्रहस्यैवनिषेधं दर्शयति-'नस्त्रियं परिगृह्णीयादित्यादि' विरक्त एषणात्रयरहितः समुपात्तविरक्तश्रीवैष्णवदीक्षः सर्वसंन्यस्तः ततः परं क्वचित् कस्मिंश्चिदपिकाले कस्यामप्यवस्थायाम् स्त्रियं कामिनीं कदापि न



गृह्णीयात् । विधानतोऽविधानतो वा स्त्रियं नोद्वहेत् । न च-'अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत् । अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम्' इत्यादि ब्रह्मचर्यानन्तरमुद्वाहविधायकशास्त्रविरोध इतिवाच्यम् । तादृशशास्त्रस्योपकुर्वाणब्रह्मचारिविषयकतया नैष्ठिकब्रह्मचारिश्रीवैष्णवसंन्यासिविरक्ताविषयकत्वे नाविरोधात् । 'कदापियुवतीं भिक्षुर्नस्पृशेद्दारवीमपि' इत्यादिना संन्यासिनां कृते स्त्रीपरिग्रहस्य सर्वथैवनिषेधादिति विभाव्याचार्येण सूत्ररूपेण कथितं 'नस्त्रियं परिगृह्णीयात्' इति ।

विरक्तः प्राप्तश्रीवैष्णवधर्मकदीक्षकथमुद्वाहं न कुर्यात् तदुद्वाहे को दोष इत्याशङ्कायां तत्र दोषं दर्शयितुमाह-'मन्वादिस्मृतिशास्त्रेषु इत्यादि । मनुयाज्ञवल्क्यपराशरादिविविधस्मृतिग्रन्थेषु विरक्तानां कृते कामिन्योद्वाहस्य निराकरण दर्शनात् । तथाहि-

'प्रायश्चित्तं न प्रश्यामि येन शुद्ध्येत् स आत्महा' ( अग्निपु. १६।५।२३ )
'आरूढोनैष्ठिकं धर्मं यस्तु प्रच्यवते द्विजः ।
प्रायश्चित्तं न पश्यामि येन शुद्धेत्स आत्महा' ( अत्रिस्मृतिः ८।१६ )
विधिना बुद्धिपूर्वेण यः संन्यासि गृही भवेत् ।
स एवारूढपतितः सर्वकर्मबहिस्कृतः ॥
भ्रष्टो यः स्वाश्रमाचारात्पतितः सोऽभिधीयते । ( स्मृतिरत्नावलिः )
चाण्डालवत्ते विभ्रष्टाः परिव्राजकतापसाः ।
तेषां जातान्यपत्यानि चाण्डालैः सह वासयेत् ॥
पारिव्राज्यं गृहीत्वा तु यः स्वधर्मं न तिष्ठति ।
श्वपदेनाङ्कयित्वा तं राजा शीघ्रं प्रवासयेत् ॥
वसन्नवसथे भिक्षुर्मैथुनं यदि सेवते ।
तस्यावसथनाशः स्यात्कुलान्यपि हि कृन्तति ॥ ( दक्षस्मृतिः ७।४१ )
परदारा न गन्तव्याः परधर्मो भयावहः ।
कदाचिदपि नो कुर्याद्विरक्तो हि गृहस्थताम् ।
यतस्तस्याश्च शास्त्रेषु प्रायश्चित्तं न विद्यते ।
२३-२४ इतिश्रीवैष्णवधर्मपीयूषे तथैव प्रबोधरत्नमालायाम्-

विरक्तो वैष्णवोभूत्वा विवाहं नहि कारयेत् ।
रेतः पातो न कर्तव्यस्तं कृत्वा पतितो भवेत् ॥
भूत्वा महान्तो यदि यो विरक्तो मौर्ख्यात्स्वकं कामयते विवाहम् ।
धर्मच्युतेस्तस्य वहिस्कृतिं संकुर्युविरक्ताः स्तुतवैष्णवा वै ॥
समाजदूषकः साधुर्यः कश्चित्स्यात् सुधीरपि ।
स त्याज्यः सुविरक्तैश्च श्रीवैष्णवैः सनातनैः ॥(२२।२४)

इतिस्त्रीसंग्रहस्य अन्यत्रापि निषेधस्तत्स्वरूपाविष्करणेनकृतः 'अस्थिनिर्मितपेशीयं मांसासृक् पूयपूरिता' 'अस्यां रज्यति यो मूढः पिशाचः कस्ततोधिकः' इत्यादिना सामान्यतस्तत्स्वरूपं दर्शयित्वा-'एता हसन्ति च रुदन्ति च कार्यहेतोर्विश्वासयन्ति च परं न च विश्वसन्ति । एताः प्रविश्य सरलं हृदयं नराणां किं किं न वामनयना हि समाचरन्ति' इत्यादिना विशेषतः कामिन्याः स्वरूपं प्रदर्श्य तन्निषेधः कृतः ॥५॥

जिस तरह सर्वधर्म श्रेष्ठ अहिंसा धर्म का पालन करना विरक्त श्रीवैष्णव का धर्म है अतः अहिंसा धर्म का उपदेश किया । उसी तरह परिग्रहाभाव भी श्रीवैष्णव धर्म है, यह समझकर अपरिग्रह धर्म को बतलाने के लिए प्रथमतः दारपरिग्रह निराकरण के लिए कहते हैं-'**नस्त्रियं परिगृह्णीयादित्यादि ।**' विरक्त श्रीवैष्णव किसी भी देशकाल में किसी भी अवस्था में दारपरिग्रह न करें । क्योंकि मनु याज्ञवल्क्य पराशर प्रभृतिक स्मृतिग्रन्थों में विरक्त दीक्षा संप्राप्त भागवतों के लिए दारपरिग्रह का निषेध किया गया है इसलिये विरक्त दीक्षा से दीक्षित श्रीवैष्णव दारपरिग्रह न करें । यह आनन्दभाष्यकार जगद्गुरु श्रीरामानन्दाचार्यजी यतीन्द्र की आज्ञा है ॥५॥

**विवाहे तु कृते सस्यादारूढपतितो ध्रुवम् ।**
**आरूढपतितस्यार्थे प्रायश्चित्तं न विद्यते ॥६॥**

ननु यदि विरक्तो श्रीवैष्णवो विवाहं कुर्यात्तदा को दोषस्तत्राह-'विवाहे तु कृते' इत्यादि । श्रीवैष्णवेन विरक्तेन विवाहे कृते सति, अर्थात् यदि विरक्तो विवाहं कुर्यात्तदा स आरूढपतितो नियमतो भवेत्, प्रथमं मोक्षलाभाय श्रीवैष्णवमार्गमारूढवान्, ततश्च पश्चात्तन्मार्गात्परिभ्रश्य गृहस्थधर्मे पतितः, इति आरूढपतितो नियमतः स्यात् । ननु भवतु, आरूढपतितस्तावताकिम् तत्राहुः-'आरूढपतितस्यार्थे' इत्यादि । योह्यारूढपतितस्तदर्थं शास्त्रे प्रायश्चित्तं न विद्यते, येन सः पुनर्विशुद्धो भवेत्-'निष्कृतिर्नविधीयते' इत्यादिमन्वादिवचनात् । ब्रह्मचर्यगृहस्थवानप्रस्थसंन्यासेषु सर्वतः उत्तमोमार्गः संन्यासस्तदधिष्ठाय कारणवशात्ततो निपतितस्य रौरवादिनरकप्राप्तिरेव भवति । नास्ति शास्त्रेकिञ्चित्प्रायश्चित्तं यदाचरणेन स पुनर्विशुद्धो भवेदित्यतो महानयं दोष आरूढपतितत्वमित्यन्यत्र विस्तरः ॥६॥



विरक्त श्रीवैष्णव को विवाह करलेने पर क्या दोष है ? हजारों लोग तो विवाह करते ही हैं । इस आशङ्का के उत्तर में कहते हैं-'**विवाहेतु कृते**' इत्यादि । श्रीवैष्णव मत की भागवती विरक्त दीक्षा लेने के वाद यदि विरक्त व्यक्ति विवाह कर लेता है, तो वह आरूढ पतित हो जाता है । और जो आरूढ पतित हो गया, उसको पुनः शुद्ध करने के लिए, शास्त्र में किसी प्रकार का प्रायश्चित्त का विधान नहीं है । यही महान् दोष आरूढ पतितत्व का होता है अतः विरक्त दीक्षा प्राप्त श्रीवैष्णव विवाह न, करें ॥६॥

**प्रच्युतो नैष्ठिकाद्धर्मादात्महापि प्रकीर्तितः ।**
**मठाध्यक्षत्वदीक्षादौ बहिष्कार्यः स यत्नतः ॥७॥**

**यस्तु विरक्तोनैष्ठिकात् विरक्तधर्मात्प्रच्युतो निपतितः स आत्महा प्रकीर्तित अतो मठाध्यक्षत्वदीक्षादिकपवित्रकार्येषु यत्नतः प्रयत्नेन बहिष्कार्यो बहिष्कर्त्तव्यः । मठादिषु तस्य विनियोगो न कर्तव्यः पतितेन सहवार्तालापादिकरणेऽपि प्रायश्चित्तविधानादिति ज्ञेयम् ॥७॥**

जो व्यक्ति नैष्ठिक धर्म से अर्थात् विरक्त श्रीवैष्णव धर्म से गिर गया, वह आत्महा भी कहलाता है । क्योंकि आत्मा का उद्धार करने के लिए विरक्त धर्म का आश्रय लिया था । परन्तु उस पवित्र धर्म से पतित होने पर उसने अपनी आत्मा को नरक में डाल दिया । ऐसा जो व्यक्ति है उसको अतिपवित्र मठाध्यक्षत्व स्थान का आचार्य या महन्त तथा दीक्षादि कार्यों से विल्कुल बाहर कर देना चाहिए ॥७॥

**व्यासेन ब्रह्मविद्यातो बहिष्कारोऽस्य सूचितः ।**
**शिष्टा यज्ञादिकार्येषु वर्जयन्ति तथा विधम् ॥८॥**

अस्यारूढपतितस्य विरक्तस्यापि ब्रह्मविद्यातो व्यासेन वेदाचार्येण बहिष्कारः असमावेशः सूचितः अर्थादारूढपतितस्य ब्रह्मविद्यायामधिकारो नास्तीति-'शुगस्य तदनादरणा' दित्यादिस्थलेषु बहिष्कारः प्रतिपादितः, तदाहुराचार्याः 'तस्मान्नाधिकारः...ब्रह्मविद्यायाम्' ( आनन्दभाष्यम् १।३।३८ ) इति। तथा शिष्टा यज्ञादिकर्मकर्त्तारो विद्वांसः तथाविधमारूढपतितम्, यज्ञादिकार्येषु यागदानहोमादौ नास्ति तेषामधिकार इति कृत्वा ते परिवर्जयन्ति त्यजन्त्येव नतु तादृशकार्ये समावेशयन्तीति संक्षेपः ॥८॥

वेदाचार्य भगवान् श्रीव्यासजी ने भी आरूढ पतित को ब्रह्मविद्या में अधिकार नहीं है, अर्थात् ब्रह्मविद्या से तादृश व्यक्ति को बहिष्कृत सूचित किया है। और शिष्ट लोगों ने भी यज्ञ दानादि कार्यों से आरूढ पतित को बहिष्कृत कर दिया है। आरूढ पतित को दानादिक में अधिकार नहीं है ऐसा कहा है ॥८॥

**विरक्तैर्वैष्णवैस्तस्मादारूढपतितो न हि ।**
**व्यवहारेषु योक्तव्यस्तत्संसर्गोऽपि पापकृत् ॥९॥**

**यस्मात् कारणात् आरूढपतितस्य प्रायश्चितं न विद्यते श्रीव्यासैस्तदन्यशिष्टैश्च तत्प्रतिषेधः कृतस्तस्मात् विरक्तश्रीवैष्णवैरारूढपतितो व्यवहारे भोजनसंभाषणादिव्यवहारे कदापि नहि योक्तव्यो यतः पतितस्य साक्षात् संसर्गः परम्परया संसर्गश्च पापकृत् पापायैव भवति तस्मात् पतितेन सह भोजनसंलापादिव्यवहारः परमेश्वरपरायणैः कदापि न विधेय इत्याचार्यानुशासनं सर्वैरभ्युपेयमेवेति संक्षेपः ॥९॥**

आरूढपतित के लिए शुद्ध्यर्थ शास्त्र में प्रायश्चित्त का विधान नहीं है। तथा श्रीसम्प्रदायाचार्य श्रीव्यासजी महाराज ने ब्रह्मविद्या में पतित का अधिकार नहीं रखा है। याजक शिष्टगण ने यागादि क्रिया में पतित को अधिकार नहीं दिया है। इसलिए विरक्त श्रीवैष्णव को चाहिए कि आरूढ पतित को भोजन संभाषणादि व्यवहार में शामिल न करें अर्थात् श्रीरामार्चादिक महान् कार्यों में पङ्क्त में बोलचालादि में पतित का संसर्ग न करें। क्योंकि पतित के साथ जो संसर्ग है वह भी पाप का जनक है अर्थात् संसर्गजा देषगुणा भवन्ति उक्ति के अनुसार उसके संसर्ग से पाप लगेगा अतः उसे त्याग दें ॥९॥



**समर्प्यकर्माणि शुभानि वैष्णवो रामाय भक्ष्यं च निवेद्य भक्षयेत् ।**
**अहर्दिवं वीतभयं समुत्तमं विमुक्तधीः स्वाघनिवृत्तिकामनः ॥१०॥**

**स्वाघनिवृत्तिकामनः** स्वकीयपापापनोदनकामनावान् विमुक्ता धीः यस्य अहर्दिवं रात्रिन्दिवम् कृतानि भगवन्तमेवोद्दिश्य कृतानि यानि कर्माणि तानि सर्वाणि भगते श्रीरामाय समर्प्य वीतभयः विगतसंसारभयो भवति 'यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्। यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम्। शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः। संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि इति वचनात्। सर्वविशुद्धभक्ष्यादिकमोदकपायसादिकं भगवति सर्वेश्वरश्रीरामे निवेद्य तदनन्तरं समुत्तमं निरतिशयश्रेष्ठं सात्विकं भगवत् प्रसादं सत्वशुद्ध्यर्थं भक्षयेत्। आहारशुद्धौ सत्वशुद्धिरितिस्मरणात्। स्वकीयान्तःकरणस्य शुद्ध्यर्थं विशुद्धभोजनमावश्यकमन्यथा तदसम्भवात् ॥१०॥

स्वकीय पाप कर्मों की निवृत्तिपूर्वक मोक्ष प्राप्त करने की इच्छुवाले जो विरक्त श्रीवैष्णव हैं वे लोग अहोरात्र में कृत क्रियमाण शुभ कर्मों का जगत् कारण भगवान् श्रीरामजी को समर्पित करके भगवान् को शुद्ध भाव से समर्पित भक्ष्यभोज्याद्यन्यतम शुद्ध भोजन का प्रसाद रूप में ग्रहण करें। एतादृश भगवत् प्रसाद का भोजन करके महापुरुष जन्ममरणादिक संसार भय से निवृत्त होकर परमपद को प्राप्त करते हैं।१०॥

卐 अथ अर्चावतारनिरूपणम् 卐

**अर्चावतारोऽपि च देशकालप्रकर्षहीनः श्रितसंमतश्च ।**
**सहिष्णुरप्राकृतदेहयुक्तः पूर्णोऽर्चकाधीनसमात्मकृत्यः ॥११॥**

**भगवन्तं श्रीरामं नैवेद्यं निवेद्य तदीयं प्रसादं भोक्तव्यमिति कथितं परन्तु कुत्रनैवेद्यादिकं निवेदनीयम्! ततोऽर्चावतारं दर्शयितुमुपक्रमते** 'अर्चावतारोऽपि च देशकाले' **त्यादि। देशकालप्रकर्षहीनः देशकालयोः प्रकर्षस्तयाहीनो रहितः अर्थात् यथा परव्यूहविभवान्तर्यामिण इत्येते भगवतो भिन्ना भेदाः कालदेशादिप्रकर्षरहिता यथा साकेते तथा तदन्यत्रापि यथा वा सत्ययुगे तथैव युगान्येऽपि किन्तु परव्यूहादिरूपे न कोऽपिभेदः प्रकर्षापकर्षकृतः तथैव सत्ययुगादिकालसाकेतादिदेशेऽर्चावतारस्यप्रकृष्टत्वं तदन्यत्रापकृष्टत्वमिति अधिकमहत्त्वमल्पमहत्त्व**

मिति न किन्तु सर्वदेशे सर्वकाले अर्चावतारस्य समानफलदातृत्वमेवेत्यतो देश कालप्रकर्षहीनोऽर्चावतारो भगवच्छ्रीरामविग्रहमूर्तिविशेष इति । तथा श्रित संमतः स्वाश्रितभक्तस्याभिमतः । सहिष्णुरर्चकभक्तस्य सर्वापराधसहनशील अप्राकृतदेहयुक्तः-लोकोत्तरविलक्षणादिदिव्यदेहकरणादिविशिष्टः, न तदीयकरणकलेवरादिकं प्रकृत्या सम्पादितमपितु स्वेच्छया धृतशरीरोविलक्षणदेहादिमानितिभावः । तथा सः पूर्णः सर्वव्यापकः गृहादिसर्वदेशेषु वर्तमानो मूर्तिविशेषोऽर्चावतारः 'पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते' इतिश्रुतेः सर्वदा पूर्ण एव सन्तिष्ठते । पुनश्च-'अर्चकाधीनसमात्मकृत्यः, अर्चकस्य पूजकस्याधीनं समं सर्वमात्मकार्यं स्नानपूजाभोजनादिकं यस्य तादृशः अर्थात् पूजकः स्नापयति तदैव स्नाति यदा भोजयति तदैव भुनक्ति न तु स्नानादिस्वकीयकार्ये आत्मनिर्भरः किन्तु अर्चकव्यापारपराधीनः एतादृशः प्रस्तरकांचनमणिनिर्मितमूर्तिविशेष एवार्चावतारः । इत्येवमर्चावतोऽतीवसुलभः परव्यूहविभवान्तर्यामिणस्तु न सुलभाः इतिसारः ॥११॥

पूर्व प्रकरण में कहा कि भगवान् श्रीरामजी को प्रशस्त अन्नादिक का समर्पण करके, उनका जो प्रसाद विशुद्ध भोज्य पदार्थ है उसका भोजन भक्त लोग करें तो इस प्रकार नैवेद्य समर्पण किस तरह किस जगह तथा किसको करें ? इस जिज्ञासा के उत्तर में आचार्यजी कहते हैं-'**अर्चावतारोपि च**' इत्यादि । भगवान् श्रीरामजी का जो अर्चावतार है वह जिस तरह परव्यूह विभवादिक देशकाल का प्रकर्ष हीन है उसी तरह अर्चावतार देशकाल भेद से अल्प अधिक महत्त्वशील नहीं है । अर्थात् श्रीसाकेतादि पवित्र प्रदेश में सत्ययुगादि काल में अर्चावतार का अधिक महत्त्व था ग्रामादिक प्रदेश में कलियुगादि काल में अल्प महत्त्व है ऐसा नहीं किन्तु भगवान् श्रीरामजी सर्वदेश सर्वकाल में समफलप्रद होते हैं यही अर्चावतार की विशेषता है । तथा भक्तों का अभिमत द्विभुज चतुर्भुज बालकादि भेद भिन्न होकर पूजित होते हैं । अर्थात् भक्त अर्चक का समस्त अपराधों का सहन करने का स्वभाववाले हैं । तथा परिपूर्ण सर्वत्र व्यापक हैं । अथवा समस्त सामर्थ्यादि धनधान्यादि परिपूर्ण हैं । तथा अर्चावतार भगवान् का सर्वस्नान भोजनादिक कार्य अर्चक भक्त के अधीन है । एतादृश विभूति को अर्चावतार कहते हैं ॥११॥



**स्वयं व्यक्तश्च दैवश्च सैद्धो मानुष एव च ।**
**देशादौ हि प्रशस्ते स वर्तमानश्चतुर्विधः ॥१२॥**

स अर्चावतारो भगवान् श्रीरामो वक्ष्यमाणभेदात् चतुर्विधश्चतुः प्रकारकः स्वयं व्यक्तो गिरिकन्दरादिषु दैवः देवतायास्थापितः, सैद्धः सिद्धेन केनचित्स्थापितो मनुष्यस्थापितः प्रशस्तदेशादौ साकेतमिथिलादिपुण्यभूमौ इत्येवं स चतुःप्रकारको भवतीति तदाहुर्जगद्गुरवः श्रीचिदानन्दाचार्याः प्रमेयोद्देशभास्करे-

'स्थापितो वैष्णवैर्मन्त्रैश्चतुर्धाऽर्चावतारकः ।
स्वयं व्यक्तश्च दैवश्च सैद्धश्च मानुषः खलु ॥' इति ।
'अर्चावतारः सर्वेषां बान्धवो भक्तवत्सलः ।
अर्चावताररूपेण दर्शनस्पर्शनादिभिः ॥
दीनानुद्धरते योऽसौ श्रीरामः शरणं मम ।
इति च जगद्गुरवः श्रीश्रियानन्दाचार्यचरणाः श्रौतप्रमेयचन्द्रिकायाम् ॥१२॥

वह भगवान् स्वयमेव व्यक्त-प्रादुर्भूत देव सिद्ध मनुष्यादि स्थापित भेद से प्रशस्त श्रीसाकेतादि पवित्र प्रदेश में वर्तमान चार प्रकार से विभक्त होकर के अवस्थित हैं ॥१२॥

**आवाहनासनाभ्यां च पाद्यार्घ्याचमनैस्तथा ।**
**स्नानवस्त्रोपवीतैश्च गन्धपुष्पसुधूपकैः ॥१३॥**
**दीपनैवेद्यताम्बूलप्रदक्षिणविसर्जनैः ।**
**षोडशार्चाप्रकारैस्तमेतैरर्चेत्सदा सुधीः ॥१४॥**

एवं यथोक्तक्रमेण सभेदमर्चावतारं प्रदश्र्य तत्पूजाप्रकारं दर्शयति द्वाभ्याम् 'आवाहने' त्यादि । आवाहन आसन पाद्य अर्घ्य आचमन स्नानवस्त्र यज्ञोपवितगन्धपुष्पधूपदीपनैवेद्यताम्बूलप्रदक्षिणाविसर्जनादिभिः षोडशोपचारपूजाप्रकारैः पुरुषसूक्तप्रदर्शिततत्तमन्त्रैः सर्वदा प्रतिदिनं सुधीर्मुमुक्षुर्भक्तो भगवन्तं सर्वेश्वरं श्रीरामं पूजयेत् आवाहनादीनां मन्त्राः पुरुषसूक्तप्रतिपादिताः पुराणप्रतिपादिताश्च

पूजाप्रकरणादेवज्ञातव्याः । तत्र द्विजातिर्यदिपूजको भवेत्तदा वैदिका मन्त्राः प्रयोक्तव्याः तदभावे पौराणिका एवेतिविवेकः ॥१३-१४॥

यथोक्त क्रम से सभेद अर्चावतार का कथन करके तदीय पूजा प्रकार को बतलाने के लिए आचार्यजी कहते हैं **'आवाहनेत्यादि'** भजनानन्दी महापुरुष प्रातः उठ करके शौचादि स्नानान्तप्रात्यहिक कर्मकर लेने के वाद संमार्जित पूजा स्थान में बैठ करके आवाहन आसन पाद्य अर्घ्य आचमन स्नान वस्त्र यज्ञसूत्र गन्ध पुष्प धूप दीप नैवेद्य ताम्बूल प्रदक्षिणा और विसर्जनान्तः षोडशोपचारविधि से समन्त्रक भगवान् श्रीरामजी का पूजन करें। यदि पूजक महापुरुष द्विज हों तब तो पुरुषसूक्त प्रतिपादित मन्त्रों से पूजन करें। द्विजेतर हों तब पुराणोक्त मन्त्र द्वारा पूजन करें। विशेष पूजा प्रकार में देखें ॥१३-१४॥

**जगत्पते ! श्रीश ! जगन्निवास ! प्रभो ! जगत्कारण ! रामचन्द्र !**
**नमो नमः कारुणिकाय तुभ्यं पादाब्जयुग्मे तव भक्तिरस्तु ॥१५॥**

प्रदर्शितः पूजाप्रकारस्तदनुसारेण दिव्यश्रीविग्रहप्रतिमादिस्थितं जगत्कारणं परमात्मानं प्रपूज्य तदनन्तरं स्वाभिलषितप्राप्तये भगवन्तं श्रीरामं प्रणमेदिति दर्शयितुमाह-'जगत्पतेश्रीश' इत्यादि। हे जगत्पते जगतोरक्षक ! श्रीश हे लक्ष्मी पते हे जगतां निवास जगदाधार हे प्रभो सर्वसमर्थ हे चराचरात्मजगतः परम कारणभगवन् श्रीरामचन्द्र साकेतनायक ! कारुणिकाय करुणा पारावाराय तुभ्यं नमो नमो नमस्कारो भवतु तथा ते चरणकमले सर्वदा भक्तिर्मे भवतु इति ॥१५॥

हे जगत्पति श्रीसीतानाथ हे जगन्निवास जगत्कारण भगवान् श्रीराम ! दया सागर आपके श्रीचरण में मेरा शतशः नमस्कार हो तथा आपके पदयुग्म में सदा मेरी भक्ति बनी रहे ॥१५॥

**मनोमिलिन्दस्तवपादपङ्कजे रमार्चिते संरमतां भवे भवे ।**
**यशः श्रुतौ ते मम कर्णयुग्मकं त्वद्भक्तसंगोऽस्तु सदा मम प्रभो ॥१६॥**

हे रामचन्द्र ! रमार्चिते रमया श्रीसीतारूपयाऽर्चिते प्रपूजिते तव पादपङ्कजे चरणकमले मनोमिलीन्दश्चित्तरूपोभ्रमरः भवे भवे प्रतिजन्मनि संरमतां तथा तव यशः कीर्तेः श्रवणाय सततमनवरतं मम कर्णयुग्मकं युगलं भवतु



तथा हे प्रभो त्वदीयभक्तैर्मम सर्वदा सङ्गो भवत्विति ॥१६॥

हे भगवन् श्रीरामचन्द्र ! मेरा अन्तःकरण रूप भ्रमर मधुपान कर्त्ता जन्तुविशेष सकल सौभाग्यवती श्रीसीताजी से समादृत आपके पद युगल में सर्वदा रमित होता रहे। तथा मेरे दोनों श्रवणेन्द्रिय आपके यश कीर्ति को सुनने में संलग्न रहे और आपके जो अनन्य भक्त हैं उनके साथ हमारा सत्संग होता रहे। अर्थात् मैं भक्तों के साथ ही वार्तालाप करता रहूँ ॥१६॥

**उरः शिरोदृष्टिमनोवचः पदद्वयप्राजत्करयुग्मजानुभिः ।**
**अङ्गैः क्षितौ तं प्रणमेदथाष्टभिर्दीर्घं तथैतैः कृतधीश्चदण्डवत् ॥१७॥**

अथ यथासाध्यं प्रार्थनाकरणानन्तरं कृतधीर्भगवन्तं श्रीसीतापतिं प्रणाम करणाय कृतनिश्चयोऽनन्यभक्तः क्षितौ पृथिव्यां परिष्कृतभूमौ उरः शिरो वचोङ्घ्रिद्वयं प्राजत्करयुग्मजानुभिः एतैरनुपदकथिताष्टसंख्याकैः तं भगवन्तं सर्वेश्वरश्रीरामं दीर्घं यथास्यात्तथा प्रणमेत् दण्डवत् प्रणामं कुर्यात् सम्प्रदाय मनुरुध्य सम्प्रदायप्रदर्शितक्रमेण भगवन्तं पूज्यं वा यं कमपिदण्डवत्प्रणाममापादयेत् नतु गृहस्थवत् प्रणमेदितिभावः ॥१७॥

भगवान् श्रीरामजी की प्रार्थना करने के वाद प्रणाम करने का प्रकार बतलाने के लिए आचार्यजी कहते हैं-'उरः शिरोदृष्टिमिति' भगवान् परम कारण परमात्मा श्रीरामजी को प्रणाम करने के लिए निश्चित बुद्धिवाले महापुरुष मन, वचन, दोनों पैर, दोनों जानु घुटना छाती शिर मस्तक नेत्रयुग तथा फैलांया हुआ दोनों बाँह हाथ इन आठों प्रकार के अङ्गों से पृथिवी में दण्ड की तरह लेटकर गिरकर भगवान् परमपुरुष श्रीरामजी को भक्त लोग प्रणाम करें ॥१७॥

**बाहू च पादौ च प्रसार्य साञ्जलिः स्तवैः स्तुवन् यश्च नमेद्रघूत्तमम् ।**
**शतैः क्रतूनां तु सुदुर्लभां गतिं स चाप्नुयाद्रामपरायणो जनः ॥१८॥**

इत्यानन्दभाष्यकार जगद्गुरुश्रीरामानन्दाचार्ययतिराजप्रणीते श्रीवैष्णवमताब्जभास्करे मुख्यधर्मात्मकश्रीवैष्णवधर्मनिरूपणात्मकः

पञ्चमप्रश्नोत्तराख्यः पञ्चमः परिच्छेदः ॥५॥

अथ दण्डवत् प्रणतिनिवेदनानन्तरं श्रीरामपरायणोऽनन्यभक्तोजनः साञ्जलिर्बद्धाञ्जलिः सन् स्तवैः श्रीरामप्रशंसापरकचतुर्वेदस्थितमन्त्रसमूहैः स्वपूर्वा

चार्यसम्पादितस्तोत्रमहिम्नादिवचनैर्भगवन्तं श्रीरामं स्तुवन् स्तुतिविषयतामापादयन्, बाहू च पादौ च प्रसार्य्य रघूत्तमम् भगवन्तं श्रीसीतानाथं नमेत् नमस्कारं कुर्यात् । एवं कृते सति क्रतूनामश्वमेधादिनां शतैरनेकप्रकारकैरपि सुदुर्लभा या गतिस्तादृशीं मोक्षगतिमाप्नुयात् । यथोक्तनमनशीलो हि मोक्षमवाप्नुयादिति भावः ॥१८॥

卐 इति प्रभाटीकायां पञ्चमपरिच्छेदः 卐

भगवान् श्रीरामजी के अनन्य भक्त अञ्जलि बन्धनपूर्वक वेद एवं पूर्वाचार्यकृत विलक्षण स्तोत्र समुदाय से भगवान् श्रीरामजी का स्तवन करते हाथ पैर को फैला करके दण्डवत् प्रणाम करें। ऐसा करने से हजारों यज्ञ करने से जो फल नहीं प्राप्त होता है तादृश फल को अर्थात् साकेत प्राप्तिरूप फल को प्रणाम कर्ता प्राप्त करता है ॥१८॥

## ⁂ अथ श्रीवैष्णवभेदनिरूपणम् ⁂

**अथोच्यते वैष्णवभेद ईप्सितो ज्ञातुं च ते विष्णुपरायणैर्जनैः ।**
**सुवेदनीयो बहुधा महामते ! सुनिश्चितो विज्ञवरैर्महर्षिभिः ॥१॥**

हे महामते ! महतो विशालामतिर्विद्यते यस्य तत्संबुद्धौ सुरसुरानन्द ! अथ अर्चावतारतत्पूजनप्रकारादिकथनानन्तरं विष्णुपरायणैः श्रीरामभक्तैर्जनैः पुरुषैर्ज्ञातुमभिलषितोऽतएव ते तव सम्यग् वेदितुं योग्यो वैष्णवभेदो बहुधा विज्ञवर महर्षिभिः सुनिश्चितो मयोच्यते तत् त्वं मत्तो विजानीहीति ॥१॥

अर्चावतार तथा तदीय पूजन और प्रणामादि प्रकार को बतलाने के बाद श्रीवैष्णव के भेद को बतलाने के लिए आचार्यजी कहते हैं 'अथोच्यते' इत्यादि ।

हे महामते सुरसुरानन्द ! अर्चावतार तत्पूजनादि प्रकार का कथन के वाद श्री रामभक्तजनों को अवश्य जानने के योग्य, सबका अवश्य ज्ञातव्य विद्वान् महर्षियों से सुनिश्चित किया हुआ श्रीवैष्णवों का भेद मैं तुमको कहता हूँ। तुम उसको बराबर समझो ॥१॥

**प्राप्तुं परां सिद्धमकिञ्चनो जनो द्विजातिरिच्छञ्छरणं हरिं व्रजेत् ।**
**परं दयालुं स्वगुणानपेक्षितक्रियाकलापादिकजातिबन्धनम् ॥२॥**



अकिञ्चनः एषणात्रयरहिततया दरिद्रो भगवद्भक्तोजनोद्विजातिर्ब्राह्मणप्रभृतिपरामुत्कृष्टां मोक्षात्मिकां सिद्धिमिच्छन् समिहमानः स्वगुणानपेक्षितक्रियाकलापादिकजातिभेदम् स्वगुणैर्वात्सल्यादिभिर्नापेक्षितः शरणागतव्यक्तिविषये क्रियाकलापादिकोजातिभेदश्च येन तादृशं हरिं शरणागतवत्सलं सर्वपापहारकं सर्वेश्वरश्रीरामं शरणं व्रजेत् अर्थात् बाह्योपायरहिततयासर्वथा सहायरहितोभक्तः मोक्षाय श्रीराममेवाश्रयेत् स च भक्तस्य जात्यादिभेदमनपेक्ष्यैवतमुद्धारयतीति तस्य स्वभावः, स्त्रियोवैश्यास्तथाशूद्रास्तेऽपि यान्ति परांगति, मित्युक्तेः' अन्यत्रापि कथितम्-'प्राप्तुमिच्छन् परांसिद्धिं जनस्सर्वोप्यकिञ्चनः । श्रद्धयापरयायुक्तो रामं शरणमाश्रयेत् ॥ न जातिभेदं न कुलं न लिङ्गं न गुणक्रियाः । न देशकालौ नावस्थां योगोह्ययमपेक्षते ॥' इत्यादिना लौकिकसाधननिराकरणादिति ज्ञेयम् ॥२॥

भगवान् श्रीरामजी से अतिरिक्त भगवान् श्रीरामजी के प्राप्ति का कारण लौकिक उपाय से रहित द्विजाति भक्तजन परम मोक्ष की प्राप्ति की इच्छा से स्वकीय वात्सल्यादि गुणों से ब्राह्मणत्वादि जाति तथा विद्यादिक गुणों की अपेक्षा नहीं रखनेवाले परमदयालु भगवान् श्रीरामजी के शरण में जावें। अर्थात् भगवत्शरणागति का स्वीकार करें ॥२॥

**जीवो द्विधाऽमन्यत बद्धमुक्तभेदेन पूर्वैस्तु महर्षिवर्यैः ।**
**बद्धोऽपि तत्र द्विविधो मुमुक्षु बुभुक्षुभेदाद् गदितो मतज्ञैः ॥३॥**

महर्षिवर्यैः प्राचीनमहापुरुषैर्बद्धमुक्तभेदेन जीवोद्विविधोद्विप्रकारकोऽमन्यत अर्थात् बद्धमुक्तभेदेनजीवराशिर्द्विधा विभक्तो भवति तत्रापि मतं विशिष्टाद्वैतमतविज्ञैः बद्धजीवोमुमुक्षुबुभुक्षुभेदात्पुनर्द्विविध इति कथ्यते ॥३॥

प्राचीन श्रीपराशरादि महर्षिगण कहते हैं कि बद्ध तथा मुक्त के भेद से जीव गण दो प्रकार में विभक्त होते हैं। तथा जो श्रीसम्प्रदाय को जाननेवाले हैं वे लोग कहते हैं कि बद्धजीव भी मोक्षाभिलाषी तथा भोगाभिलाषी भेद से पुनः दो प्रकार के होते हैं ॥३॥

**अनादिकर्मोत्करजातनानादेहाभिमानी सुमतोऽथ बद्धः ।**

**स चाच्युताहेतुकृपाबलेनाविद्याक्रियावासरुचिप्रवृत्तेः ॥४॥**
**विमोक्तुमिच्छुस्तु मुमुक्षुरुक्तसम्बन्धतः प्राज्ञसुसंमतोऽयम् ।**
**तथैव सांसारिकभोगमिच्छुर्बुभुक्षुरन्यः कथितो बुधेन्द्रैः ॥५॥**

बद्धमुक्तजीवभेदकथनानन्तरं संप्रति तयोर्लक्षणं दर्शयति द्वाभ्याम्, अथ भेदकथनान्तरं तयोर्लक्षणम् बुधेन्द्रैः विद्वद्भिः अनादिकालिकं सञ्चितं यदनेक प्रकारकं शुभाशुभकर्म तादृशकर्मबलेन प्राप्तजरायुजाण्डजस्वेदजस्थावरादिवि विधप्रकारकशरीरेषु, कृशोहं मम शरीरमित्येवं देहाभिमानीजीवोबद्ध इतिसुमतो महर्षिभिः तथा अच्युताहेतुकटाक्षतः अच्युतस्य भगवतोरामस्याकारणकृपाकटा क्षेणाप्रतिमकृपयाः अविद्याक्रियावासरुचिप्रवृत्तेः सकाशाद्विमोक्तुमिच्छुरयं जीवः प्राज्ञसुसम्मतो मुमुक्षुरितिकथितः । यश्चजीवः तथा सांसारिकभोगमेवेच्छ ति स विद्वद्भिर्बुभुक्षुरितिकथ्यते । अर्थात् यः संसारं त्यक्तुमिच्छति स मुमुक्षुर्यश्च संसारत्यागं नेच्छति किन्तु सांसारिकभोगानेवाभिवाञ्छति तमेवाधिकं मन्यते स बुभुक्षुरिति तयोरनुगतं लक्षणम् । विशेषविचारस्तु स्थलान्तरे द्रष्टव्य इति दिक् ॥४।५॥

अब बद्ध तथा मुक्त जीव का लक्षण अनुक्रम से दो श्लोकों से बतलाते हैं। अनादि कालिक सञ्चित जो शुभाशुभ कर्म समुदाय उसके बल से जायमान अण्डज जरायुग उष्मज तथा स्थावरादि भेदभिन्न अनेक प्रकारक शरीर के अभिमानी जीव राशि को विद्वान् लोगों ने बद्ध जीव कहा है । ये बद्ध जीव यदि भगवान् श्रीरामजी के अहेतुक स्वाभाविक कृपा से अविद्या जनित संसार प्रापक कर्मसमुदाय तथा तदनु गुणवासना में आसक्तिपूर्वक तत्परता के सम्बन्ध से छुटकारा पाने की इच्छा करते हैं तो तादृश जीव को मुमुक्षु कहा गया है । और उसी तरह अविद्या को बढाने वाला जो सकाम कर्म तथा तदनुकूल वासना में आसक्तिपूर्वक प्रवृत्ति तत्परता के सम्बन्ध से सांसारिक भोग की ही इच्छा करनेवाले जीवराशि हैं उन्हें पण्डितलोक बुभुक्षु कहते हैं । यह मुमुक्षु बुभुक्षु का सामान्य लक्षण है ॥४-५॥

**मुमुक्षवोऽपि द्विविधा महर्षिभिः प्रोक्ता अकामाः स्मृतिभक्तिशालिनः ।**
**वेदोक्तवर्णाश्रमकर्मकारिणस्तूपासकादिप्रतिभेदभेदिताः ॥६॥**



यश्च मुमुक्षुः सोपि द्विप्रकारक इति दर्शयितुमाह-'मुमुक्षवोपि' इत्यादि । महर्षिभिः मुमुक्षवोऽपि द्विप्रकारका भवन्ति इति प्रोक्ता ज्ञानाद्यसाधनाश्चेतनान्त रसाधनाश्च । तत्र प्रथमस्य लक्षणमाह अकामाः ज्ञानयोगकर्मयोगभक्तियोगानां परमात्मप्राप्तिसाधनतया ग्रहणे कामनारहिताः । तथा ये स्मृतिभक्तिशालिनः । तैलधारेवाविच्छिन्नस्मरणधारात्मकभक्तिविषये निष्ठाशालिनः । तथा वेदोक्तवर्णा श्रमक्रियासम्पादकाः तस्य च 'एवं स्ववर्णाश्रमोचितनित्यनैमित्तिककर्माङ्गकम् (ईशावास्योपनिषदानन्दभाष्यम् १५) यो यथावद् गुरूपदेशलब्धविद्यः विद्यां ब्रह्मोपासनात्मिकाम् अविद्याञ्च ब्रह्मोपासनाङ्गभूतां वर्णाश्रमोचितनित्यनैमित्तिक कर्मरूपां सह (ई.आ.भा.११) 'सा च भक्तिः परमप्रेयो भगवदितरवैतृष्ण्यपूर्वक परमपुरुषानुरागरूपो ज्ञानविशेष एव । तदुद्भवश्च संसारस्यानित्यतामाकलय्या चार्योपसत्तिपुरसरवर्णाश्रमाचारसेवनजनितपुण्यक्षालितकषायस्य विवेकवै- राग्याभ्यासादिभिरेवेति सर्वमवदातम् (ब्रह्मसूत्रानन्दभाष्यम् १।१।१) 'अतो विद्योत्पत्त्यर्थमहरहरय्यग्निहोत्रादिकर्मानुष्ठेयमन्यथा वर्णाश्रमधर्मलोपे कल्मषमान सस्य विद्योत्पत्तिरेव नस्यादतो विद्यार्थत्वेन तदनुष्ठानमावश्यकम् (ब्रह्मसूत्रानन्द भाष्य ४,१,१६) यज्ञोदानं तपश्चैव वर्णाश्रमोचितानि यज्ञादीनि कर्माणि (गीता नन्दभाष्य १८-५) 'ब्रह्मविद्योपचापकस्य वर्णाश्रमनियतस्य नित्यकर्मणः' (गीतानन्द १८।७) 'नियतं वर्णाश्रमाचारतया विहितं सङ्गरहितं (गीतानन्द भाष्य १८।२३) 'स्वे स्वे कर्मणि स्वकीयवर्णाश्रमोचिताचारैरभिरतोमदाज्ञारूप शास्त्रं बहुमानयन् प्रवृत्तोनरः संसिद्धिं परमगतिं लभते स्वकर्मनिरतः स्वकीय वर्णाश्रमोचिताचारचतुरः' (गीतानन्दभाष्य १८।४५) 'स्वकर्मणा स्ववर्णाश्र मोचितधर्मेणाभ्यर्च्य' (गीतानन्दभाष्यम् १८।४६) वर्णाश्रमधर्मतयावश्यानुष्ठेयं कर्मयोगंतत्साध्यं ज्ञानयोगं ततोप्यन्तरंगभूतं कर्मज्ञानाभ्याम् साध्यं भक्तियोगम्' (गीतानन्दभाष्यम् १८।६३) 'यदा हि मुक्तिसाधनस्य वेदविहितस्य वर्णाश्रमो चितारम्भलक्षणस्य' (गीतानन्दभाष्यम् ४,७) इत्यादिरूपेण वर्णाश्रमकर्मका रिणः श्रीरामसायुज्यपरकाजीवा इत्याहुराचार्याः । अर्थात् भगवतः परमात्मन आज्ञया लोकसंग्रहाय वा वेदादिकथितयोगादिकर्मकर्तारो ज्ञानाद्यसाधनाः कथि ता । तेऽपि उपासकादिप्रतिभेदभेदिता अत एव उपासकाः शुद्धाश्चेति द्विविधा

भवन्ति ॥६॥

मुमुक्षु भी दो प्रकार के होते हैं ऐसा प्राचीन ऋषियों ने कहा है। एक तो ज्ञानाद्यसाधन तथा द्वितीय वह है जो चेतनान्तर साधन। इनमें ज्ञानाद्यसाधन का लक्षण यह है कि जो भगवत् श्रीराम प्राप्ति का साधन मानकर ज्ञानयोग कर्मयोग भक्तियोग का ग्रहण करने में कामना रहित होकर भगवान् श्रीरामजी की आज्ञा से अथवा लोक संग्रह के लिए वेदस्मृति प्रतिपादित वर्णाश्रम कर्म का सम्पादन करते हुए तैलधारा की तरह अविच्छिन्न स्मृति प्रवाहरूप भक्ति में निष्ठावाले को ज्ञानाद्य साधन कहते हैं। यह भी दो प्रकार का होता है। उपासक और शुद्ध भक्त इन सबका लक्षण तथा उदाहरण आगे बतलाया जायगा ॥६॥

**स्वकर्मविज्ञानसभक्तिसाधनं तथोररीकृत्य सुविज्ञ ! कञ्चन।**
**संप्राप्य सम्बन्धविशेषमुत्तमं सदा भवन्त्येव च मोक्षनिश्चयाः ॥७॥**

**अथाकामान् मुमुक्षुन् लक्षयित्वा ततश्चेतनान्तरसाधनान् मुमुक्षुनुपलक्षयितुमुपक्रमते** स्वकर्मविज्ञानेत्यादि। हे सुविज्ञ सुरसुरानन्द ! **स्वकर्मविज्ञानसुभक्तिसाधनम् तत्र स्वकर्मवर्णाश्रमविहितं कर्मविज्ञानं ज्ञानयोगमुपासनं च भक्तिसहितं परमात्मप्राप्तेः प्रधानं साधनमुररीकृत्य गुरुशास्त्रादिद्वारा अङ्गीकृत्य तथा उत्तमम् नवप्रकारकसम्बन्धेषु श्रेष्ठं कञ्चनं कमपि सम्बन्धविशेषं संप्राप्य सदा सर्वदैव मोक्षनिश्चया भवन्ति अर्थात् सायुज्यरूपसंसारनिवृत्तिलक्षणो मोक्षो मेऽवश्यमेवस्यादेवेति निश्चयवन्तोभवन्त्येव। एतादृशाश्चेतनान्तरसाधना मुमुक्षव इति ॥७॥**

अकाम मुमुक्षु का लक्षण बतला करके चेतनान्तर साधन मुमुक्षु का लक्षण को बतलाते हैं-'**स्वकर्म विज्ञान सभक्तीत्यादि**' हे सुविज्ञ ! सुरसुरानन्द ! जो चेतनान्तर साधन मुमुक्षुलोग हैं वे सव ज्ञानयोग तथा भक्तियोग को ही भगवान् श्रीरामजी के प्राप्ति में प्रधान-मुख्य साधन कारण मान करके तथा नौ प्रकार का जो सम्बन्ध हैं-उनमें अन्यतम सम्बन्ध को अर्थात् जिस किसी अभिमत सम्बन्ध को गुरुशास्त्र द्वारा प्राप्त करके अपने को सर्वदा सायुज्य अर्थात् संसार निवृत्तिपूर्वक नित्य निरतिशय सुख प्राप्ति रूप मोक्ष का अधिकारी मानते हैं। अर्थात् हमको सायुज्य लक्षण मोक्ष अवश्यमेव प्राप्त होगा ऐसा निश्चयवाले होते हैं ॥७॥



**विहाय चान्यत्परमं दयानिधिं प्राप्यं समर्थं निरपायमीश्वरम्।**
**उपायमेतेऽध्यवसीय सुस्थिता ज्ञेयाः प्रपन्नाः सततं हरिप्रियाः ॥८॥**

**ये पुरुषा अन्यत् कर्मयोगज्ञानयोगभक्तियोगलक्षणमव्यवहितश्लोकोक्तमुपायान्तरं विहाय परित्यज्य प्राप्यं मोक्षसमये प्राप्तुं योग्यं समर्थं सर्वसामर्थ्ययुक्तम् स्वाभाविकीज्ञानबलक्रियाचेति वचनात्ते परमं सर्वापेक्षया श्रेष्ठतमं दयानिधिं स्वभावत एव परदुःखविभञ्जकमीश्वरं सर्वैश्वर्यसम्पन्नं सर्वनियन्तारं भगवन्तं श्रीरामचन्द्रम् निरपायं स्वरूपतो गुणतश्च विनाशरहितं नित्यमित्यर्थः। उपायं संसारमहोदधेरुत्तरणसाधनमित्यध्यवसीय अर्थात् सुनिश्चित्य सुस्थिताः सुखेनोपविष्टाः सन्ति ते एतादृशा अधिकारिणो हरिप्रियाः हरिः श्रीरामः प्रियं येषां ते यथा भूताः महात्मानः प्रपन्ना मुमुक्षुव इति ज्ञातव्यः ॥८॥**

हे सुरसुरानन्द ! जो व्यक्ति कर्म ज्ञान और भक्ति योग को छोडकर सर्वप्राप्य सर्वशक्तिमान् सर्वेश्वर नाश रहित परमकारुणिक ईश्वर श्रीरामजी उपाय अर्थात् संसार से निकलने का कारण समझकर शान्तचित्त होकर के बैठे हैं उनको भगवत् प्रिय प्रपन्न महात्मा समझो ॥८॥

**पुरुषकारैकनिष्ठास्तु हरिस्वातन्त्र्यमैक्ष्य च।**
**कृपाप्रचुरमाचार्यं मत्त्वोपायमवस्थिताः ॥९॥**

**ये खलु पुरुषकारैकनिष्ठा अर्थात् पुरुषकारे एव निष्ठा येषां विद्यते ते तथाविधा भक्ता हरिस्वातन्त्र्यम् हरेर्भगवतो श्रीरामस्य सर्वथा स्वातन्त्र्यम् ऐक्ष्य आलोच्य तदालोचनं कृत्वा क्षत्रबन्धुप्रभृतिवत् कृपाप्रचुरम् कृपाबहुलमाचार्यम् एव संसारोत्तरणोपायं मत्वा विज्ञाय अवस्थिता अर्थात् मदीयं पारलौकिककर्मसाध्यं भगवत्प्राप्तिरूपफलमपि गुरुकृपयैव भविष्यतीति समवधार्य गुरावेवनिष्ठावन्तोभूत्वा चिन्तारहितास्तिष्ठन्तीति ज्ञातव्यम् ॥९॥**

पुरुषकार अर्थात् पुरुष प्रयत्न में विश्वास रखनेवाले व्यक्ति भगवान् की स्वतन्त्रता का अनुभव करके परमकृपालु आचार्य को परम्परया मोक्ष का उपाय मान करके निश्चित हो जाते हैं। अर्थात् गुरु प्रदर्शित मार्ग का ही अवलम्बन करते हैं ॥९॥

**द्विविधास्ते निजाचार्यकृपामात्रप्रपन्नकाः।**

**तथा सेवातिरेकप्रपन्नाश्चेति सदा सताम् ॥१०॥**

ते पुरुषकारैकनिष्ठाश्च सदासर्वकाले स्वकीयाचार्यकृपामात्रप्रपन्नाः तथा सतां महात्मनाम् सेवातिरेकप्रपन्नाश्चेतिभेदात् द्विप्रकारका भवन्तीति सतां व्यासा दीनां महापुरुषाणामभिमतम् । अर्थात् पुरुषप्रकारविशिष्टाद्विविधाः, आचार्य कृपामात्रप्रपन्नाः तथा महात्मनां सेवातिरेकप्रपन्नाश्चेत्येवं क्रमेण द्विप्रकारका इति ज्ञेयम् ॥१०॥

जो केवल पुरुषाकार मात्र में विश्वास रखनेवाले हैं वे भी दो प्रकार के हैं एक तो आचार्य कृपा मात्र प्रपन्न और द्वितीय सत्पुरुष सेवातिरेक प्रपन्न इस तरह ये दोनों प्रकार का भेद प्राचीनाचार्य परम्परावालों का अभिमत है ॥१०॥

**प्रपन्नश्चापि दृप्तः स तथा चार्त इति द्विधा ।**
**शरीरस्थितिपर्यन्तमाद्योऽत्रैव यथोचितम् ॥११॥**
**प्राप्तदुःखादिभुञ्जानः शरीरान्तेऽवसीय च ।**
**महाबोधोऽतिविश्वासो मोक्षसिद्धिमवस्थितः ॥१२॥**

यश्च प्रपन्नोभक्तः सोऽपि दृप्तस्तथा आर्तभेदात् द्विप्रकारक इति ज्ञातव्यः । अत्र दृप्तार्तयोः प्रपन्नयोर्मध्ये आद्यः प्रथमो दृप्तनामकः शरीरस्थितिपर्यन्तम् यावद् देहधारणं करोति तावत्कालम् यथोचितं स्वकृतकर्मबलेन प्राप्तदुःखादिकफलम् भुञ्जानस्तस्य भोगंकुर्वन् महाबोधः परमात्मज्ञानवानेव शरीरान्ते शरीरनाशे मोक्ष सिद्धिमवसीय विनिश्चित्य महाबोधः अतिशयितज्ञानवान् अतिविश्वासः अतिश यितविश्वासवान् भवन्नेवावस्थितो भवतीतिभावः ॥११-१२॥

जो प्रपन्न भक्त हैं वे भी दो प्रकार के हैं। एक तो दृप्त और द्वितीय आर्त। इन दोनों प्रपन्नों के मध्य में जो दृप्त है वह परमज्ञानवान् जहाँ तक शरीरधारण करता है, तावत्कालपर्यन्त भाग्योपनत सुखदुःखादि फल का भोग करते हुए शरीर का विनाश हो जाने के वाद सायुज्य मोक्ष की सिद्धि में निश्चयपूर्वक अतिविश्वास करते हुए अवस्थित रहता है ॥११-१२॥

**अथान्त्योऽसहमानस्तत्क्षणमेव तु संसृतिम् ।**



**तथैव भगवत् प्राप्तौ सत्वरस्वान्त उच्यते ॥१३॥**

दृप्तप्रपन्नस्य स्वरूपमभिधाय आर्तप्रपन्नस्वरूपं दर्शयितुमुपक्रमते 'अथा न्त्योऽसहमान' इत्यादि । अथ दृप्तप्रपन्नस्य वर्णनानन्तरम् अर्थात् प्रपन्नभक्तस्य द्वैविध्यकथनानन्तरम् संसृतिं सांसारिकदुःखादिकमसहमानः सोढुमसमर्थः तत्क्ष णमेव भगवतो रामस्य प्राप्तये-'सत्वरस्वान्तः' त्वरया सहितं मनोयस्य स सत्व रस्वान्तो भक्तोऽन्त्यः प्रपन्नः आर्तप्रपन्न इत्युच्यते कथ्यते पूर्वजैः । अर्थात् सांसारि कदुःखमहसमानो भगवत्प्राप्तौ सत्वरश्च प्रपन्न आर्तः द्वितीयप्रकारकः प्रपन्न, अर्थादार्तप्रपन्न इतिकथितो भवतीतिभावः ॥१३॥

दृप्त प्रपन्न का स्वरूप निरूपण करके आर्त प्रपन्न का लक्षण बतलाते हैं '**अथा न्योऽसहमानः**' इत्यादि। अथ दृप्त स्वरूप निर्वचन के वाद, जो व्यक्ति सांसारिक दुःखादि बन्धन क्षणभर भी सहन करने में असमर्थ है। तथा भगवान् की प्राप्ति में अत्यन्त शीघ्रता करनेवाले भक्त हैं। एतादृश व्यक्ति को महापुरुषों ने आर्त प्रपन्न कहा है ॥१३॥

**श्रवणादिमात्रनिष्ठाः शुद्धभक्ताः प्रकीर्तिताः ।**
**अन्तर्भाव्यास्तत्र तत्र तथाऽनुक्ता मुमुक्षवः ॥१४॥**

ये भक्ता भगवतोयशः श्रवणादिमात्रे निष्ठावन्तस्तेशुद्धभक्ताः प्रकीर्तिताः अर्थात् ये भगवतो रामस्य कीर्तिनां श्रवणादिमात्रनिष्ठाः 'श्रवणंकीर्तनं विष्णोः स्मरणं पादसेवनम् । अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्' इत्येतेष्वेव भक्ति विशेषेष्वन्यतमप्रकारे एव निष्ठाशालिनस्ते शुद्धा भक्ताः कथितामहर्षिभिः । ये च मुमुक्षवो मुमुक्षुभेदा अत्रनोक्ताः किन्तु स्थलान्तरे प्रदर्शितास्ते तत्र तत्रान्तर्भाव्या स्तेषामप्यन्तर्भाव एष्वन्यतम एव कर्तव्य इति सारः ॥१४॥

जो व्यक्ति परब्रह्म श्रीरामजी के सुयश का सर्वदा श्रवण, स्मरण, कीर्तन, पाद सेवन, अर्चन, वन्दन, दास्य और आत्मनिवेदनादि अन्यतम भक्ति में ही निष्ठावान् अर्थात् श्रद्धाशील हैं उनको प्राचीन महर्षियों ने शुद्ध भक्त कहा है। इन पूर्वोक्त मुमुक्षुओं के लक्षणों में ग्रन्थान्तर में कथित मुमुक्षुओं के जिन अन्य भेदों को नहीं कहा गया है उसको भी पूर्व कथित इन लक्षण में ही अन्तर्भाव होता है ऐसा

समझना ॥१४॥

**नित्यकादाचित्कभेदान्मुक्तद्वैविध्यमुच्यते ।**
**नित्याः कदाचित्तत्रापि सिद्धाः सुपुरुषा वराः ॥१५॥**
**गर्भजन्मादिदुःखं येऽननुभूय स्थिताः सदा ।**
**सीतारामप्रियाः शश्वदाञ्जनेयादयो मताः ॥१६॥**

मुक्तजीवानामपिभेदं दर्शयति-'नित्यकादाचि' दित्यादि । मुक्ता अपि द्विविधा भवन्ति नित्याः कादाचित्काश्च । अर्थात् नित्यकादाचित्कभेदान्मुक्ता अपि द्विप्रकारका भवन्ति । तत्रापि नित्यकादाचित्केषु मुक्तेषु मध्ये ये महानुभावाः कदाचिदपि गर्भजन्मादिदुःखमननुभूयैवस्थिताः, अर्थात् ये जीवा गर्भादिदुःखमननुभूत्वैवस्थितिमकुर्वन् ते नित्या अर्थात् नित्यमुक्तजीवा इति कथ्यन्ते । तस्मात्ते सदा सर्वदा सिद्धाः । अर्थात् स्वस्मिन् अन्तर्यामिरूपेणस्थितं श्रीराममनुभूतवन्तः । ते शश्वत् श्रीसीतारामप्रियाः तत एव च सुपुरुषा वराः श्रेष्ठाश्चेति । यथा आञ्जनेयादिका महानुभावाः । एते नित्यमुक्ता इति कथिताः ॥१५-१६॥

जो मुक्त जीव हैं वे नित्यमुक्त तथा कादाचित्क मुक्त इस तरह उनका दो भेद होता है । उसमें जो व्यक्ति कभी भी कालत्रय में भी गर्भवास दुःख का अर्थात् जन्म मरणादि दुःखों का अनुभव नहीं किये हों एतादृश विलक्षण पुण्यशाली पुरुषों को नित्यमुक्त कहते हैं । अतः सर्वदा प्राकृतिक बन्धन विमुक्त स्वकीय जीव स्वरूप में अन्तर्यामी के रूपसे सर्वदा अवस्थित भगवान् श्रीसीतारामजी का अनुभव करते हैं। अतएव भगवान् श्रीरामजी के प्रियभक्त जीवों में भी वे सर्वश्रेष्ठ गिने जाते हैं । यथा भगवान् के परमप्रिय श्रीआञ्जनेयादिक माने गये हैं ॥१५-१६॥

**नित्यमुक्ता अपि द्वेधा परिजनाः परिच्छदाः ।**
**मारुताद्याः किरीटाद्याः क्रमात्ते च प्रकीर्तिताः ॥१७॥**

ये च नित्यमुक्तजीवास्तेऽपि पुनः परिजनपरिच्छदभेदेन द्वेधा द्विप्रकारका भवन्तीति ज्ञातव्याः । ते च क्रमात् मारुत्यादिकाः परिजना किरीटादिकाः परिच्छदाः प्रकीर्तिताः ये च समीपे वसन्ननेकविधसेवादिकं कुर्वन्ति ते परिजना (हजूरिया) इतिलोकप्रसिद्धाः यथा श्रीआञ्जनेयादिका इति ज्ञेयम् ॥१७॥



जो नित्यमुक्त जीव हैं वे भी दो प्रकार के होते हैं । परिजन तथा परिच्छद के भेद से । इसमें श्रीहनुमानजी तथा किरीटादिकों का समावेश होता है । अर्थात् किरीट मुकुट वगैरह आभूषणों की तथा पहनानेवाले और सुरक्षित रखनेवाले को परिच्छद करते हैं । तथा समीपस्थ होकर के बात चीत तथान्य सेवा करनेवाले हजूरिया को परिजन कहते हैं । जैसे श्रीहनुमानजी वगैरह ॥१७॥

**भागवताः केवलाश्च कादाचित्का अपि द्विधा ।**
**तत्र भागवताबोध्या ये तेषु भगवत्पराः ॥१८॥**

तत्र कादाचित्कामुक्ता अपि भागवताः केवलाश्चेति भेदात् द्विधा द्विप्रकारका भवन्ति । तेषु तदुभययोर्मध्ये ये भगवत्पराः ते भागवताः अर्थात् भगवति श्रीसीताराममात्रेनिष्ठा विद्यते येषां तादृशमुक्ता भागवता इति कथ्यन्ते प्राचीनमहापुरुषैरिति ॥१८॥

जो कादाचित्क मुक्त हैं वे भी भागवत तथा केवल इस भेद से दो प्रकार के होते हैं । उसमें जो मात्र भगवान् परमकारण श्रीसीतारामजी में ही निष्ठावान् होकर श्रीरामजी का ही सेवन करते हैं वे भागवत हैं, ऐसा जानो ॥१८॥

**भगवद्भोग्यभूत्यादिसाक्षात्कारसुखाश्रयाः ।**
**श्रीराममानसा नित्यं तदनुध्यानतत्पराः ॥१९॥**
**केचिद्गुणानुसन्धानपराः कैङ्कर्यतत्पराः ।**
**इत्थं महर्षिभिः प्रोक्ता द्विविधा भगवत्पराः ॥२०॥**

तत्र ये भागवतास्तेषामपिद्वैविध्यं दर्शयति 'भगवद्भोग्यभूत्यादीत्यादि हे सुरसुरानन्द ! केचित् केचनभागवता-'भगवद्भोग्यभूत्यादिसाक्षात्कारसुखाश्रयाः' भगवता परमपुरुषेण श्रीरामेण भोग्या भोक्तुं योग्या ये भूत्यादय ऐश्वर्यादयो विविधसम्पत्तयः, तासां साक्षात्कारेण जायमानानि सुखानि तेषामाश्रयभूताः श्रीराममानसाः अर्थात् परमकारणे श्रीरामे दत्तचित्ताः सन्तः नित्यं तदनुध्यानतत्पराः सर्वदा भगवतोध्याने व्यासमनसः सन्तः, भगवतः श्रीरामस्य कैङ्कर्ये दास्ये तत्पराः संलग्ना भवन्ति, केचित्तु गुणानुसन्धानपराः श्रीरामस्य दयाकारुण्याद्यनन्तगुणचिन्तनानुरक्ता इति । इत्थं पूर्वकथितप्रकारेण द्विप्रकारका

भगवत्पराः भागवता भवन्तीति महर्षिभिः पूर्वाचार्यैः श्रीबोधायनगङ्गाधराचार्य प्रभृतिभिः प्रोक्ता समुपदिष्टाः इति जानीहि ॥१९-२०॥

हे सुरसुरानन्द ! भागवत भी दो प्रकार के होते हैं । इन भगवत्परायण भागवतों में एक तो वे हैं जो कि सम्पूर्ण चराचर जगत् के नायक भगवान् श्रीरामजी के सकल विभूति सम्पत्तियों के साक्षात्कार होने से जायमान जो सुख विशेष तादृश सुख से सुखी होते हुए भगवान् श्रीरामजी में दत्तचित्त तथा सदा भगवान् श्रीरामजी के ध्यान में संलग्न हों । और द्वितीय भागवत वे हैं जो परमब्रह्म परमात्मा श्रीरामजी के गुणों का अनुसन्धान एवं कायिक, वाचिक, मानसिक सेवा में तत्पर रहते हैं । इसप्रकार पूर्वाचार्य महर्षियों ने कहा है ॥१९-२०॥

**द्विविधा केवला बोध्या दुःखभावैकतत्पराः ।**
**आत्मानुभूतिपरमा इति चोक्ता महर्षिभिः ॥२१॥**

इत्यानन्दभाष्यकारजगद्गुरुश्रीरामानन्दाचार्ययतिराजप्रणीते श्रीवैष्णवमताब्जभास्करे श्रीवैष्णवभेदनिरूपणात्मकषष्ठप्रश्नोत्तराख्यः षष्ठः परिच्छेदः ॥६॥

केवलानां मुक्तानामपि द्वैविध्यं दर्शयति-'द्विविधा' इत्यादि । हे सुरसुरानन्द ! दुःखभावेषु तत्पराः अर्थात् सुखेसुखोपाये च दुःखभावनामेव कुर्वन्तः तथा-'आत्मानुभूतिपरमा' स्वकीयात्मभावनायामेव सर्वदा परायणाः एतादृश भेदात् महर्षिभिः केवला अपि द्विप्रकारका भवन्तीति कथिता इति त्वयाऽपि तथैव ज्ञातव्या इति भावः ॥२१॥

हे सुरसुरानन्द ! पूर्वाचार्य श्रीव्यासादि महर्षियों ने केवल मुक्त को भी दो प्रकार का बतलाया है । एक तो वे जो सुख तथा सुखोपाय में भी दुःख की ही भावना करनेवाले हैं अर्थात् आत्म व्यतिरिक्त सभी पदार्थ को दुःखरूप ही समझने की भावना में लगे रहते हैं । और दूसरे वे हैं जो सर्वदा स्वानुभूति में ही संलग्न रहते हैं । अन्य पदार्थ का चिन्तन नहीं करते हैं ॥२१॥

卐 अथ श्रीवैष्णवलक्षणनिरूपणम् 卐

**समुच्यते सम्प्रति लक्षणं सन् महात्मनां सद्गुणवैष्णवानाम् ।**
**विरिञ्चिशंभुश्रितरामचन्द्रपदारविन्दस्थितचेतसां हि ॥१॥**



इतः पूर्वं सविस्तरं श्रीवैष्णवभेदं प्रदर्श्य सम्प्रति तदीयं लक्षणं वक्तुमुपक्रमते 'समुच्यते सम्प्रति' इत्यादि । हे सुरसुरानन्द श्रीवैष्णवभेदनिरूपणानन्तरं- 'विरिञ्चिशंभुश्रितरामचन्द्रपदारविन्दस्थितचेतसाम्' चतुर्मुखशिवाभ्यां श्रिते संसेविते श्रीरामचन्द्रपदारविन्दे तदीयचरणकमले स्थितं चेतोमनोयेषाम् तथा सद्गुणवैष्णवानां समीचीनगुणवतां महात्मनां महापुरुषाणां श्रीवैष्णवानां प्रशस्तमव्याप्ति, अतिव्याप्त्यसंभवदोषरहितं लक्षणं सत् चिह्नं सम्प्रति मयोच्यते त्वं तदवधारयेति ॥१॥

हे सुरसुरानन्द ! ब्रह्मा महादेव तथा शेष प्रभृतिक महानुभावों से सर्वदा सेवित जो भगवत् श्रीरामचन्द्रजी के चरणकमल उसमें संलग्न है मन जिनका ऐसे सद्गुणों से विशिष्ट श्रीवैष्णव महात्माओं का चारुलक्षण-प्रशस्त लक्षण बतलाता हूँ । अर्थात् जो अव्याप्ति अतिव्याप्ति तथा असम्भव रूप जो तीन दोष लक्षण के हैं उन दोषों से रहित अतएव मनोज्ञ लक्षण बतलाता हूँ तुम इस लक्षण को जानो ॥१॥

**धृतोर्ध्वपुण्ड्रस्तुलसीसमुद्भवां दधच्च कण्ठे शुभमालिकां जनः ।**
**तज्जन्मकर्माणि हरेरुदाहरेद् गृह्णंश्चनामानि शुभप्रदानि सः ॥२॥**

श्रीवैष्णवोधृतोर्ध्वपुण्ड्रः, धृताधारिताद्वादशस्थानेषु ऊर्ध्वपुण्ड्रा येन तादृशः तुलसीकाष्ठनिर्मितां कण्ठे कण्ठदेशे शुभमालिकां पवित्रमालां कण्ठीपदवाच्याञ्च दधत् धारयन् जनः । तदुक्तं 'अष्टोत्तरशतेनैव तुलसीकाष्ठसंभवाम्, कण्ठादिनाभिपर्यन्तं धारयेद्वैष्णवोत्तमः' इति । तस्य भगवतो रामस्य शुभं मोक्षप्रदं श्रीरामेत्यादि नाम गृह्णन् समुच्चारयन् तथा हरे सर्वपापहारकसर्वेश्वर श्रीरामचन्दस्य जन्मकर्मसम्बन्धिनीं कथां उदाहरेत् । यः सः श्रीवैष्णव इति ज्ञेयम् ॥२॥

मस्तक प्रभृतिक द्वादश अङ्गों में सम्प्रदाय सिद्ध श्री रक्त श्री शुक्ल श्री विन्दु श्री गुप्त श्री प्रभृति तिलक करें तथा कण्ठी अर्थात् तुलसी काष्ठनिर्मित माला का धारण करना भगवान् श्रीरामजी के जन्मादि सम्बन्धी कथाओं का कथन करना । एवं मोक्ष को देनेवाला जो भगवान् श्रीरामजी का शुभ श्रीरामनाम है उसका निरन्तर उच्चारण करना अर्थात् श्रीरामनाम का जप सतत करना । ये ही ऊर्ध्वपुण्ड्र तिलक विगेरे श्रीवैष्णवों का विशेष लक्षण है ऐसा शास्त्र का मत है श्रीवैष्णव तिलकमीमांसा में

तिलक विषयक विशिष्ट विवेचन किया हूँ अतः विशेषार्थी वहीं देखें ॥२॥

**सीतापतेः संश्रृणुयान्निरन्तरं कथां च गायेत्सुयशोऽङ्कितां मुहुः ।**
**रूपं तदीयं च चराचरात्मकं पश्यन् सतां सङ्गमुदारधीश्चरेत् ॥३॥**

श्रीसीतापतेर्दशरथतनयस्य सुयशोऽङ्किताम् शोभनैर्यशोभिरङ्कितां संयुक्तां कथां कीर्तिसंवलितां पुण्यकथां मुहुर्मुहुर्वारंवारं संश्रृणुयात् तत्कथाश्रवणं सर्वदा कुर्यात् । तथा भागवतीयां कथां स्वयमपि गायेत् अन्यान् श्रावयेत् अन्येभ्यः श्रृणुयाद्वा । तथोदारधीः उदारा धीर्बुद्धिर्यस्य तादृशो भक्तः चराचरात्मकं सकल स्थावरजङ्गमात्मकं तदीयं भगवत्सम्बन्धिरूपं तदीयं श्रीविग्रहं पश्यन्, अर्थात्स मस्तं जगत् भगवदात्मकं पश्येत् पश्यन् च तदीयरूपं तद्भक्तेन सह सङ्गमं सत्सङ्गतिं कुर्वंश्चरेदितिशास्त्रविधानमिति संक्षेपः ॥३॥

हे सुरसुरानन्द ! उदार मन वाले श्रीवैष्णवगण समस्त जगत् का परम कारण भगवान् श्रीसीतापति मर्यादापुरुषोत्तम के सुन्दर यश समुदाय से युक्त जन्म कर्मादिकों का निरन्तर श्रवण करें तथा भगवान् की कथा का स्वयं गान करके लोगों को सुनावें तथा भगवान् श्रीरामजी के जड़चेतनात्मक जो श्रीविग्रह हैं तादृश श्रीविग्रहों का दर्शन तथा सत्सङ्गति करते हुए विचरण करें ॥३॥

**चापादिपञ्चायुधचिह्निताङ्गकः समीक्ष्य हृष्टश्च हरिप्रियानथ ।**
**तथा विधान् भक्तिपरः प्रपूजयेत् सुवैष्णवान् जन्मफलादिसंस्तुवन् ॥४॥**

चापादिपञ्चायुधचिह्निताङ्गकः-चापवाणादिभिः पञ्चभिः संख्याकायुधैः शस्त्रैः चिह्नितान्यङ्कितानि अङ्गानि शरीराणि यस्य तादृशः, तथाविधान् चापाद्य ङ्कितदेहान् हरिप्रियान् श्रीरामप्रियान् अपरान् श्रीवैष्णवान् समीक्ष्य दृष्ट्वा हृष्टः भक्तिपरः सन् स्वकीयजन्मफलादिसंस्तुवन्, श्लाघमानस्तान् श्रीरामप्रियान् सुवैष्णवान् प्रपूजयेत्, तेषां यथासाध्यमातिथ्यादिकं कुर्यात्, श्रीवैष्णवान्तरानर्च येन्नतुस्थानान्निष्काशयेदितिभावः ॥४॥

भगवच्चापबाणादि पाँच आयुधों से चिह्नित शरीरवाले श्रीवैष्णव भगवान् श्रीसीतानाथजी की भक्ति करने में सदा तत्पर एतादृश चिह्नाङ्कित स्वेतर श्रीरामभक्तों को देखकर प्रसन्न होते हुए स्वकीय जन्म ग्रहण करने के फल की प्रशंसा करते



हुए दूसरे वैष्णवों का जो कि उसके स्थान में आये हुए नवागत श्रीवैष्णव हैं पूजन करें अर्थात् यथा साध्य भोजनादि से सेवा करें ॥४॥

**पञ्चायुधाङ्काङ्कितवैष्णवा ये विप्रा अथ क्षत्रियवैश्यशूद्राः ।**
**स्त्रियस्तथान्येऽपि च विष्णुरूपा जगत्पवित्रप्रपवित्रिणस्ते ॥५॥**
**ते सर्वतीर्थाश्रयभूतदेहा देशे महाभागवता वसन्ति ।**
**यस्मिन् स तद्दर्शनसंस्थितिभ्यां सूते सुपुण्यं निखिलाघशून्यम् ॥६॥**

गतप्रकरणेन श्रीवैष्णवानां लक्षणानि प्रदर्श्य सम्प्रति तादृशवैष्णवानां महत्वं दर्शयितुमुपक्रमते पञ्च इत्यादि । हे सुरसुरानन्द ये पञ्चायुधाङ्किताववैष्णवाः विप्रा ब्राह्मणाः अथ क्षत्रियवैश्यशूद्राश्च तथास्त्रियोऽपि भगवदायुधाङ्किता श्रीवैष्णाव्योः भवन्ति अथ च संकरविशेशा निषादादयोऽपि यथाविधिपञ्चायुधाङ्किता श्रीवैष्णवा भवन्ति ते सर्वेऽपि सदा सर्वदा विष्णुरूपा एव भवन्ति नात्र सन्देहले शोऽपि । ते एते कीदृशाः पुनः जगत्पवित्रप्रपवित्रिणः जगत् चराचरात्मकं विश्वं ये पवित्रयन्ति सर्वथा पापहीनं कुर्वन्ति, ये गंगादिकास्तीर्थास्तानपि एते साधवः पवित्रयन्ति । कुतः ? यतः सर्वतीर्थाश्रयदेहभूताः अर्थात् सर्वतीर्थशरीरधारकाः सर्वं विश्वं गङ्गादिप्रमुखाः पवित्रयन्ति, इमे तु साधवस्तान् तीर्थानपि पवित्र यन्ति । इत्थं भूता विष्णुरूपाः साधवः पञ्चायुधाङ्किता यत्र देशे प्रदेशे वसन्ति, तद्दर्शनस्थितिभ्यां तस्य देशस्य साक्षात्कारेण तत्र निवासेन च द्रष्टुर्निखिलाघ शून्यं सर्वपापरहितं सुपुण्यं सूते समुत्पादयति । सविधिगृहीतदीक्षश्रीवैष्णवनिवा सस्थानं सकलपापविनाशकं भवतीति ज्ञातव्यम् । श्रीवैष्णवविधिना भगवतः पञ्चायुधाङ्केन ब्राह्मणा भवन् तदन्ये वा निषादपर्यन्ता वर्णाश्रमाचारविवर्जीता अपि विष्णुतुल्यतां धारयन्तः सर्वतीर्थस्यापि पवित्रकाः श्रीवैष्णवा यत्र वसन्ति तद्देशस्य दर्शनं कुर्वतां तत्र वसतामपि दर्शनवसतिभ्यां यत् सर्वातिशायिपुण्यं भवति, पापविनाशकञ्च भवति तादृशसाधोर्दर्शनं तु कैमुतिकन्यायेन सर्वपाप विनाशकं जायते इत्यर्थवादः ॥५-६॥

श्रीवैष्णवीय विधि से जो कोई द्विजोत्तम ब्राह्मण क्षत्रिय वैश्य शूद्र तथा स्त्री जातीयक और तदितर वर्णसंकर निषादादिक इन भगवान् के पञ्चायुध से अङ्कित होते

हैं अर्थात् तप्तमुद्रा से मुद्रित होते हैं। वे समस्त वैष्णव तीर्थों का निवास स्थान होने के कारण स्थावरजङ्गमात्मक समस्त संसार को सर्वत्र पवित्र करनेवाले जो गङ्गा नदी ब्रह्मपुत्रादि नदात्मक जितने तीर्थ जगत् में हैं एतादृश उन गङ्गादिक तीर्थों को भी पवित्र करनेवाले होते हैं। तथा विष्णु स्वरूप ही पूर्वोक्त श्रीवैष्णव लोग होते हैं। एतादृश महात्मा श्रीवैष्णव जिस अयोध्यादिक देशों में निवास करते हैं। उस देश का दर्शन तथा तादृश पवित्र पवित्रीकृत देश में निवास करने से समस्त पापों का नाश करनेवाला पुण्यपुञ्ज की उत्पत्ति होती है ॥५-६॥

**तदर्चनात्तत्पदनीरपानात्तत्सङ्गतेस्तत्प्रणतेर्विधानात् ।**
**नृणां हि तच्छिष्टसुभोजनाच्च स्यात्कोटिजन्मार्जितपापनाशः ॥७॥**

तदर्चनात्तेषां पूर्वकथितचापायुधादिचिह्नरूपलक्षणलक्षितानां भागवतश्रीवैष्णवानामर्चनात् पूजनकरणात् तत्पदनीरपानात्, अर्थात् पूर्वोक्तभागवतपादोदकपानकरणात्, एवं तत्सङ्गतेस्तादृशवैष्णवैः सह सत्सङ्गकरणात् तथा तत्प्रणतेर्विधानात्, तेषां यथोक्तवैष्णवानां यत् भुक्तावशिष्टं फलादिकं तस्य साक्षाद्विष्णोरेव प्रसाद इति कृत्वा प्रसादरूपेण स्वीकारतः नृणामर्चनादिकर्तृपुरुषाणाम् यत् कोटिभिरनेकभवपरम्परया समुपार्जितं तादृशपापानाम्, अशुभकर्मसमूहानां विनाशः स्यात्। अर्थात् यो हि यथोक्तलक्षणलक्षितं महाभागवतं पूजादिविविधप्रकारेण सन्तोषयति, तादृशार्चकस्य यदनेकभवोपार्जितं पापं तद्भस्मसाद्भवतीति सारः ।

तदत्रानुसन्धेयाः-

ते मय्यपेताखिलचापलेऽर्भके दान्तेऽधृतक्रीडनकेऽनुवर्तिनि ।
चक्रुः कृपां यद्यपितुल्यदर्शनाः शुश्रूषमाणे मुनयोऽल्पभाषिणि ॥
उच्छिष्टलेपाननुमोदितोद्विजैः सकृत्स्म भुञ्जे तदपास्तकिल्बिषः । इति १।५-२५ ( भागवते ) तथैवान्यत्रापि-

मद्रूपो वैष्णवो नाम तुलसीकाष्ठभूषणः ।
शङ्खचक्रगदापद्मैश्चिह्नितो यस्य विग्रहः ॥
ऊर्ध्वपुण्ड्रधरो भक्तस्तुलसीकर्णकण्ठयोः ।
पञ्चायुधाङ्कितो यो वै स एव मम वल्लभः ॥



**ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैव तथैव च ।**
**पञ्चायुधाङ्किता देवि ? मद्रूपा नात्र संशयः ॥**
**दीक्षिताश्च चतुर्वर्णाः स्त्रियश्च श्वपचास्तथा ।**
**धारयन्त्यूर्ध्वपुण्ड्रं ये देवानामपि वन्दिता ॥**
**तुलसीकाष्ठजामाला यस्य कण्ठे हि मण्डिता ।**
**चिह्नितः शङ्खचक्राभ्यां स मद्रूपो न संशयः ॥**
**एवं हि कथितं रूपं वैष्णवानां वरानने ? ।**
**वहूनि सन्ति रूपाणि किमन्यच्छ्रोतुमिच्छसि ॥**

卐 श्रीपार्वत्युवाच 卐

**वैष्णवानां दर्शने देव ! कीदृशं फलमुच्यते ।**
**पुष्कराद्यानि तीर्थानि तेषु वै कतमोऽधिकः ॥**

श्रीभगवानुवाच

**तिस्रकोट्योऽर्द्धकोटी च सन्ति तीर्थानि सर्वतः ।**
**दर्शनाद्वैष्णवानां च न तुल्यं हि वरानने ॥**

卐 श्रीपार्वत्युवाच 卐

**काष्ठपाषाणधातूनां तवांशानां हि केशव ! ।**
**एतेषां दर्शनं देव ! साधूनामपि कीदृशम् ॥**

श्रीभगवानुवाच

**वैष्णवा हि ममांशाश्च लोके नाऽन्यस्य वै क्वचित् ।**
**गायन्ति मम कर्माणि विचरन्ति मदात्मकाः ॥**

卐 श्रीपार्वत्युवाच 卐

**यानि चान्यानि धर्माणि पुराणानीह केशव ? ।**
**स्पर्शने वैष्णवानां च धर्माणामपि किं फलम् ॥**

श्रीभगवानुवाच

**नारायणायुधैश्चिह्नं कुर्वन्ति बाहूमूलयोः ।**
**तेषां संस्पर्शनाद्देवि ! हन्ति पापं पुराकृतम् ॥**
**यदा यदा विचरन्ति लोकपावनवैष्णवाः ।**

**परं पदं सोऽयमुपेत्य नित्यमममानवं ब्रह्मपथेन तेन ।**
**सायुज्यमेव प्रतिलभ्य तत्र प्राप्यस्य सन्नन्दति तेन साकम् ॥९॥**

**सोऽयं मुमुक्षुः** प्रसिद्धः श्रीवैष्णवब्रह्मपथिकः पूर्वप्रतिपादितसुषुम्नानाड्यादिमार्गेण अर्चिरादिब्रह्मप्रापकमार्गेण पांचभौतिकशरीराद्विनिर्गतः 'ब्रह्मपथेन' ब्रह्मणः श्रीरामस्य पन्थाः प्रापकमार्गो ब्रह्मपथस्तेन ब्रह्मपथेन प्राप्य सर्वेश्वरश्रीरामप्रापकस्वेतरसर्वविलक्षणमार्गेणनित्यमुत्पादविनाशरहितं शाश्वतं परं सर्वत उत्कृष्टमलौकिकत्वात् पदं पदनीयं प्राप्तुं योग्यमममानवं मानवभोग्येभ्योभिन्नममानवम् श्रीसाकेताख्यं भगवतो रामस्य निवासस्थानम्, उपेत्य संप्राप्य तत्र गत्वेत्यर्थः । प्राप्यस्य भगवतः परमकारणरूप सर्वाधारस्वरूपश्रीरामस्य 'सायुज्यमेवप्रतिलभ्य, नतु सामीप्यसारूप्यादिकमवाप्य मोक्षेतारतम्याभावात् मोक्षे तारतम्यमिति यन्मतं तत्तु पुरस्तादेव प्रतिषिद्धम् । मोक्षेऽपि यदि तारतम्यं स्वीक्रियेत तदा सातिशयस्वर्गादिवदेव मुक्तस्य पुनरावृत्तिप्रसङ्गात् । अर्थात् यथा सातिशयत्वात्स्वर्गस्यानित्यत्वं स्वर्गगतस्य पुनरावृत्तिर्भवतीति 'क्षीणे पुण्ये मर्त्यलोकं विशन्ति इतिशास्त्रोक्तेः । तथैव स्वर्गविशेषरूपतारतम्यविशिष्टमोक्षादपि मुक्तस्य पुनरावृत्तिप्रसङ्गात् 'यद्गत्वा न निवर्तन्ते' इतिस्मृतिविरोधः । तस्मान्नमोक्षे तारतम्यप्रयुक्तो भेदोऽपितु तद्रहित एकरूप एव । तत्रेदमुक्तमाचार्येण 'सायुज्यमेव प्रतिलभ्येति । सायुज्यरूपंमोक्षं प्रतिलभ्य लब्धा संप्राप्येत्यर्थः एव कारेणान्यार्थो व्यवच्छिद्यते । ततश्च तत्राप्राकृतिके श्रीसाकेतनामके नगरवन्महानगरे तेन भगवता परमप्राप्यत्वेन श्रीसाकेतपतिना श्रीरामेण साकम्-सह, सन्नन्दति विलक्षणमानन्दं प्रागननुभूतं तदानीमनुभवन् स्वात्मानं कृतार्थं मनुते । अर्थात् सत्समीचीनरूपेण साकेतसमृद्धिजनितस्वेतरसर्वविलक्षणसुखानुभवपूर्वको विहरति स मुक्तो जन इति भावः ॥९॥

वह मुक्त पुरुष जो कि सुषुम्नानाडी द्वारा इस पाँच भौतिक शरीर से निकला हुआ है । तथा पूर्वोक्त क्रम अर्चिरादिमार्ग से ब्रह्मपथ से परब्रह्म के लोक श्रीसाकेत धाम में पहुँचानेवाले मार्ग से गन्तव्य परम प्राप्य भगवान् श्रीसाकेतनाथजी के सायुज्य रूप मोक्ष को प्राप्त हुआ है । वह साकेतनगर में भगवान् श्रीसीतानाथजी के साथ नित्य निरतिशय अदृष्टाश्रुत विलक्षण सुख का भोग करता है ॥९॥



**सीमान्तसिन्ध्वाप्लुत एव धन्यो गत्वा परब्रह्मसुवीक्षितोऽथ ।**
**प्राप्यं महानन्दमहाब्धिमग्नो नावर्त्तते जातु ततः पुनः सः ॥१०॥**

इत्यानन्दभाष्यकारजगद्गुरुश्रीरामानन्दाचार्ययतिराजप्रणीते श्रीवैष्णवमताब्जभास्करे प्राप्यनिरूपणात्मको नवमप्रश्नोत्तराख्यो नवमः परिच्छेदः ॥९॥

**सीमान्तसिन्ध्वाप्लुतः** 'प्रकृतिमण्डलस्य संसारस्यान्तेऽवसाने सिन्धुर्नदी विरजानाम्नी सैव प्रकृतिमण्डलस्य सीमानभूता । अर्थात् 'विरजायाः पूर्वपारे संसार उत्तरपारे साकेतः' इतितादृशनद्यां विमलशीतलत्वतापहत्वादिगुणविशिष्टायाम् आप्लुतस्तत्रावगाहनेन सुस्नातः । अथ च परब्रह्मसुवीक्षितः परब्रह्मणा समस्तजगत्कारणेन ब्रह्मणा सर्वव्यापकेन श्रीरामेणाहेतुककृपया सुवीक्षितः सम्यगवलोकितः ततश्च श्रीरामावलोकनादेव धन्यतां जातः स एव जनः प्राप्यं प्राप्यभूतं सर्वाधारंश्रीरामं प्राप्तुं योग्यम् गत्वा प्राप्य ज्ञात्वा वा स्वचक्षुषा साक्षात्कृत्येत्यर्थः । महानन्दो महाब्धिमग्नः तत्र महानन्दस्य त्रिविधपरिच्छेदरहितस्यानन्दस्य सुखविशेषस्य महाब्धौ महासागरे अर्थात् नित्यनिरतिशयसुखसागरे निमग्नः ओतप्रोतोजनः जातु कदाचिदपि, ततः प्राप्यस्थानात्साकेतादानन्दस्वरूपात् पुनः नावर्त्तते । यथा कर्म कृत्वा तत्फलोपभोगाय दक्षिणमार्गेण चन्द्रलोकमवाप्य भोगेन कर्मक्षयानन्तरं पुनरिमं मानवलोकमावर्तते कर्मकरणाय आवर्ततेऽत्रा गच्छति । तथा भगवत्कृपया श्रीसाकेतं प्राप्त उक्तपूर्वगत्या मानवः स प्रेत्य न तत्स्थानादागच्छति । तदुक्तं भगवतावासुदेवेन 'आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन । मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते' इति । तथा 'न स पुनरावर्तते' इत्यादिश्रुतिभ्यां ब्रह्मप्राप्तस्य पुनरागमनं न स्यात् । तदयं श्लोकस्य संक्षिप्तार्थः स ईदृशः पूर्वोक्तो मुमुक्षुर्धन्य एव सीमान्तसिन्ध्वाप्लुतः जन्ममरणजरादिसंसारतापविनाशकामृतजलपूर्णब्रह्मात्मकमहार्णवनिष्णातोऽहर्निशं निरन्तरकृपाकटाक्षेण परब्रह्मणा श्रीसाकेताधिपेन सुवीक्षितो दृष्टः सन् प्राप्यं प्राप्तियोग्यं श्रीरामं गत्वा प्राप्य ज्ञात्वा वा अपरिमितानन्दलक्षणमहासमुद्रे निमग्न ओतः प्रोतः तादृशानन्दरूपसाकेतान्नपुनः कदाचिदपि सांसारिकदुःखाद्यनुभवाय ततः पुनरागच्छतीति ।

भगवत्कृपया गुरूपदेशेन संप्राप्तब्रह्मज्ञानवतां श्रीसाकेतगमनप्रकारमित्थं छान्दोग्योपनिषदि प्रतिपादितम् । तथा हि 'तेऽर्चिषमभिसंभवन्ति अर्चिषोऽहः

अन्ह आपूर्यमाणपक्षम् आपूर्यमाणपक्षाद्यान् षड्डुदङ्तिमासान् मासेभ्यः संवत्सरम् संवत्सरादादित्यम्, आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एतान् ब्रह्मगमयति एष देवपथो ब्रह्मपथ एतेन प्रतिपाद्यमान इमं मानवमावर्तं नावर्तन्ते' इति तदत्र श्रीमन्त आनन्दभाष्यकारा आनन्दभाष्ये 'ततश्चायं क्रमः सम्पन्नः नाडिरश्मिप्रवेशानन्तरमर्चिषमर्चिषोऽहरह आपूर्यमाणपक्षमापूर्यमाणपक्षादुत्तरायणमासास्तेभ्यः सम्वत्सरं सम्वत्सराद्वायुं वायोरादित्यमादित्याच्चन्द्रमसं चन्द्रमसो वैद्युतं वैद्युताद्वारुणं वारुणादैन्द्रमैन्द्राद्धातृलोकं धातृलोकाद्विरजां तत्र स्नात्वा श्रीसाकेतलोकद्वारमिति ( आनन्दभाष्यम् ४।३।३ ) अस्मिन् विषये साटोपमीमांसा गीतार्थचन्द्रिकाया अष्टमाध्यायस्य त्रयोविंशतिश्लोके कृताऽस्मत्परमगुरुभिरिति तत एवानुसन्धेयो विस्तारभयान्नोल्लिख्यते तथाप्यत्रानुसन्धेयाः सारस्वतसार्वभौमजगद्गुरुश्रीरामेश्वरानन्दाचार्यानुगृहीताः श्लोकास्तथाहि-

दुःखार्णवे निमज्जन्तं दृष्ट्वा जीवमहेतुकः ।
करुणासिन्धुरामस्य जायते कोऽप्यनुग्रहः ॥
पुण्यं भवति चाज्ञातं रामस्यानुग्रहेण हि ।
अभावो जायते तस्माद् विद्वेषप्रतियोगिकः ॥
श्रीरामरामभक्तानामाभिमुख्यस्य कारणम् ।
तज्जन्यादाभिमुख्याद्धि जिज्ञासा समुदेति च ॥
सम्बन्धिनी विभागस्य सङ्ग्रहासङ्ग्रहार्हयोः ।
श्रीमद्रामस्य भक्तानां सम्बादो जायते ततः ॥
भवत्यनन्तरं तस्मात् सदाचार्यसमाश्रयः ।
सदाचार्याश्रयेणाथ हेयोपादेयनिश्चयः ॥
रामेतरेऽथ वैराग्यं रामे प्रीतिश्च जायते ।
निवृत्ते रामभिन्नानां रामप्राप्तेश्च कारणम् ॥
अङ्गीकरोति तत्पश्चात् सिद्धोपायञ्च चेतनः ।
श्रीरामप्राप्तये सोऽथ त्वरते भृशमुत्सुकः ॥
रामः स्मरति तं चाथ स्वसम्प्राप्तिसमुत्सुकम् ।
यथा स्वाप्युत्सुकं वत्सं धेनुर्वात्सल्यवारिधिः ॥



अश्लिष्टे च विनष्टे स्तस्ततस्तत्पुण्यपापके ।
भोगेनाथ विनष्टे स्तस्तत्प्रारब्धात्मके च ते ॥
मनस्चेन्द्रियसंयुक्तं प्राणेन तस्य युज्यते ।
प्राणो जीवेन संयुक्तो भूतसूक्ष्मैस्तु युज्यते ॥
सर्वेश्वरस्य रामस्य संसर्गो जायते ततः ।
तन्मार्गस्य प्रकाशोऽथ हार्दरामानुकम्पया ॥
नाड्या मूर्द्धन्यया चाथोत्क्रामति हृदयात् किल ।
शरिरान्निर्गतो भक्त ऊर्ध्वं याति च रश्मिभिः ॥
निदाघे चोष्मता सत्त्वान्निशायाञ्चापि रश्मयः ।
अर्चयन्त्यर्चिरादिस्थं बुधा श्चातिवाहिकाः ॥
दिनं तत्रार्चिषोऽह्नश्च शुक्लं पक्षं च गच्छति ।
समेति शुक्लपक्षात् स उत्तरायणमेवहि ॥
तस्मात्संवत्सरं तस्माद्वायुं वायोश्च भास्करम् ।
सूर्याद्विधुं विधोश्चाथ विद्युतं वरुणं ततः ॥
ततश्चेन्द्रं ततो धातृलोकं गच्छत्युपासकः ।
अतिक्रामति पश्चाद् भूम्याद्यावरणसप्तकम् ॥
उल्लङ्घ्य प्रकृतिं सोऽथ विरजामवगाहते ।
ततः सूक्ष्माच्छरीराद् हि विश्लिष्टश्च भवत्यसौ ॥
प्रादुर्भवत्यथो चास्यानघत्वादि गुणाष्टकम् ।
अमानवकरस्पर्शो भवत्यस्य ततः परम् ॥
श्रीमद्रामस्य शङ्खल्याद्दिव्यदेहो भवत्यसौ ।
कालकाल्येतरे दिव्ये देशे प्राप्तो भवत्यथ ॥
सरस्यैरंमदीयेऽथ दिव्ये स्नानं करोति सः ।
भवत्यनन्तरं चासौ दिव्यभूषरणभूषितः ॥
दिव्यं चाथ विमानं हि समारूढो भवत्ययम् ।
तिल्यारण्यप्रवेशोऽस्य विमानारोहणादनु ॥
अप्सरोभिश्च दिव्यैर्हि भव्या चास्य सुसत्कृतिः ।

तिल्यगन्धप्रवेशोऽस्य तादृश्याः सत्कृतेः परम् ॥
तिल्यगन्धं प्रविश्याथ ब्रह्मगन्धं विशत्ययम् ।
सम्प्राप्नोति ततश्चायं प्राकृतेतरगोपुरम् ॥
वैकुण्ठनगरस्याप्तिर्भवत्यस्य ततः परम् ।
भवत्ययं च तत्र श्रीनारायणाभिनन्दितः ॥
गोलोकस्याथ सम्प्राप्तिर्भवत्यस्य महात्मनः ।
भवत्यसौ हि तत्राथ श्रीकृष्णेनानुमोदितः ॥
ततः साकेतलोकस्य प्राप्नोत्ययञ्च गोपुरम् ।
ब्रह्मविष्णुमहेशाद्यैर्देवैः स्तुतं च वन्दितम् ॥
वेदैर्निवेदितं चाथ श्रीरामेणाभिनन्दितम् ।
समृद्धं परमं दीप्तं सर्वथा चाथ सर्वदा ॥
परात्परमयोध्यं च सुषमासागरं शुभम् ।
अयोध्यानगरं चासौ सम्प्राप्नोति ततः परम् ॥
यत्रास्ति सरयूरस्या प्रमोदाख्यं च काननम् ।
लीलास्पदं च रामस्य रत्नाचलः सुशोभितः ॥
पूर्वद्वारे च यस्यास्ति सुग्रीवो हि कपीश्वरः ।
द्वारे तु पश्चिमे श्रीमान् राक्षसेन्द्रो विभीषणः ॥
उत्तरे तु महावीरो बालिपुत्रस्तथाऽङ्गदः ।
दक्षिणे करुणासिन्धुर्मारुतिश्च महबलः ॥
दिव्यसूरिसदः प्रत्युद्गच्छत्ययं समुत्सुकः ।
राजमार्गं ततो याति ब्रह्मतेजो विशत्यथ ॥
दिव्यस्य गोपुरस्याथ प्राप्तिर्भवति चास्य हि ।
ब्रह्मवेश्मप्रवेशोऽथ भवत्यस्य महात्मनः ॥
कल्पवृक्षतले चास्ति साकेते ब्रह्मवेश्मनि ।
सुवर्णमण्डपे यत्र भासुरा रत्नवेदिका ॥
रत्नसिंहासनं यत्र वर्त्तते सूर्यसन्निभम् ।
विशालं कमलं दिव्यं सहस्त्रदलशोभितम् ॥



अधः स्थिते वितानस्य तत्र सिंहासने वरे ।
आसीनं परमं रम्यं श्रीरामं सीतया सह ॥
दिव्यायुधान्वितं चाथ दिव्यपार्षदसंयुतम् ।
दिव्यभूषणवस्त्रैश्च भूषितं वीक्ष्यते ह्यसौ ॥
नमस्करोति साष्टाङ्गमभ्यासं समुपैति च ।
कोऽसी त्वमिति पृष्टेऽथ श्रीरामेण परात्मना ॥
शेषोऽहं शेषिणो नाथ ? तवैव सकलेशितुः ।
इत्येवं निगदन्तं च श्रीरामः करुणार्णवः ॥
स्वीयोत्सङ्गसमारूढमालिङ्ग्यं विदधाति हि ।
सर्वान् कामानवाप्नोति रामेणायं सह ततः ॥
गुणानां विग्रहादेश्च स्वरूपरूपयोस्तथा ।
प्रत्यक्षाज्जायते प्रीतेः प्रकर्षोहि ततः परम् ॥
अनेकविग्रहाणाञ्च जायतेऽथ परिग्रहः ।
कामचारे च लोकानां समर्थोऽपि भवत्ययम् ॥
अवस्थासु च सर्वासु सर्वयोर्देशकालयोः ।
कैङ्कर्येषु च सर्वेषु याति चायं प्रसन्नताम् ॥
छान्दोग्ये मुक्तजीवस्य पुनरावृत्तिवर्जनात् ।
भगवताऽपि गीतायां बोधयता धनञ्जयम् ॥
भगवन्तमुपेतस्य पुनर्जन्मनिषेधनात् ।
श्रीरामं समवाप्तोऽयं कर्मयोनिं न गच्छति ॥
आनन्दी नाथ जीवोऽयं रामं प्राप्य रसात्मकम् ।
समिच्छति पुनर्जन्म दुःखालयमशाश्वतम् ॥
सत्यसन्धः प्रतिश्रुत्य प्रपन्नायाभयं स्वयम् ।
निवर्त्तयेद् भये नैनं श्रीरामः श्रितवत्सलः' इत्यादिकाः ॥१०॥

सत्व रजस्तमो रूप प्रकृति तथा महत्तत्व से लेकर महापृथिव्यन्त जो प्रकृति मण्डल है उसके सीमान्त पर स्थित अर्थात् जहाँ प्रकृति मण्डल समाप्त होता है तथा जिसके आगे मोक्ष प्रदेश श्रीसाकेतधाम प्रारम्भ होता है इन दोनों के बीच में शास्त्र

पुराणादि प्रसिद्ध विरजा नदी बह रही है। यह रजोगुण तथा तमोगुण के सम्बन्ध से सर्वथा अस्पृष्ट है शुद्ध सत्वमय ही है। इसलिए शास्त्रकारों ने इसका नाम विरजा रखा है। 'विरजा' विगत रजोगुणवती प्रायः प्रत्येक नदी वर्षाकाल में सरजस्का हो जाती है इसलिए वर्षा काल में स्नान तर्पणादिकों का गङ्गादि व्यतिरिक्त नदियों में निषेध है। यह तो गङ्गा से भी उत्कृष्ट होने से सर्वदा विरजा है। इस विरजा नदी के पूर्व किनारे में संसार है। उत्तर किनारे पर दिव्य श्रीसाकेतधाम है तो मोक्षधाम में जानेवाले मध्य में स्थित विरजा में स्नान करने के बाद ही प्राप्य श्रीरामजी का दर्शन करते हैं। इसलिए आचार्यश्री ने कहा है प्रकृति मण्डल के सीमान्त पर अवस्थित विरजा में समीचीन रूपसे अवगाहन करनेवाले परब्रह्म श्रीरामजी के अहेतुक कृपा कटाक्ष से दृष्ट होने के कारण जो धन्य हैं वे निरन्तर प्राप्त करने के योग्य भगवान् श्रीरामचन्द्रजी को प्राप्त करके, अर्थात् साक्षात्कार करके नित्य निरतिशय आनन्दात्मक महासागर में निमग्न हो जाते हैं पुनः कभी भी उस स्थान से लौटकर इस मानव महावर्त में नहीं आते हैं। **'न स पुनरावर्तते' 'आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन। मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते'** इत्यादि श्रुति स्मृतियों में ऐसा कहा है।

ब्रह्म प्राप्ति का मार्ग छान्दोग्यादि श्रुतियों में बतलाया है कि-**'तेर्चिषमभिसंविशन्ति, अर्चिषोऽह अह्न आपूर्यमाणपक्षम् आपूर्यमाणपक्षाद्यान् षडुदङेतिमासान् मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरषोऽमानवः स एतान् ब्रह्मगमयति, एष देवपथोब्रह्मपथ एतेन प्रतिपाद्यमान इमं मानवमावर्तं नावर्तन्ते' इति।** (तदयमर्थः सुषुम्नानाडी के द्वारा पाँच भौतिक शरीर से बाहर निकलने वाले महापुण्यशाली मानव शरीर से निकल करके अर्चिरभिमानी देव को प्राप्त करते हैं वहां से चलकर दिवसाभिमानी देव को अर्थात् दिवस को प्राप्त होते हैं। तदनन्तर पक्षाभिमानी देव को प्राप्त करते हैं। तदनन्तर छ उत्तरायण मासों में प्रवेश करते हैं। तदनन्तर मास में मासाभिमानी देवों से चलकर संवत्सर में अर्थात् संवत्सराभिमानी देवों के लोक में जाते हैं। वहां देवों से यथायोग्य पूजित होकर तदनन्तर संवत्सर से आदित्यलोक में जाते हैं। आदित्यलोक में पूजित सत्कृत होकर के वहां से चन्द्रलोक में जाते हैं। चन्द्रलोक से भी प्रस्थान करके विद्युदभि



मानी देवों के लोक में पुण्यात्मा जाते हैं वहाँ से आगे उनको एक अमानव पुरुष ब्रह्मलोक श्रीसाकेतलोक में पहुँचाता है इसीका नाम देवपथ अर्थात् देवयान है। यही ब्रह्मपथ कहलाता है। अर्थात् ब्रह्मप्रापक मार्ग। इस मार्ग के द्वारा ब्रह्मलोक प्राप्त करनेवाले व्यक्ति कभी भी मानव आवर्त में लौटकर नहीं आता है। **'न स पुनरावर्तते'** ब्रह्म लोक को प्राप्त किया हुआ पुरुष पुनः वहाँ से लौटता नहीं। इस विषय का विशेष विवरण आनन्दभाष्य के अर्चिरादि प्रकरण तथा जगद्गुरु श्रीरामेश्वरानन्दाचार्यजी देशि केन्द्र प्रणीत श्रीरामप्राप्तिपद्धति और जगद्गुरु श्रीरामानन्दाचार्य श्रीरघुवराचार्यजी प्रणीत गीतार्थचन्द्रिका के आठवें अध्याय में है अतः विशेषार्थियों को वहीं देखना चाहिये निबन्धकाय वृद्धिभय से नाम निर्देश मात्र किया है, विशेष चर्चा वहीं करुँगा तत्त न्निबन्ध विवरण में ॥१०॥

## 卐 अथ श्रीवैष्णवनिवासस्थाननिरूपणम् 卐

**महामते प्रोच्य तदीयमाप्यं तेषां निवासस्तु निरूप्यतेऽथ।**
**मोक्षप्रदः शास्त्रसुसंमतश्च जिज्ञासुबोध्यो भव सावधानः ॥१॥**

श्रीवैष्णवप्राप्यस्य भगवतो रामचन्द्रस्य स्वरूपलक्षणादिकं नवमप्रकरणे न निरुप्य, तदनु तेषां कुत्र कार्योनिवासः ? इतिदशमप्रश्नस्योत्तरं दातुमाचार्य उपक्रमते-महामते प्रोच्य तदीयमाप्यम्' इत्यादि। हे महामते विशुद्धबुद्धिशालिन् सुरसुरानन्द ! तदीयमाप्यम् तेषां श्रीवैष्णवानां यत् परमतत्त्वम् आप्यं प्राप्यं तत् नवमप्रकरणे प्रोच्य प्रकर्षेण तदीयगुणस्वरूपादिकथनपूर्वकं श्रीरामात्मकं परमतत्त्वमेवाप्यम् तत्प्राप्तिरेव सायुज्यमोक्ष इति प्रोच्य कथयित्वा, अथ प्राप्यवस्तुनः कथनानन्तरम् तेषां श्रीवैष्णवानाम् निवासो निवासस्थानं वासकरणयोग्यं स्थलं निरूप्यते प्रतिपादयामि। यत्र स्थितः प्रतिबन्धकमन्तरेणैव भगवतोरामस्यानुध्यानं मननं निरायासेन सम्पादितं स्यात्। समे शुचौ सर्करावह्निवालुका विवर्जिते' इत्यादिना दोषरहितस्वच्छपवित्रप्रदेशगुहादिदेशस्यानुध्यानकरणस्थानतया शास्त्रे विधानात्। स च तेषां श्रीवैष्णवानां निवासः मोक्षप्रदः नित्यनिरतिशयसुखात्मकमुक्तेः साक्षात् परम्परया वा साधकः। न केवलं मोक्षप्रद एवं अपितु शास्त्रसुसम्मतः। अर्थात् तादृशनिवासस्थानस्य मोक्षकारणता शास्त्रप्रमाणसिद्धः। अतएव जिज्ञासुबोध्यः विरक्तश्रीवैष्णवैः सर्वथाज्ञातुं योग्यः अतः हे सुरसुरा-

**नन्द ! त्वं समाहितचिन्तो भव अहं ते तादृशनिवासस्थानं प्रतिपादयामि त्वं चाव धारय अर्थात् तादृशनिवासयोग्येषु स्थानेष्वन्यतमस्थानमध्यास्य तत्र भगवतोऽनुध्यानं कुरु ततस्ते परमप्राप्यस्य भगवतः श्रीरामस्य प्राप्तौ सत्यां करतलस्थितामलकवत् मोक्षस्तेस्यादिति निवासस्थानं मत्तो जानीहीतिभावः ॥१॥**

हे महामते विलक्षण बुद्धिशालिन् ! श्रीवैष्णवों से प्राप्त करने के योग्य परम कारण परमतत्त्व का निर्वचन करके तदनन्तर महात्मा श्रीवैष्णवों का निवासस्थान जो कि शास्त्र प्रमाण सिद्ध है । तथा साक्षात् परम्परया मोक्ष प्राप्ति करने में सहकारी है। तथा जिज्ञासु व्यक्तियों से जानने के योग्य है । तादृश निवास स्थान का अव मैं निरूपण करता हूँ, तुम सावधान होकर के सुनो । स्थान का पूर्ण महत्व है वह मुक्ति प्राप्ति में अर्थात् विरक्तों श्रीवैष्णवों को मोक्ष प्राप्ति में निवासस्थान सहायक होता है। अतः निवास स्थान का कथन करता हूँ । तुम स्थिर बुद्धि होकर के इन बातों को सुनो और समझो ॥१॥

**अशेषतीर्थेषु वसेत् प्रपूजयन् स यत्र यत्राविरभूद् यथा यथा ।**
**तथा तथा तत्र रघूत्तमं जगत्पत्तिं चतुवर्गफलप्रदं हरिम् ॥२॥**

**सः सर्वचराचरजगत्सु प्रसिद्धो भक्तस्य दुःखजनकसर्वपापहारको हरि र्भगवान् श्रीरामचन्द्रः यत्र यत्र यादृश यादृश तीर्थेषु यथा यथा येन येन रूपेण श्रीकृष्णवामनादिरूपेण आविरभूत् आविर्भूतो भक्तदुःखापनोदनाय लीलाभूमौ समागतः तादृशाशेषतीर्थेषु तादृशसमस्तपुण्योत्पादकायोध्यादिप्रदेशविशेषेषु तथा तथा तेन तेन प्रकारेण तत्तद्रूपस्थानोचितोपायनाद्युपहारेण चतुर्वर्गफलप्रदम् धर्मार्थकाममोक्षफलप्रदायकं हरिं सकलपापविनाशकं, रघूत्तमं रघुकुले सर्वत उत्तमं सर्वावतारित्वात् 'सर्वेषु अवतारेषु अवतारी रघूत्तमः' इत्युक्तेः । जगत्पतिं लीलादिभूमेर्नायकं भगवन्तं श्रीरामं मनोवाक् कायैः प्रपूजयन् सर्व भावेन प्रपत्तिमासाद्य पूजां कुर्वन् अशेषतीर्थेष्वन्यतमतीर्थे वासं कुर्यात् । सामान्यरूपेण सर्वतीर्थस्थानमेव निवासयोग्यमिति मत्वा श्रीसीतानाथस्य भक्तिं कुर्वन् वक्ष्यमाणतीर्थेषु सर्वविरक्तो भागवतश्रीवैष्णवस्तत्र कुटीरादिकं निर्माय वसेदिति सारः ॥२॥**

सर्वभक्तों के दुःख जनक पापों को विनाश करनेवाले श्रीहरि परेश श्रीरामजी



जिन जिन तीर्थ स्थानों में जिन जिन रूपों से भक्त के कार्य को सिद्ध करने के लिए आविर्भूत हुये हैं । अर्थात् यादृश कार्य विशेष को सम्पादन करने के लिए लीलाविभूति में श्रीरामजी ने अवतार लिया है उन उन अशेष तीर्थों में रघुकुलोत्तम समस्त चराचर का पालक भक्त को स्वाभितम धर्म अर्थ काम और मोक्ष पर्यन्त फल के प्रदाता सर्व पापहारक भगवान् श्रीरामचन्द्रजी का प्रपत्तिनिष्ठ होकर मनोवाक् काय से यथा मिलित उपचार से पूजन करते हुए उन तीर्थों में प्रपन्न श्रीवैष्णवगण यथा सुख यथा काल निवास करें । प्रत्येक तीर्थस्थान निवास करने योग्य हैं इसलिये श्रीवैष्णवगण अशेष तीर्थों में निवास करें ॥२॥

**वैकुण्ठदेशे खलु वासुदेवमामोदसंज्ञेत्वथ कर्षणाह्वम् ।**
**प्रद्युम्नमब्जाक्षमपि प्रमोदे संमोद ईशन्तु तथाऽनिरुद्धम् ॥३॥**

**यत्र स्थाने श्रीवैष्णवसन्तैर्निवासः कर्तव्यस्तेषां सामान्यत 'अशेषतीर्थेषु' इत्यादिना कथितम् तेषामेव स्थानानां प्रातिस्विकरूपेण तत्तन्नामविशेषरूपेण दर्शयितुमुपक्रमते 'वैकुण्ठदेशे खलु वासुदेवम्' इत्यादि श्रीवैष्णवोत्तमैः शुभार्थिभिर्वैकुण्ठादिदेशे स्थानविशेषे आराधयद्भिः सकलार्थदायिनं वैकुण्ठादिस्थानान्तदेशविशेषेषु निवासः कार्य इत्यग्रिमश्लोकेन सम्बन्धो ज्ञातव्यः ।**

**'हे सुरसुरानन्द ! मोक्षेच्छावद्भिः श्रीवैष्णवैः वैकुण्ठदेशे वैकुण्ठनामक तीर्थविशेषे सर्वप्रकारकदुःखरहितप्रदेशविशेषस्य वैकुण्ठेतिनाम एतत् तीर्थविशेषे, भगवन्तम् वासुदेवनामकमाराधयन् विरक्तो निवसेत् निवासं कुर्यात् । अत्र वैकुण्ठनामप्रदेशविशेषे सर्वदा भगवान् वासुदेवः सन्निहितो भवतीति तत्र वासुदेवस्य पूजनादिकं सम्पादयन् निवसेदिति । आमोदसंज्ञेत्वथं कर्षणाह्वमथानन्तरम् अमोदसंज्ञके आमोदनामकतीर्थविशेषे संकर्षणनामको भगवान् तिष्ठतीति तत्रामोदे संकर्षणनामानं भगवन्तं यथामिलितोपचारेण भक्तिपूर्वकं पूजयन् श्रीवैष्णवो निवासं कुर्यादिति । 'प्रद्युम्नमब्जाक्षमपि प्रमोदे' प्रमोदनामतीर्थविशेषे कमलदलवदायतनेत्रो देवः प्रद्युम्ननामकस्तिष्ठति तत्रामोदतीर्थे प्रद्युम्नं प्रपूजयन् प्रपन्नश्रीवैष्णवो निवासं सर्वदा कुर्यादिति । तथा संमोदे संमोद नामकतीर्थविशेषे अनिरुद्धनामक ईशस्तिष्ठति तत्रानिरुद्धमीशं प्रपूजयन् विरक्त श्रीवैष्णवो निवासं कुर्यादिति ॥३॥**

अशेषतीर्थ स्थानों में विरक्त श्रीवैष्णव निवास करें। इसप्रकार सामान्य रूपसे निवास स्थान का कथन किया गया है। उन्हीं तीर्थों का अब विशेष रूपसे तत्तत् नामपूर्वक कथन करते हैं। अर्थात् कौन कौन देव किस किस तीर्थों में रहते हैं। इस बात को बतलाने के लिए श्रीआचार्यजी कहते हैं-**'वैकुण्ठदेशे खलु वासुदेवम्'** इत्यादि। वैकुण्ठ देश में अर्थात् वैकुण्ठ नामक प्रदेश में मोक्ष की अभिलाषा रखने वाले श्रीवैष्णवगण भगवान् श्रीवासुदेवजी का पूजन करते हुए जो भगवान् श्रीवासुदेव धर्म, अर्थ, काम और मोक्षरूप चतुर्वर्गात्मक फल को देनेवाले हैं उनकी आराधना करते हुए निवास करें। एवं आमोद नामक तीर्थ विशेष में श्रीसंकर्षण नामक भगवान् का पूजन करते हुए जो कि सकल पुरुषार्थ का दायक हैं उनका पूजन आराधन करते हुए आमोदतीर्थ में निवास करें।

एवं प्रमोद नामक तीर्थ में भगवान् कमलनयन श्रीप्रद्युम्नजी का निवास स्थान है तो मोक्षाभिलाषी भक्तगण इस तीर्थ में स्थित प्रद्युम्न भगवान् का पूजनाराधन करते हुए प्रमोद नामक तीर्थ में निवास करें। और संमोद नामक तीर्थ में सर्व समर्थ अर्थात् सवके ऊपर शासन करनेवाले भगवान् श्रीअनिरुद्धजी निवास करते हैं। तो मोक्ष कामना वान् भक्तलोग भगवान् श्रीअनिरुद्धजी का पूजन करते हुए संमोद तीर्थ में वास करें ॥३॥

**विष्णुं तु लोके वरसत्यसंज्ञके पद्माक्षमित्थं त्वथ सूर्यमण्डले ।**
**क्षीराब्धिमध्ये शुभशेषशायिनं श्वेते तथा द्वीपवरे च तारकम् ॥४॥**

**वरे श्रेष्ठतमे सत्यनामकलोके विष्णुनामकं परमात्मानं सर्वान्तर्यामितया सर्वव्यापकम् भगवन्तमाराधयन् श्रीवैष्णवः सत्यलोकाख्यतीर्थे सदा निवासं कुर्यादिति । अथानन्तरम् इत्थमनेनैवक्रमेण सूर्यमण्डले-सूर्यमण्डलनामकक्षेत्र विशेषतीर्थे पद्माक्षं तन्नामकपरमात्मानं भक्त्या पूजनादिकं कुर्वन् प्रपन्नोभक्तः यथोक्ततीर्थविशेषे निवसेत् । तथा क्षीराब्धिमध्ये-क्षीरसागरनामकतीर्थविशेषे शुभशेषशायिनम् मनोज्ञशेषान्तलक्षणशय्यायामास्तरणे समासीनं भगवन्तं पूजादिना संतोषयन् भक्तस्तादृशक्षीरसागरतीर्थे निवासं कुर्यात् । तथा पूर्वोक्तप्रकारेणैव श्वेते श्वेतनामकद्वीपश्रेष्ठतीर्थे तारकं तारनामकम् परमात्मानमाराधयन् मोक्षकामुको निवासं कुर्यादिति ॥४॥**



सत्यलोक नामक तीर्थ में भगवान् विष्णु रहते हैं उस सत्यलोक तीर्थ में भगवान् विष्णु का पूजन करते हुए श्रीवैष्णवगण निवास करें। एवं सूर्यमण्डल नामक तीर्थ में पद्माक्ष भगवान् विराजते हैं। उस क्षेत्र में पद्माक्षजी की भक्ति करते हुए श्रीवैष्णव गण निवास करें एवं क्षीरसागर नामक तीर्थ में भगवान् श्रीशेषशायीजी रहते हैं उस क्षेत्र में निवास करते हुए महात्मागण श्रीशेषशायीजी का पूजनादिक करें। तथा श्वेत द्वीपनामक क्षेत्र में तारक भगवान् रहते हैं उनका पूजन करते हुए श्रीवैष्णव वहाँ निवास करें ॥४॥

**तथा बदर्याभिध आश्रमे वरे सुरर्षिराजर्षिमहर्षिसेविते ।**
**नारायणं लोकनमस्कृताङ्घ्रिकं मुनीशसेव्ये त्वथ नैमिषे हरिम् ॥५॥**

**यथाश्वेताख्यद्वीपवरे संस्थितं तारकनामानं भगवन्तं स्थितं प्रपूजयन् मुमुक्षुः संसारंपरित्यक्तुमिच्छन् वसेत् तथैव तेनैव प्रकारेण सुरर्षिराजर्षिमहर्षिसेविते नारदादिऋषिसंघैः संसेविते बदरीनामकवरे शुभे आश्रमे हिमालयैकदेशे बदरीनारायणनाम्नाप्रथितक्षेत्रे लोकनमस्कृताङ्घ्रिकं सर्वजनार्चितचरणकमलं नारायणनामकं भगवन्तं प्रपूजयन् निवासं कुर्यात् अर्थात् तथाभूते बदर्याश्रमे श्रीनारायणं पूजयन्तमेव तत्रावस्थानं कुर्यादिति । नैकोभक्तः सर्वत्र तीर्थे उषित्वा तत्तद्देवं पूजयेदपितु यथारुचिप्रदर्शितान्यतमक्षेत्रे वसेत् स्वेष्टं ध्यायन्निति । अथानन्तरम् मुनिनामीशोमुनिश्रेष्ठस्तैः संसेविते नैमिषनामकतीर्थे नैमिषारण्ये इत्यर्थः । तत्र हरिनामकं भगवन्तं प्रपूजयन् निवसेदिति ॥५॥**

जिस तरह श्वेत द्वीप में तारक भगवान् का पूजनादि करता हुआ निवास करे उसी तरह बदरीनामक आश्रम में देवर्षि राजर्षि तथा महर्षियों से सेवित जो श्रीनारायण नामक भगवान् हैं उनका पूजनादिक करते हुए श्रीवैष्णवगण सर्वदा निवास करें। तथा नैमिषनामक क्षेत्र में जोकि मुनिश्रेष्ठ द्वारा सर्वदा सेव्य है उस तीर्थ में हरिनामक भगवान् का पूजादिक करते हुए निवास करें ॥५॥

**शालग्राममोघदिव्यफलदं देवं हरिक्षेत्रतोऽ**
**योध्यायां रघुपुङ्गवं गुणनिधिं श्रीरामचन्द्रं प्रभुम् ।**
**सत्स्थाने मथुराभिधाश्रमवरे श्रीबालकृष्णं परम्**

**मायायां मधुसूदनं सुरनरध्येयाङ्घ्रिपद्मं सदा ॥६॥**

हरिक्षेत्रतो हरिक्षेत्रे अत्र सार्वविभक्तिकस्तसिल्प्रत्ययः सप्तम्यर्थे, तेन हरि क्षेत्रनामकक्षेत्रे इत्यर्थः 'अमोघदिव्यफलप्रदं शालग्रामदेवम्' सकलमनन्तदिव्य विलक्षणफलप्रदायकं भगवन्तं शालग्रामनाम्ना प्रथितं परमात्मानम् प्रपूजयन् निवसेत् अर्थात् भक्तेभ्यः फलसमर्पकः शालग्रामभगवान् हरिक्षेत्रे प्रतिवसति, तत्र स्थितोभक्तः शालग्रामं प्रपूजयन् हरिक्षेत्रतीर्थे सर्वदानिवासं कुर्यादिति। तथा अयोध्यायां तन्नामकसाकेतापरपर्यायकतीर्थविशेषे रघुकुलेऽतिशयेन श्रेष्ठम्, गुणनिधिं गुणानां वात्सल्यादिसकलकल्याणगुणानां निधिं, हेयप्रत्यनीकसकल गुणाधारभूतम्, प्रभुं सर्वस्य जड़चिदात्मकजगतो नियामकम् श्रीरामचन्द्रं श्री सीतालक्षणशक्तिसमन्वितम्, भगवन्तं प्रपूजयन् प्रपन्नोभक्तः सर्वदाऽयोध्याया-मेव निवासं कुर्यात्। तदशक्तौ प्रदर्शिततत्तत्तीर्थे तदीयाधिष्ठातृपरमेश्वरं प्रपूज यन् तत्र तत्र निवासं कुर्यादिति । तथा मथुरानामकाश्रमतीर्थे, तत्सतां प्रपन्नानां स्थितियोग्यं स्थानं तस्मिन् सत्स्थाने मथुरानामकतीर्थविशेषे परं परमात्मानं जग तामेककारणं श्रीबालकृष्णं मनुष्यक्रीडां कुर्वन्तम् तत्र तं पूजयन् निवसेदिति ।

एवम् मायायां मायाख्यनगरे हरिद्वारनामकतीर्थे सदासर्वदा 'सुरनरध्ये याङ्घ्रिपद्मम्' मनुष्यैर्देवैश्चध्येयं ध्यातुं योग्यमङ्घ्रिपद्मं यस्य तादृशम् देवमनुष्या दिपूजितं मधुसूदननामकं भगवन्तं प्रपूजयन् तत्र प्रतिवसेदिति ॥६॥

हरिक्षेत्र में अर्थात् हरिक्षेत्र नामक तीर्थस्थान में अमोघ दिव्यफल को देनेवाले भगवान् शालग्रामजी निवास करते हैं। इस क्षेत्र में शालग्राम भगवान् का पूजनादिक करते हुए भक्त श्रीवैष्णव निवास करें। अयोध्या अर्थात् साकेत नामक तीर्थक्षेत्र में रघुकुल में श्रेष्ठ अनन्तकल्याण गुणों का समुद्र सर्वसमर्थ श्रीसीतापति भगवान् श्रीराम चन्द्रजी निवास करते हैं। इस अयोध्या तीर्थ में भगवान् श्रीरामजी का अर्चन पूजन करते हुए श्रीवैष्णवलोग सर्वदा निवास करें।

तथा साधु महात्माओं के समूहों से सेवित मथुरानामक तीर्थ में रुक्मिणी सहित भगवान् श्रीबालकृष्ण निवास करते हैं। तो इस मथुरातीर्थ क्षेत्र में भगवान् श्रीबालकृष्ण का सेवन पूजन करते हुए निवास करें। तथा माया तीर्थ में अर्थात् हरिद्वार नामक गङ्गा तट पर विराजमान पुण्य तीर्थ है उसमें देवता मनुष्यों से ध्यान



करने के योग्य चरणकमलवाले भगवान् श्रीमधुसूदन परमात्मा सदा निवास करते है। तो इसमें भगवान् श्रीमधुसूदनजी का अनुध्यान करते हुये निवास करें ॥६॥

**काश्यां भोगिशयं सनातनमथावन्त्यामवन्तीपतिम्**
**श्रीमद्द्वारवतीति नाम्निशुभदे श्रीयादवेन्द्रं मुदा ।**
**रम्ये श्रीव्रजनामके सुरनुतं गोपीजनानां प्रियम्**
**ब्रह्मेशादिकिरीटसेवितपदाम्भोजं भुजङ्गाश्रयम् ॥७॥**

एवं काश्यां वाराणस्यामर्थात् काशीनामकतीर्थक्षेत्रे सनातनं सदावर्तमान मुत्पादनिधनरहितं भोगिशयं भोगिशयनामकं देवं पूजयन् श्रीवैष्णवो निवसेत्। तथा अवन्त्यामवन्तीनगरे अवन्तीपतिं प्रपूजयन् निवसेत्। तथा 'श्रीमद्द्वारवती ति नाम्निशुभदे सर्वदा सर्वशोभासमन्वितद्वारिकेति नाम्ना लोकशास्त्रप्रसिद्धेऽति कल्याणप्रदे तीर्थे रुक्मिण्यादिसहितो भगवान् यादवेन्द्रो नित्यं सन्निहितः तादृश द्वारिकेति प्रसिद्धपुण्यक्षेत्रे भगवन्तं यादवेन्द्रं प्रपूजयन् निवासं कुर्यात्। अत्रैव भगवदायुधानां धनुर्बाणादीनामङ्कनं भवतीति श्रीवैष्णवलोकप्रसिद्धिरिति तत्र विश्रामद्वारकाभिधपुण्यक्षेत्रे 'मध्ये मार्गपरिश्रान्तो विश्रामं प्राप्य श्रृङ्गिणः । आश्रमे परमारामे कृष्णो वचनमब्रवीत्। त्वया संस्थापितां मूर्तिं विश्रामद्वारका पतेः । अदृष्ट्वा द्वारकायात्रा नराणां निष्फला भवेत्। यथा व्यासमनालोक्य का शीयात्रा हि निष्फला। तथैव द्वारकायात्रा ऋतेऽत्रागमनाद्भवेत्। इत्यादिपौराणि कमाहात्म्यप्रसिद्ध्या यथासुखं नित्यं निवसेदिति । तथा रम्येऽतिरमणीये व्रज नामकतीर्थविशेषे गोपीजनानां प्रियं गोपीजनवल्लभनामकं भगवन्तम् पुनः की दृशं ब्रह्मेशादिकिरीटसेवितपदाम्भोजम् हिरण्यगर्भमहादेवेन्द्रादिदेवानां शिरोभूष णैः सेवितचरणकमलम् तथा भुजङ्गाश्रयम् शेषनागासनकं सुरनुतं देववन्दितम् प्रपूजयन् व्रजे वसेत् इति ॥७॥

काशी वाराणसी नामक क्षेत्र में सनातन भोगिशयन नामक भगवान् सदा निवास करते हैं उन भोगिशय का सेवन पूजन करते हुए काशीतीर्थ में निवास करें। तथा अवन्ती नामक पुण्यतीर्थ में अवन्तीपति भगवान् निवास करते हैं। तो अवन्ती पति का पूजन करता हुआ अवन्ती तीर्थ में निवास करें। सर्वशोभा समन्वित कल्याण

प्रद द्वारिका नामक तीर्थ में यादवेन्द्र भगवान् निवास करते हैं। तो उनका सेवन करते हुए द्वारिका में निवास करें। अत्यन्त रमणीय व्रजनामक तीर्थ में गोपीजन प्रियनामक भगवान् रहते हैं वहां जो भगवान् हिरण्यगर्भादिक देवसमुदायों से सेवित हैं तथा शेषासनासीन हैं उनका सेवन पूजन करते हुए श्रीवैष्णव सन्तलोग निवास करें ॥७॥

**वृन्दावने सुन्दरनन्दसुनुकं गोविन्दमेवं त्वथ कालियहृदे ।**
**गोवर्धने गोपसुवेषधारिणं तथा भवघ्नेऽपि च पद्मलोचनम् ॥८॥**

**अथ वृन्दावने वृन्दा तुलसी तस्या वने अर्थात् वृन्दावननामकतीर्थविशेषे अद्यापि वृन्दावननाम्नैवलोकप्रसिद्धे सुन्दरनन्दसुनुकम् नन्दनामककश्चित्प्रसिद्धो यो गोपालस्तस्य पालितपुत्रं मनोहारिणं भगवन्तं श्रीकृष्णचन्द्रम् तत्र तीर्थे वसन्तं विरक्तश्रीवैष्णवो नतिपूजनादिना तं प्रसादयन् वसेदिति । अथ कालियहृदे-वृन्दावनपरिसरे यमुनातटे कालियहृदनामकतीर्थे वसन्तं गोविन्दं तदाख्यं भगवन्तं परमात्मानं पूजयन् तत्र वसेदिति । तथा गोवर्धने गोवर्द्धननामकातीव पुण्यजनकतीर्थे गोपसुवेशधारिणमर्थात् गोपवेषधारिनामकं भगवन्तं पूजनादिना प्रसादयन् श्रीवैष्णवोगोवर्द्धनतीर्थे वसेदिति । अथ भवघ्ने भवं हन्ति जन्मजरामरणादिलक्षणसंसारनामकभवघ्नाख्यतीर्थविशेषे पद्मलोचनं पद्मलोचननामकं भगवन्तं प्रपूजयन् तादृशतीर्थे वसेदिति ॥८॥**

वृन्दावननामवाला तीर्थ में जो आज भी वृन्दावन नाम से प्रसिद्ध है नन्द सुनु नाम से प्रसिद्ध (नन्द नाम के एक गोपश्रेष्ठ हुए। उनका पालित पुत्र भगवान् श्रीकृष्ण कहलाते) भगवान् नन्दसुनु का उपासन करते हुए महात्मा लोग निवास करें। और काली हृद नामक तीर्थ में जोकि वृन्दावन के समीप यमुना तटपर विराजित है उस तीर्थ में भगवान् सदा विराजते हैं अतः उस तीर्थक्षेत्र में भगवान् श्रीगोविन्दजी का भक्तिभाव करते हुए निवास करें। और गोवर्द्धन नामक पुण्यतीर्थ में गोपवेष को धारण करनेवाले गोपवेषधारी नामक भगवान् विराजते हैं अतः वहां गोपवेषधारी का पूजन करते हुए श्रीवैष्णवलोग इस तीर्थ में निवास करें। एवं संसार का विनाशक होने से भवघ्न भवनाशक नामक तीर्थ में भगवान् पद्मलोचनजी निवास करते हैं तो वहां उनका पूजन करते हुए श्रीवैष्णव इस तीर्थ में निवास करें ॥८॥

**शारिं तथा गोमत एव पर्वते तथा हरिद्वार ऋजुं जगत्पतिम् ।**



**तीर्थे प्रयागे वत माधवाभिधं तथा गयायां तु गदाधरं परम् ॥९॥**

**यथेतः पूर्वं प्रतिपादितं तथा तेनैव प्रकारेण गोमताख्यपर्वते शारिं शारिनामकभगवन्तं स्थितं पूजयन् मुमुक्षुः निवासं कुर्यादिति क्रियान्वयः । तथा तथैव हरिद्वारे हरिद्वारनामकप्रसिद्धतीर्थे ऋजुसरलस्वभावकं जगत्पतिं जगत्पतिनामकभगवन्तं पूजयन् प्रतिवसेत् । तथा प्रयागे गङ्गायमुनयोः संगमे तीर्थराजे माधवनामकं भगवन्तं संस्तुवन् निवासं कुर्यात् । तथा गयायां गयाख्यतीर्थे पितृणामुद्धारके गदाधरं गदाधरनामकं परमात्मानं पूजयन् तत्र वसेदिति ॥९॥**

गोमत नामक पर्वत पर अर्थात् गोमत तीर्थ में शारि नामक भगवान् निवास करते हैं, वहाँ भगवान् श्रीशारीजी का पूजनादिक करते हुए निवास करें। तथा हरिद्वार तीर्थ में सरल स्वभाव वाले भगवान् जगत्पतिजी रहते हैं वहाँ भगवान् जगत्पतिजी का पूजनादिक करते हुए श्रीवैष्णव निवास करें। और त्रिवेणी सङ्गम पर स्थित प्रयाग राज तीर्थ में भगवान् वेणीमाधवजी निवास करते हैं वहाँ श्रीमाधव भगवान् का पूजन करते हुए निवास करें। और मगधदेश में स्थित गया नामक तीर्थ विशेष में जो कि पितरों का उद्धारक क्षेत्र है उस गया तीर्थ में भगवान् गदाधर का निवास है। वहाँ गदाधरजी का पूजन में तत्पर श्रीवैष्णवलोग निवास करें ॥९॥

**गंगासागरसङ्गमेति शुभदेविष्णुंतथाराघवम्-**
**शश्वद्भूरिगुणालयेमुनिवृते श्रीचित्रकूटे विभुम् ।**
**नन्दिग्राम उदारकीर्तिनिकरे श्रीराक्षसघ्नं प्रभुम्-**
**रम्ये श्रीमतिविश्वरूपिणमथोक्षेत्रेप्रभासेऽमले ॥१०॥**

**अतिशुभप्रदे गङ्गासागरसङ्माख्यतीर्थे भगवन्तं सर्वव्यापकं विष्णुपरमात्मानं भजन् निवासं कुर्यात् । तथा मुनिवृते मननशीलसाधुभिः सर्वथाऽवृते श्रीचित्रकूटाख्यमुख्यतीर्थे भूरिगुणालये समस्तकल्याणगुणसागरे विभुं सर्वव्यापकं सर्वनियन्तारं रघुकुलोद्भवं जीवसमूहनियन्तारं शश्वत् निरन्तरं पूजयन् निवसेदिति । तथा उदारकीर्तिनिकरे, अतिप्रभूतकीर्तिसमुदायस्याधारभूते नन्दिग्रामाख्यतीर्थविशेषे राक्षसघ्नं राक्षसविनाशकं प्रभुं भगवन्तम् अर्थात् राक्षसघ्ननामकं श्रीरामं पूजयन् तत्र निवसेत् । तथा रम्ये रमणीये मनोज्ञे श्रीमति सर्वशोभास्पदे**

**प्रभासक्षेत्रे अमले प्रभासनामकतीर्थविशेषे विश्वरूपिनामकं भगवन्तम् आराध यन्निवसेत् ॥१०॥**

गङ्गासागर तीर्थ में जोकि गङ्गा तथा पूर्व समुद्र का सङ्गम स्थान है में सकल ऐहिक पारलौकिक कल्याण को देनेवाले श्रीविष्णु तथा मननशील महात्माओं से संकुलित सकल कल्याण गुणों का आधार चित्रकूट नामक पुण्यतीर्थ में श्रीराघवेन्द्र सरकार स्वयं विराजमान रहते हैं तथा उदार कीर्तियुक्त नन्दिग्राम तीर्थ में राक्षसघ्न नामक प्रभु विराजते हैं। और प्रभास नामक क्षेत्र में अतिसुन्दर श्रीविश्वरूपी भगवान् विराजमान रहते हैं। इन सभी तीर्थों में विराजमान उन उन भगवान् का पूजन करते हुए श्रीवैष्णवगण निवास करें ॥१०॥

**श्रीकूर्माचल उत्तमे च सदयं कूर्मं सुरेशेडितम्**
**नीलाद्रौ पुरुषोत्तमं त्वथ महासिंहं च सिंहाचले ।**
**श्रीमन्तं तुलसीवने तु गदिनं सर्वार्थदं तत्प्रिये**
**क्षेत्रे श्रीकृतशौचके तु सततं पापापहंचेश्वरम् ॥११॥**

**उत्तमे श्रीकूर्मेऽचले कूर्मनामकपर्वते सुरेशेडितमिन्द्रस्तुतं श्रीकूर्मनामकं भगवन्तम् तथा नीलाद्रौ नीलनामकपर्वते पुरुषोत्तमनामकं भगवन्तम् अथ सिंहाचले एतन्नामके पर्वते यत्र भगवान् नृसिंह आविर्भूयतिरोभूतस्तस्मिन् पर्वते महासिंहं नृसिंहनामकं भगवन्तम्। तथा तत्प्रिये भगवत् प्रिये क्षेत्रे तुलसीवने सर्वार्थदातारं गदिनं गदिनामकं भगवन्तम्। तथा कृतशौचके कृतशौचनामक पर्वते, ईशं सर्वस्येशितारम् पापापहम्, सर्वपापनिवारकम् पापहरनामकं भगवन्तं प्रपूजयन्निवसेदिति ॥११॥**

कूर्माचल में परमदयावान् श्रीकूर्म भगवान् हैं जोकि इन्द्रादि सकल देव तथा मनुष्य प्रभृतिकों से पूजित हैं। तथा नीलाद्रि पर्वतनामक तीर्थ में श्रीपुरुषोत्तमजी विराज मान हैं। तथा सिंहाचल नामक पुण्यतीर्थ में श्रीमहासिंह भगवान् विराजित हैं। तथा तुलसीवन नामक तीर्थ में श्रीगदी भगवान् रहते हैं। जो भक्तों का सकल मनोरथ को सिद्ध करनेवाले हैं। और 'कृतशौचक' नामक तीर्थ में श्रीपापापह नामक भगवान् हैं। जो भक्तों के सकल पाप को विनष्ट कर देते हैं अतः उन उन



क्षेत्रों में उन उन देवों का पूजन करते हुये निवास करें ॥११॥

**श्वेताद्रौत्वथ सिंहरूपिणमथो श्रीधर्मपुर्यां तथा**
**योगानन्दमशेषदेवसुनतं श्रीकाकुले तु प्रभुम् ।**
**देवैर्वन्द्यमथान्ध्रनायकमिह श्रीदं तथाऽहोबले**
**तस्मिन् श्रीगरुडादिसंज्ञ उचिते देवं हिरण्यार्दनम् ॥१२॥**

**अथानन्तरम् श्वेताद्रौ-श्वेतनामकपर्वतीयतीर्थे सिंहरूपिणं सिंहप्रकृतियुक्तं भगवन्तं पूजनीयम्। अथोतथा धर्मपुर्याम् धर्मपुरीनामके तीर्थविशेषे अशेषदेव सुनतं, समस्तेन्द्रादिदेवसमूहैर्नमस्कृतम् श्रीयोगानन्दनामकं भगवन्तम्। अथ श्री काकुले श्रीकाकुलनामकतीर्थे देवैर्वन्द्यं सकलदेवादिभिः स्तुतं स्तूयमानम् आन्ध्रनायकम् आन्ध्रप्रदेशस्यनायकं पालकं प्रभुं भगवन्तम्। तथा यथापूर्वं स्थानं तदधिष्ठितदेवस्यनामादिकञ्च कथितं तथैव अहोबलनाम्नाप्रसिद्धे गरुडनामकतीर्थविशेषे पर्वते हिरण्यार्दनं हिरण्यासुरनामकदैत्यविनाशकं प्रभुमाराध यन्निवसेदिति ॥१२॥**

श्रीश्वेताचल नामत तीर्थ में भगवान् श्रीसिंहरूपी निवास करते हैं। और श्री धर्मपुरी नामक तीर्थ में श्रीयोगानन्द नामक भगवान् नित्य सन्निहित रहते हैं। तथा श्रीकाकुल नामक तीर्थ विशेष में सर्व इन्द्रादिक देवों से सतत वन्दित श्रीआन्ध्रनायक भगवान् सर्वदा निवास करते हैं। एवं अहोबल नाम से लोकशास्त्र प्रसिद्ध श्रीगरुडाद्रि नामक पर्वत पर हिरण्यासुर का विनाशक भगवान् हिरण्यार्दनजी रहते हैं। इन उपर्युक्त तीर्थों में विद्यमान देवों की आराधना करते हुए मुमुक्षु विरक्त श्रीवैष्णव श्रद्धा विश्वासपूर्वक धर्मबुद्धि से निवास करें ॥१२॥

**श्रीविठ्ठलं तं किल पाण्डुरङ्गे श्रीवेङ्कटाद्रौ तु रमा सखं च ।**
**नारायणं श्रीमति यादवाद्रौ नृसिंहमित्थं घटिकाऽचलेऽपि ।१३।**

**पाण्डुरङ्गे महाराष्ट्रस्थितपाण्डुरङ्गनामकतीर्थविशेषे किलेति निश्चितम् तं सर्वत्र सर्वदा प्रसिद्धं श्रीविठ्ठलनामकं भगवन्तम्। तथा वैङ्कटाद्रौ वेङ्कटनामके पर्वतात्मकतीर्थे रमासखं रमालक्ष्मीः सखा विद्यते यस्य तादृशं भगवन्तम् तथा श्रीमति यादवाद्रौ सर्वदाशोभाधनधान्यादियुक्ते यादवनामकपर्वततीर्थे श्रीनाराय**

णनामकं भगवन्तम् तथा घटिकाचले-एतन्नामके पर्वते श्रीनृसिंहं सर्वदा पूजयद्भिरेवनिवासः कर्तव्यः। एतेषु तीर्थविशेषेषु समुपदिष्टभगवत्पूजनादिकं कुर्वन् निवासं कुर्यादिति भावः ॥१३॥

पाण्डुरङ्ग में अर्थात् पाण्डुरङ्ग नामक तीर्थ में भगवान् श्रीविठ्ठलेशजी रहते हैं। तथा वेङ्कटनामक पर्वत पर भगवान् श्रीनिवासजी रहते हैं। तथा सकल शोभा सम्पन्न यादवाद्रि यादवपर्वत पर श्रीनारायण भगवान् एवं घटिकाचल पर्वत पर भगवान् श्रीनृसिंहजी रहते हैं। इन सबका पूजनादिक करते हुए इन सब स्थानों में निवास करें ॥१३॥

**सुरेन्द्रवन्द्यं वरदं त्वहर्दिवं सुनिर्मले श्रीशुभवारणाचले ।**
**काञ्च्यां तथा श्रीकमलायताक्ष्यं समर्चनीयं बुधवैष्णवोत्तमैः ॥१४॥**

तत्र श्रीशुभे श्रिया सर्वदा शोभायमाने वारणाचले वारणनामकपर्वते तथा निर्मले सर्वथादोषात्मकमलरहिते यद्वा तत्र निवसतां सर्वदा पापहारके अहर्दिवमहोरात्रं प्रतिदिनम् सुरेशवन्द्यम् इन्द्रादिभिः सर्वदापूजनीयम् वरदं भक्ताय वरं मनोभिलषितफलप्रदातारम् वरदनामकं भगवन्तम्। तथा काञ्च्यांपुर्याम् काञ्चीनामतोलोकप्रसिद्धनगरे वसन्तम् श्रीकमलायताक्षम् प्रफुल्लितकमलवत् विकसितनेत्रकमललोचननामकं भगवन्तं बुधवैष्णवैः बुधैः पण्डितैर्वैष्णवश्रेष्ठैः समर्चनीयं पूजनीयम् तत्र तत्र तं तं देवविशेषं पूजयद्भिरेव तत्तत्स्थाने सर्वदा निवासः करणीय इति सारः ॥१४॥

सर्वपापात्मक दोष से रहित होने के कारण अतिनिर्मल तथा सर्वप्रकारक शोभा से युक्त श्रीवारण नामक पर्वत पर इन्द्रादि सकल देवों से पूजित वरदनामक भगवान् निवास करते हैं। तथा काञ्चीपुर में अर्थात् काञ्चीनाम से लोक में प्रसिद्ध नगर में विद्वान् वैष्णवों से पूजा करने के योग्य विकसित कमल के समान नेत्रवाले कमलनयन नामक भगवान् निवास करते हैं। इन सब क्षेत्रों में उपर्युक्त भगवान् का पूजन सेवन करते हुए श्रीवैष्णवलोग निवास करें ॥१४॥

**तोताद्रिसंज्ञादिषु वैष्णवोत्तमैरेवं तता तुङ्गशयादिकं प्रभुम् ।**
**कार्यो निवासो नितरां शुभार्थिभिराराधयद्भिः सकलार्थदायिनम् ॥१५॥**

इत्यानन्दभाष्यकारजगद्गुरुश्रीरामानन्दाचार्ययतिराजप्रणीते 'श्रीवैष्णवमताब्जभास्करे' श्रीवैष्णवनिवासस्थाननिरूपणात्मको दशमप्रश्नोत्तराख्यो दशमः परिच्छेदः ॥१०॥



एवं पूर्वकथितप्रकारेण तोताद्रिसंज्ञादिषु तोताद्रिनामकतीर्थविशेषेषु सकलार्थदायिनं समभिप्सितसकलपदार्थदातारम् तुङ्गशयादिकं प्रभुम् तुङ्गशयनामकं प्रभुं सर्वसमर्थभगवन्तम् आराधयद्भिः प्रपूजयद्भिराराधकैः, नितरांशुभार्थिभिर्मोक्षकामनावद्भिः वैष्णवोत्तमैः प्रपत्तिनिष्णातैः श्रीवैष्णवैः पूर्वोक्तप्रकारेण प्रदर्शिततत्तत्तीर्थे निवासः कर्त्तव्यः। अर्थात् यथोक्ततीर्थेषु स्थितं पूर्वोक्तं भगवन्तं पूजादिकं कुर्वन् श्रीवैष्णवः सर्वदा निवशेत् इति भावः।

अत्रान्तिमश्लोके तीर्थबोधक 'तोताद्रिसंज्ञादिषु' इत्यत्र तथा 'तुङ्गशयादिकम्' इत्यत्र देवबोधकपदे आदिपदं प्रक्षिप्तं तेन कामिशिकी तीर्थे नृसिंहबलिपुरेमहाबलमिति बलिपुरम् प्रभृतिकतीर्थेषु महाबलप्रभृतिदेवानामाराधनपूर्वको निवासः कर्त्तव्य इति सङ्गृहीतो भवति। एवञ्च मुमुक्षुः श्रीवैष्णवो वैकुण्ठादिदेशेषु श्रीरामादनन्यत्वेनवासुदेवप्रभृतीन् सम्यक् पूजयन् तत्तत्तीर्थे निवासं कुर्यादिति संक्षेपः ॥१५॥

एवं पूर्वोक्तक्रम से तोताद्रिक्षेत्र में स्थित सर्वार्थप्रद तुङ्गशायी भगवान् की आराधना करते हुये शुभेच्छु उत्तम श्रीवैष्णवों को सन्नियतचित्त होकर उस पुण्य क्षेत्र में निवास करना चाहिये। श्लोक स्थित आदि शब्द से अन्य तीर्थों का सङ्ग्रह होता है वे अन्य साम्प्रदायिक दिव्य प्रबन्धों से जान लेना चाहिये विस्तारभय से सङ्ग्रह नहीं कर रहे हैं ॥१५॥

## 卐 ग्रन्थफलश्रुतिः 卐

**सदानुसन्ध्येयमिमं त्रिकालं मुमुक्षुभिस्तत्परमार्थमित्थम् ।**
**ज्ञात्वा नचैवास्ति सुवेदनियं जिज्ञासुभिस्तैरवशिष्यमाणम् ॥१॥**

ग्रन्थफलश्रुतिं प्रदर्शयत्याचार्यः-'सदानुसन्ध्येयम्' इत्यादिचतुर्भिः। इत्थं पूर्वोक्तप्रकारेण प्रदर्शितं तन्महार्थजातमिमं परमार्थभूतमनेकशास्त्रसागररूपत्वान् मोक्षसाधनं मुमुक्षुभिस्त्रिकालं सदानुसन्ध्येयम्। तैर्जिज्ञासुभिः पूर्वप्रतिपादितं सर्वं ज्ञात्वा सुवेदनीयमवशिष्यमाणं नचैवास्ति ज्ञेयं नावशिष्यते किञ्चिदित्यर्थः ॥१॥

पूर्वोक्तक्रम से दशों प्रश्नों के उत्तर देने के वाद आचार्य प्रवर फलश्रुति का उपदेश करते हैं-'सदानुसन्ध्येयम्' इत्यादि चार श्लोकों से। सर्वशास्त्र साररूप से समुपदिष्ट इस दिव्यप्रबन्ध का मुमुक्षुओं को त्रिकाल अनुसन्धान करना चाहिये

तत्वज्ञान प्राप्त करने के लिये । क्योंकि इसमें प्रतिपादित तत्वों को जानने के वाद जानने योग्य संसार में कुछ भी नहीं रहेगा ॥१॥

**गुरुद्रुहे नो न सठाय चेदं न नास्तिकायोपदिशेत् कदाचित् ।**
**नावैष्णवायापि रहस्यमेतन्न चाथ दैन्याहतवेदनाय ॥२॥**
**जितेन्द्रियः प्रपन्नः सन् बुधः श्रीजानकीपतिम् ।**
**अनुष्ठाय मतं चेदं परमं स्थानमाप्नुयात् ॥३॥**

इदं पूर्वोपदिष्टमेतद्रहस्यं गुरुद्रुहे गुरुद्रोहनिरते शठाय नास्तिकाय तथा दैन्याहतवेदनायातिमन्दबुद्धित्वादुपदेशधारणाक्षमाय तथैवावैष्णवाय साम्प्रदायिकरीत्या सदाचार्यतोऽगृहीतदीक्षाकस्य कदाचिदपि नोपदिशेत् 'विष्णुदीक्षाविहीनस्य नाधिकारः कथाश्रवे' इतिमहर्षिव्यासोक्तेः ॥२॥ पूर्वोदीरितदिशा बुधो जितेन्द्रियः श्रीवैष्णवः प्रपन्नसन् श्रीजानकीपतिमनुष्ठाय सम्यगाराध्येदञ्च परमवैदिक श्रीवैष्णवोत्कृष्टमतं समनुष्ठीय परमं श्रीसाकेताख्यं दिव्यधाममाप्नुयात् ॥३॥

इस परमरहस्यभूत दिव्यादेश को गुरुद्रोही शठ नास्तिक मन्द बुद्धि तथा विधिपूर्वक सदाचार्य श्रीवैष्णव से जिह्नोंने दीक्षा न लिया हो उहें कभी भी उपदेश न करें 'विष्णु दीक्षा विहीनस्य नाधिकारकथाश्रवे' ऐसा श्रीसम्प्रदाय (श्रीरामानन्दसम्प्रदाय) के सातवें आचार्य भगवान् बादरायण व्यासजी ने कहा हैं, अतः अदीक्षितों को उपदेश फलप्रद नहीं होता है । इसलिये मुमुक्षुओं को सदाचार्य श्रीवैष्णव से सविधि दीक्षा लेकर सदुपदेश श्रवण तथा आचरण द्वारा परमपद का भागी बनना चाहिये ॥२॥

श्रीसीतारामजी के शरणापन्न जितेन्द्रिय होकर इस उत्तम श्रीवैष्णवमत का अनुसरण करने से मनुष्य परमपद श्रीसाकेताख्य दिव्यधाम को प्राप्त कर लेगा अर्थात् मुक्त होगा ॥३॥

**रामानन्दप्रोक्तः श्रीवैष्णवमताब्जभास्करो भवतु ।**
**आनन्दभाष्यसोदर एषोऽन्तस्तमो विनाशाय ॥४॥**

इत्यानन्दभाष्यकारजगद्गुरुश्रीरामानन्दाचार्ययतिराजप्रणीतः
श्रीवैष्णवमताब्जभास्करः समाप्तः

卐 श्रीरामः शरणं मम 卐



'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते वीरपुरुषाणि भवन्त्यायुष्मत्पुरुषाणि चाध्येतारश्च मङ्गलयुक्ताः स्युः' इतिमहर्षिपतञ्जलिप्रोक्तेः ग्रन्थान्ते स्वग्रन्थानामनिदर्शनपूर्वकमाशीर्वचनं वितनोति-'रामानन्दप्रोक्तः' इत्यादि । एषो निखिलशास्त्रसाररूपेणसंगृह्योपदिष्टो दिव्यप्रबन्ध आनन्दभाष्यसोदरो येनाचार्यचूडामणिप्रस्थानत्रयानन्दभाष्यकारजगद्गुरुश्रीरामानन्दाचार्येण प्रोक्तो जगद्गुरुश्रीसुरसुरानन्दाचार्यायोपदिष्टस्तत्त्वं किमिति दशप्रश्नोत्तररूपेण श्रीवैष्णवमताब्जभास्कर एतदाख्यातिप्रथितसर्वकृत्योपदेशनपरप्रबन्ध एतेनानन्दभाष्यश्रीवैष्णवमताब्जभास्करस्यैककर्तृत्वं सूचितम् अध्येतृवर्गाणामन्तस्तमो जन्मजन्मान्तरीयकर्मबन्धरूपहृद्ग्रन्थिविनाशाय भवतु ।

'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि दृष्ट एवात्मनीश्वरे ॥'

इति महर्षिबादरायणव्यासोक्तेः । एतेन प्रकृतग्रन्थसमनुशीलनपरो जनो सायुज्यमुक्तिभाग् भवतीति सूचितम् ॥४॥

इत्यानन्दभाष्यकारजगद्गुरुश्रीरामानन्दाचार्यपीठप्रधानपीठाचार्यजगद्गुरुश्रीरामानन्दाचार्यश्रीरामप्रपन्नाचार्ययोगीन्द्रसमाश्रितस्वामिआनन्दभाष्यसिंहासनासीनजगद्गुरुश्रीरामानन्दाचार्यश्री
रामेश्वरानन्दाचार्यकृताश्रीवैष्णवमताब्जभास्करस्यप्रभाख्याटीका

शं भवतु सर्वजगतः

यह प्रस्थानत्रयानन्दभाष्यों के उपदेश के वाद जगद्गुरु श्रीरामानन्दाचार्यजी यतिसम्राट् के द्वारा जगद्गुरु श्रीसुरसुरानन्दाचार्यजी को उपदिष्ट श्रीवैष्णवमताब्जभास्कर नामक श्रीवैष्णवों का सर्वस्वभूत दिव्यप्रबन्ध अध्ययन-अनुशीलन करनेवालों के हृदय स्थित अन्धकारों को दूर करनेवाला अर्थात् सायुज्यमुक्ति देनेवाला हो ॥४॥

जगद्गुरुश्रीरामानन्दाचार्यश्रीरामप्रपन्नाचार्ययोगीन्द्रकृपापात्र आनन्दभाष्यसिंहासनासीन जगद्गुरु
श्रीरामानन्दाचार्यश्रीरामेश्वरानन्दाचार्यकृतः श्रीवैष्णवमताब्जभास्कर किरणः समाप्तः

श्रीरामार्पणमस्तु

**मायादिकुतर्कजालरचितव्याख्यानसंमूर्छितां**
**यो व्याख्यासुधया त्रयीं भगवतीं सञ्जीवयन् राजते ।**
**तस्याचार्यशिरोमणेर्विजयिनो वादाहवे श्रीमतो**
**रामानन्दमुनेर्वचोऽखिलजगत्क्षेमाय सञ्जायताम् ॥**

## 卐 जगद्गुरुश्रीरामानन्दाचार्यश्रीरघुवराचार्यानुगृगीताः 卐

जायामा मैथिलीतः स्मितशुचिवदनोहासभासाभिरामः

श्यामः सीता सखीनां हृदिरतिसुकरः कासते यश्च कामः ।

वामः श्रौतारिशिष्टौ दशमुखवदनोद्दामशोभाभिरामः

श्रीरामः शं तनोतु श्रुतिरतिमुनिभिर्मन्यते मानकामः ॥

औद्धत्याधूतधर्मश्रुतिरतिरहितक्रूरकर्मप्रहारी

हारीकामारिवेधोमुनिजनमनसा जानकीहृद्विहारी ।

वारिक्लेशाग्निकाण्डे रघुकुलतिलकः कीर्त्यते योऽसुरारि

र्धारी मुक्तिप्रसादं शुभमिह तनुतां मारुतीशः खरारिः ॥

प्रथितभानुकुलाम्बुजभास्करं जनकाजा हृदयैकविभूषणम् ।

शिवविरञ्चिनुताङ्घ्रिसरोरुहं रघुपतिं सततं प्रणमाम्यहम् ॥

सव्याङ्के च विभाति भूतलसुता धृत्वा करे पङ्कजं

ग्रीवायां स्थलपद्मनिर्मितमहाहारं दधानासती ।

पादाग्रे नतमस्तकः कपिवरः पार्श्वे स्थितो लक्ष्मणो

यस्यायं स रघूत्तमः श्रुतिनुतः पायात्सदा स्वाश्रितान् ॥

यज्ञानामवरोधतः श्रुतिपथप्रध्वंसनात्तत्क्षणे

पापाचारचणैरियंखलगणैर्व्याप्ताक्षितिर्दुःखिता ।

दुखाद्येनविमोचिता गुरुरसौप्राचार्यवर्यो महान्

रामानन्दयतिर्जगत्त्रयगुरुर्वोऽव्यात्सुरेन्द्रार्चितः ॥

अज्ञानाम्बुधिमग्नमानवकृते वेदान्तसूत्रे व्यधान्

मायिध्वान्तनिराकरिष्णुविशदं स्वानन्दभाष्यं शुभम् ।

येनार्येण कृतं समोपनिषदि प्रेम्णा च भाष्यं बृहद्

रामानन्दयतिर्जगत्त्रयगुरुर्वोऽव्यात्सुरेन्द्रार्चितः ॥

जैनारण्यगजेन्द्रदारणपटुः कण्ठीरवो भीषणो बौद्धानां बलहारकोद्विजगणानान्धर्मसंयोजकः ।

गीताभाष्यकृदेषदैशिकपतिर्योगीन्द्रचूडामणी रामानन्दयतिर्जगत्त्रयगुरुर्वोऽव्यात्सुरेन्द्रार्चितः ॥

यं ब्रह्मेति गदन्ति वेदनिपुणा वेदान्तिनः सर्वदा सांख्यज्ञैः पुरुषस्तथाक्षचरणैः कर्तेति यो गीयते ।

भाट्टैः कर्म च काव्यकोविदचयैर्मुख्योरसः कीर्तितो विश्वेस्मिन्सुजनानस एव भगवान् पायाद्घृणांपतिः ॥

श्रीरामेण तदात्म्यतामुपगतां कल्याणधामां शुभां सर्वैश्वर्ययुतां गुणैकनिलयां लीलाजगद्धारिणीम् ।

आम्नायान्तविभावनीयचरितां ब्रह्मादिभिर्वन्दितां श्रीदेवीं मिथिलाधिराजतनयामम्बां किशोरीं भजे ॥

प्राप्योपायपरां पूर्णां प्रपन्नामरवल्लरीम् । श्रीरामाऽभिन्नरूपां तां श्रियं शश्वत्समाश्रये ॥



**कृपया ध्यान दें**-इसे पृष्ठ ४१९ पंक्ति १० के आगे से पढ़ें-

卐 सर्वेश्वरश्रीसीतारामाभ्यां नमः 卐

श्रीहनुमते नमः

प्रस्थानत्रयानन्दभाष्यकाराय नमोनमः

# श्रीवैष्णववस्त्रमीमांसा

का

## 卐 संक्षिप्तसार 卐

प्रस्तोता-आनन्दभाष्यसिंहासनासीनजी

**सीतारामसमारम्भां रामानन्दार्यमध्यमाम् । रामप्रपन्नगुर्वन्तां वन्दे गुरुपरम्पराम् ॥**
**आनन्दभाष्यकर्तारमानन्दपथदर्शकम् । आनन्दनिलयं वन्दे रामानन्दार्यसद्गुरुम् ॥**

वस्-आच्छादने धातु में ष्ट्रन् प्रत्यय के योग से वस्त्र शब्द निष्पन्न होता है इसका परिधान, कपड़ा, कपड़े, पहनावा, पोशाक, वेश-भूषा आदि कई अर्थ कोशकारों ने प्रदर्शित किया है। अनादि काल से ही वस्त्र या वेश-भूषा आदि का व्यवहार होता आया है अभी भी हो रहा है। जब से भारतीय संस्कृति या सभ्यता में देवपूजा अथवा श्रेष्ठजनों की पूजा का विधान उपलब्ध होता है प्रायः सभी पूजाविधानों में वस्त्र समर्पण का वाक्य अनिवार्यरूप से उपस्थित होता ही है अतः वस्त्र शब्द भारतीय संस्कृति के परिधानों में एक विशेष महत्व रखता है या भारतीय संस्कृति सभ्यता का अनिवार्य अंग वस्त्र है। इसी परिधान के द्वारा किस वर्गविशेष के व्यक्ति हैं ? यह अनायास जाना जा सकता था। समय या कार्यकलाप परिस्थिति ने कुछ परिवर्तन का रूप धारण किया तदनुरूप पहनावा पोशाक आदि में भी परिवर्तन होता आया वर्तमानकाल में तो वस्त्र के स्वरूप ने एक अन्यथारूप ही धारण कर लिया है। उन परिधानों में सज्ज सज्जनों को देखकर यह निश्चय कर पाना कठिनसा हो रहा है कि किस वर्गविशेष के या आश्रम विशेष के ये सज्जन हैं ? भारतीय संस्कृति के मूल पहचान परिधान का स्वरूप अब उतना तक स्खलित हो चुका है कि द्विजाति के अनिवार्य संस्कार यज्ञोपवीत आदि कार्यों में प्रथम वपन अर्थात् क्षौर अर्थात् मुड़ मुड़ाना अनिवार्य है ऐसा- **'आत्मनः शुद्धिकामो वा भक्तिमुक्त्यादि हेतवे । दीक्षादानादि यज्ञेषु प्राग् वपनं हि कारयेत् ॥'**

प्रभृति स्मृतिशास्त्रों के व्यवस्था की आज कोई गिनती नहीं। बाल बनवाना-मुण्डन करना धोती पहनना आज एक अपमान का विषय माना जाना लगा है। यह तो सामान्यजनों की बात हुई जो सांसारिक स्वरूप को क्षणिक एवं मुक्ति के बाधक मानकर विरक्तपना का अनुभव करते हुए किसी सम्प्रदाय विशेष से क्षिक्षा-दीक्षा प्राप्तकर भगवत् सान्निध्य प्राप्त करने हेतु आगे बढ़े हैं वे लोग भी उस सम्प्रदाय विशेष में वेदादिशास्त्र विहीत पूर्व परम्परा से प्रचलित वेश-भूषा की घोर उपेक्षाकर मनमुखीपना से वर्तन करते हुए देखे जा रहे हैं। इसमें अपनेराम का यही छोटा सा अनुभव है कि पाश्चात्य संस्कृति के संसर्ग से संस्कार भ्रष्टपना ही है।

**'अयं तु युग धर्मो हि वर्तते कस्य दूषणम्'** युगधर्म की ओर दृष्टिपात कर सहन करने के सिवाय अपने पास में रह ही क्या गया है ?

प्रकृत में वाह्य विशेष चर्चा सम्प्रति अपनेराम का लक्ष्य नहीं है। यों प्रवास में बहुत ही कम निकल पाते या निकलते हैं। फिर भी यदा-कदा निकल जाते हैं तो साधकवर्ग अपनी जिज्ञासा व्यक्त कर देते हैं यह प्रसंग बहुत दिन पूर्व से ही उपस्थित होता आया है। जिनमें श्रीवैष्णववस्त्र

का स्वरूप श्रीवैष्णवतिलक का स्वरूप एवं श्रीवैष्णववपन का स्वरूप ये तीन प्रसंग प्रधानतया उपस्थित होते रहते हैं उन उन विषयों पर संग्रहात्मक निबन्धों को तैयार किये थे पर समय एवं संयोग ऐसा नहीं बन पा रहा था कि उन्हें प्रकाशित कर लोगों के जिज्ञासा समाधान हेतु शास्त्रीय प्रमाणों को उपस्थित किया जाय। पिछले २००२ के हिन्दू राष्ट्र नेपाल के धर्म प्रचार-प्रसार-एवं श्रीआनन्दभाष्यकारजी के ७०२ वीं जयन्ती प्रसंग हेतु श्रीजनकपुरधाम नेपाल की यात्रा प्रसंग में इन तीनों श्रीवैष्णववस्त्र श्रीवैष्णवतिलक एवं श्रीवैष्णववपन सम्बन्धि विषयों पर अपने श्रीसम्प्रदाय-श्रीरामानन्दसम्प्रदाय के तपस्वी वन्धुओं के द्वारा प्रयागराज तथा श्रीजनकपुरधाम में विशेष जिज्ञासा उपस्थापित होने पर श्रीवैष्णववपनमीमांसा एवं श्रीवैष्णावतिलकमीमांसा इन दोनों को अतिसंक्षिप्त रूपसे प्रकाशित कर पाये। यों सहयोगशिष्ट नियम के होते हुए भी इन तीनों का त्रिक् एक साथ प्रकाशित नहीं हो सके दो (श्रीवैष्णवतिलकमीमांसा एवं श्रीवैष्णववपनमीमांसा) के समाज में वितरित एवं प्रचारित होने के बाद श्रीवैष्णववस्त्रमीमांसा के विषय में विशेष दबाव पड़ गया अतः पूर्व क्रमानुसार अतिसंक्षिप्त रूप से ही श्रीवैष्णववस्त्रमीमांसा को अतिसंक्षिप्तरूप से ही उपस्थापित किया जा रहा है।

श्रीवैष्णव-श्रीरामानन्दीय श्रीवैष्णव की वेश-भूषा कैसी थी या होनी चाहिये ? यह एक यक्ष प्रश्न है। भारतीय संस्कृति के स्वाध्यायीवर्गों को यह विदित ही है-कि-'**चत्वारः-आश्रमाः ।७११**' इस श्रीवशिष्ठधर्मशास्त्र के निर्णयानुसार आश्रम चार ही हैं जोकि अगले ७१२ सूत्र '**ब्रह्मचारी गृहस्थ वानप्रस्थ परिव्राजकाः**' से अतिस्पष्ट है। ब्रह्मर्षि श्रीवशिष्ठजी की आश्रमधर्मनिरूपणपरक श्रीव शिष्ठसंहिता '**चत्वारः आश्रमास्तत्र वैष्णावानां महात्मनाम् । संन्यासो वानप्रस्थश्च गार्हस्थ्यं ब्रह्मचर्यकम् ॥**' यह श्लोक भी चार आश्रम का ही निरूपण करता है इतना ही नहीं श्रीवैष्णव महात्माओं का ब्रह्मचर्य गृहस्थ वानप्रस्थ एवं संन्यास चार ही आश्रम हैं ऐसा नियत करके बता दिये हैं आश्रम सम्बन्धी पूर्ण व्यवस्था की जानकारी हेतु श्रीवशिष्ठसंहिता का आश्रमधर्मनिरूपण प्रसंग को देखना चाहिये। अब इसमें, संक्षिप्त विचारणीय प्रश्न यह उपस्थित होता है-कि श्रीरामानन्दीय श्रीवैष्णवों का आश्रम कौन है ? स्मृति शास्त्र एवं महर्षि बोधायन श्रीपुरुषोतमाचार्यजी के गृहशेषसूत्र में निरूपित संन्यासविधि प्रकरण में उल्लिखित '**पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च सर्वभूतेभ्यश्च व्युत्थितोऽहं स्वाहा संन्यस्तं मया संन्यस्तं मया संन्यस्तं मया इति त्रिरुपाम्सूक्त्वा त्रिरुच्चैः त्रिसत्या हि देवाः**' विधान के अनुसार अविच्छिन्न परम्परागत सदा चार्यजी से श्रीरामशरणागति प्रसंग में उक्त प्रकार से हवन अर्थात् विरजाहोम सम्पादन से श्रीरामशरणागति स्वीकृत श्रीवैष्णव का आश्रम चतुर्थ होता है ब्रह्मचारी गृहस्थ या वानप्रस्थ नहीं। तो संन्यास आश्रमसेवी श्रीवैष्णव हेतु काषायवस्त्र का विधान है श्रीवाल्मिकीसंहिता में '**काषायं ब्रह्मसूत्रञ्च त्रिदण्डं धारयन्यतिः**' वाक्य उपलब्ध है इसके अनुसंधान से यह स्पष्ट अवगत होता है कि संन्यास आश्रमसेवी श्रीवैष्णव का परिधान काषाय है। ब्रह्मर्षि वशिष्ठजी के '**सहदण्डत्र येणान्या काषायाम्बरधारकाः । काषाम्बरश्वेतादि हरिन्निलं विनाम्बरा**' ऐसे दो वाक्य उपलब्ध होते हैं इनमें पूर्व वाक्य का अनुगम या स्वाध्याय करने से यह अतिस्पष्ट होता है कि त्रिदण्डधारी श्रीवैष्णवों को काषाय वस्त्र को ही धारण करना चाहिये। यदि त्रिदण्ड का ग्रहण न किये हों तो पक्षान्तर में श्वेत वस्त्र का भी धारण कर सकते हैं यह श्रीरामानन्दसम्प्रदाय के परम्परागत पाँचवें आचार्य ब्रह्मर्षि श्रीवशिष्ठजी का विधान है। इससे यह अर्थ निकालना असंगत होगा कि काषाय वस्त्र धारण श्रीवैष्णवों के लिए निषेध है इन दोनों प्रदर्शित वाक्यखण्डों का विशुद्ध अर्थ या तात्पर्य



इतना ही है कि त्रिदण्डधारियों को काषायवस्त्र धारण करना अनिवार्य है अन्य जिन्हों ने त्रिदण्ड का धारण नहीं किया है वे भी काषायवस्त्र का धारण करें यदि श्वेत वस्त्र का धारण करते हों तो भी शास्त्र मर्यादा विरुद्ध नहीं है। पर हरे नीले चितकबरे आदि वस्त्रों का धारण करना तो श्लोक के मूलाक्षर से ही स्पष्ट विरोध है। अतः ऐसे रंगी वेरंगी वस्त्रों का धारण श्रीवैष्णवों को नहीं करना चाहिये। ब्रह्मर्षि श्रीयुत वशिष्ठजी 'सोई गोसाई विधिगति जेही छेकी ! सकई को टारि टेक जो टेकी' हैं तो इनके विधान को शास्त्रकार या व्यवहार बहुत गौर से अनुभव करता है। सम्प्रति ब्रह्मर्षि श्रीवशिष्ठजी के विधानानुसार श्रीरामानन्दीय समाज में काषाय वस्त्र एवं सफेद वस्त्र परिधान दोनों श्रीसम्प्रदाय में प्रचलन देखने में आ रहा है एवं है। श्वेत वस्त्र परिधानापेक्षया काषाय वस्त्र परिधानवाले श्री वैष्णवों की प्रतिष्ठा समाज में विशेष देखने में आ रही है। भारत के कितने ही प्रान्तों के साधक सत्संगीवर्ग तो श्वेतवस्त्र धारी चतुर्थाश्रमी श्रीवैष्णवों को संन्यासी ही नहीं मानते हैं उन लोगों की दृष्टि में गृहस्थ एवं संन्यासी का भेदक अर्थात् इन दोनों को अलग करनेवाला काषाय वस्त्र परिधान ही है तो काषाय के अभाव में श्वेत वस्त्रधारी श्रीवैष्णवसंन्यासी को संन्यासी के रूपमें नहीं देखते हैं।

यह खूब स्मरण रखना चाहिये कि श्रीवैष्णवीय विरक्त एवं गृहस्थ दीक्षा में श्रीवैष्णवीय पञ्चसंस्कार का गृहस्थ और विरक्त दोनों में समान रूपसे विधान अर्थात् प्रयोग होता है विरक्त दीक्षा स्वीकार करनेवाले के लिये अतिरिक्त विधान महर्षि श्रीबोधायनजी के द्वारा विहित-'**लोकैषणाय स्वाहा पुत्रैषणाय स्वाहा वित्तैषणाय स्वाहा सर्वस्मात् व्युत्थितोऽहं सर्वेभ्यः अभयं मत्तः स्वाहा**' आदि वाक्यों के द्वारा विरजा प्रभृति होम का सम्पादन कर साम्प्रदायिक परम्परागत जिन सद् गुरुदेवजी से दीक्षा-शिक्षा प्राप्त की जा रही है। उन्हीं से अचला-लंगोटी लेने की प्रथा है उनकी गणना कुटीचक्र बहूदक हंस तथा परमहंस के रूप में उपनिषद् एवं स्मृतिशास्त्रों ने की है। इन सभी के उपयोग हेतु काषाय वस्त्र का ही विधान शास्त्रों में उपपव्ध होता है जिनमें कतिपय के नाम निम्न है-

श्रीवैष्णवीयसंन्यास आश्रम धारक के हेतु काषाय परिधान का विधान करनेवाले श्रीपराशरजी श्रीबोधायनजी श्रीक्रतुजी श्रीशंख एवं लिखितजी श्रीदेवलजी श्रीगालवजी श्रीजमदग्निजी श्रीजाबालिजी श्रीदत्तात्रयजी श्रीवशिष्ठजी श्रीवाल्मिकीजी श्रीभरद्वाजजी श्रीअत्रिजी श्रीसौनकजी श्रीसूतजी एवं पद्मपुराण कूर्मपुराण ब्रह्मवैवर्तपुराण महाभारत स्कन्दपुराण परमहंससंहिता नारदपरिब्राजकोपनिषद् श्रीआनन्दभाष्यकार जगद्गुरु श्रीरामानन्दाचार्यजी जगद्गुरु श्रीरामानन्दाचार्य श्रीरघुवराचार्यजी वेदान्तकेसरी प्रभृति हैं तथैव विरक्त श्रीवैष्णवीय संन्यास दीक्षा ग्रहण किये साधक के लिये शुक्ल वस्त्र का निषेध श्रीक्रतुजी श्रीबोधायनजी श्रीमेधातिथिजी श्रीवशिष्ठजी श्रीअत्रिजी संन्यासोपनिषद् शिवपुराण श्रीवाल्मिकीजी वह्वृच परिशिष्ट एवं नारदपरिव्राजकोपनिषद् प्रभृति में उपलब्ध होता है। श्रीवैष्णवीय संन्यास स्वीकृत सन्तों का चार प्रकार उपनिषद् एवं स्मृतिशास्त्रों में उपलब्ध होता है-कुटीचक्र बहूदक हंस एवं परमहंस। इन सभी का शास्त्रकारों ने इसप्रकार से विवेचन किया है। '**कुटीचक शिखायज्ञोपवीती दण्डकमण्डलुधरः कौपीनशाटी ककन्थाधरः पितृमातृगुर्वाराधनपरः पिठरखनित्रशिक्यादिमात्रसाधनपरः । एकत्रान्नादनपरः श्वेतोर्ध्वपुण्ड्रधारीत्रिदण्डः**' इति संन्यासोपनिषद् । **त्यक्त्वा सर्वसुखास्वादं पुत्रैश्वर्यसुखं त्यजेत् । अपत्येषु वसेत् नित्यं ममत्वं यत्नतस्त्यजेत् ॥ नान्यस्यगृहेभुञ्जीत भुञ्जानोदोषभाग्भवेत् । कामं क्रोधं च लोभञ्च तथेर्ष्या सत्यमेव च ॥ कुटीचकत्यजेत्सर्वं पुत्रार्थं चैव सर्वतः । भिक्षाटनादि-केऽशक्तो यतिः पुत्रेषु संन्यसेत् ॥ कुटीचक इति ज्ञेयः परिव्राट् त्यक्तबान्धवः** ॥ निर्णयसिन्धु

